गोवर्धन-ग्रन्थ-माला-21

भारत-सर्वकारीय-शिक्षासंस्कृति-मन्त्रालयेन सम्मानिता

कल्हणस्य राजतरंगिण्यां चित्रिता

# भारतीय-संस्कृतिः



डा० सुभाष वेदालंकार 'तनेजा'
एम.ए. (संस्कृत, वेद) पीएच.डी. साहित्याचार्य
एसोशियेट प्रोफेसर (रीडर) संस्कृत विभाग,
राजस्थान विश्वविद्यालय, जयपुर




संस्करण 1992

मूल्य 185/-

अलंकार प्रकाशन, जयपुर
74, तनेजा ब्लाक, आदर्श नगर, जयपुर

893/586

## द्वितीय-संस्करणम्

भारत-सर्वकारेण सम्मानिता मम् कृतिः 'कल्हणस्य राजतरंगिण्यां चित्रिता' भारतीय-संस्कृतिः' न केवलं भारतीयैरपितु विदेशस्थैः विद्वद्भिरपि हृदयेनाङ्गीकृताभिनन्दिता च ।

जर्मनदेशे समायोजिते विश्वपुस्तक-सम्मेलने भारतीयसर्वकारेण संप्रेषितेषु शतं संस्कृतग्रन्थेषु ममेयं रचना, 'महाकविः कल्हणः' इति च कृतिद्वयं बहुशोऽभिनन्दनं प्राप ।

'भारतीय-संस्कृतिः' इति ग्रन्थस्य प्रथम-संस्करणं चिरात् समाप्तमतिष्ठत्; तस्याश्चेदं द्वितीयं संस्करणं विद्वत्करपल्लवेषु समर्पयन् हर्ष-प्रकर्षमनुभवामि । प्रथम-संस्करणे मुद्रणवशात् मम प्रमादवशाद्वाज्ञानवशाच्च यानि कानिचित् स्खलितान्यतिष्ठन्, तानि संशोधितानि नाम, चित्राण्यपि वर्धितानि ननु । ममायं ग्रन्थो विश्वस्मिन् विश्वे भारतीय-संस्कृतेः प्रचाराय प्रसाराय च सक्षमश्चेत्तदात्मानं धन्यं मंस्ये ।

आशासे मान्या अध्येतारः इमं द्वितीयं संस्करणमपि स्वकण्ठहारं कृत्वा स्नेहातिशयं प्रदर्शयिष्यन्तीत्पलमतिविस्तरेण ।

गणतन्त्र दिवस 1992

विदुषां वशंवदः
**सुभाषो वेदालंकारः**

---

* शिक्षा मन्त्रालय भारत सरकार द्वारा अभिनन्दित
* प्रकाशक—मनीषा शास्त्री अलंकार, प्रकाशन, जयपुर
* द्वितीय संस्करण—गणतंत्र दिवस, 26 जनवरी, 1992
* मूल्य—भारत में 185/- विदेश में 90 डालर

# पुष्पाञ्जलिः

## भगिनी स्नेहलता



प्रियाया मे मनीषाया
याभिन्नहृदया सखी ।
साध्वी स्नेहमयी स्निग्धा
मुग्धा "स्नेहलता" स्मृता ।।
दिवि नक्षत्रभूताया-
स्तस्याः कीर्तिं स्मृतिं तथा ।
वितनोतु प्रबन्धोऽयं
सर्वदेशेषु दिक्षु च ।।

# प्राक्कथनम्

मान्या अध्येतारः ! 'कल्हणस्य राजतरङ्गिण्यां चित्रिता भारतीय-संस्कृतिः' इति संस्कृत-विषयमूरीकृत्य लिखितः प्रबन्धः भवादृशां विद्वत्तल्लजानां करारविन्देषु सहर्षप्रकर्षं समर्प्यते । महाकविना कल्हणेन स्वराजतरङ्गिणी अष्टसु तरङ्गेषु विभाजिता । कविवर्यम् च तमनुसृत्य मयापि स्वीयः प्रबन्धः अष्टतरङ्गैस्तरङ्गितः ।

प्रथम-तरङ्गे कविप्रवरस्य जीवन-परिवार-शिक्षा-विशेषता-विषये विस्तरशः लिखितमस्ति । द्वितीयस्तरङ्गः कवेः विख्यातकृतेः राजतरङ्गिण्या विस्तृतं समालोचनात्मकमध्ययनं प्रस्तौति । महाकाव्यरूपे तस्या गुणाः दोषाश्चापि परिगणिताः सन्ति । तृतीयतरङ्गे राजतरङ्गिण्याः राजवंशावल्या इतिहासदृष्ट्या विवेचनं मया प्रस्तुतम् । राजतरङ्गिणी खलु भारतेतिहासस्य, संस्कृत-साहित्यस्य च तिथिक्रममनुसृत्य लिखितः प्रथमः सुलभः इतिहासग्रन्थो वरीवर्ति । अद्यापि कश्चिदपि भारतेतिहासवेत्ता, तल्लेखकश्च तामनधीत्य न किञ्चिदुल्लिखितुमुत्सहते । अनेनैव निमित्तेन मया, राज्ञामितिहासः, गुणदोषविवेचनपुरस्सरं प्रस्तुतः । चतुर्थतरङ्गे भारतीय-संस्कृतेः महत्त्वं, कमनीय-स्वरूपं, स्रोतः, गुणाः, विशेषताश्च प्रतिभान्ति । पंचमतरङ्गे भारतीय-संस्कृतौ समाजस्य चित्रं, चित्रितं खलु ।

अस्मिन् तरङ्गे पारिवारिकजीवनम्, आर्थिक-जीवनं, राजनैतिकजीवनम् चेति तिस्रो धाराः प्रवहन्ति । प्रथमायां तावत् गृहवस्तूनि, वेश-भूषा, उत्सवविनोदाः, इत्यादि-विषयाः संगृहीताः खलु, तदुत्तरञ्च वर्णव्यवस्था, जाति-सती-यौतुकप्रथाः विवाहः इत्यादिषु प्रकाशः निपातितः । आर्थिक-जीवने भारतस्यार्थिक-समृद्धेः विविध-व्यवसायानां यातायात-साधनानां च वर्णनं विद्यते । राजनैतिक-जीवने, देशस्य शासनव्यवस्था,दंडविधिः, युद्धनीतिश्च विस्तरेण वर्णिता ननु । षष्ठस्तरङ्गः नैकधारासु प्रवाहितस्य भारतीय-धर्मस्य, दर्शनानाञ्च प्रचारमुल्लिखति । पूज्यानां देवी-देवतानां, मंदिर-यज्ञ-संस्कारप्रभृतीनां सृष्टि-मोक्ष-स्वर्ग-नरकादीनां स्वरूपं महत्त्वं च तत्र प्रतिपादितम् । सप्तमस्तरंगः भारते समधिगत-प्रसाराणां काव्य-नाट्य-संगीत-नृत्य-स्थापत्य-चित्र-मूर्ति-कलानां परमरमणीयं रूपं गरिमाणं च प्रदर्शयति । अष्टमतरङ्गे भारतीयसंस्कृतौ विद्याया महत्त्वं प्रदर्श्य विविध-विद्याभेदानां, तद्विषयाणां, स्थानानां च वर्णनं सम्पादितम् । यथा स्थानं चित्राण्यपि संयोजितानि ।

इत्थञ्चाष्टतरङ्गेषु भारतीय-संस्कृतेः सारो मया समुपस्थापितः । यथाशक्ति सरला सुबोधा च शब्दावलिः प्रयुक्ता येन कोविदैः सह छात्रा अपि संस्कृतेः स्वरूपं जानीयुः ।

## कश्मीर-यात्रा

कल्हण: कश्मीर-मण्डलस्य परिहासपुरे जनिं लेभे तत्रैव च स्वकृतिं लिलेख । अतःप्रत्यक्षन्तु राजतरङ्गिण्यां कश्मीराणामेव, प्रसङ्गवशादन्यप्रदेशानाञ्च स्पर्शेन समस्त-भारतस्य संस्कृतेः चित्रं स्फुटं प्रतिभाति । इदं चावगत्य मया 1967 खीष्टाब्दे 1971 खीष्टाब्दे च विस्तरशः कश्मीरयात्रा सम्पादिता । तत्र च श्रीनगरे स्थितस्य संग्रहा-लयस्य पुस्तकालयस्य च संचालकानां श्री पी०एन० पुष्पमहोदयानां सहयोगेन पथ-प्रदर्शनेन च राजतरङ्गियामुल्लिखितानि अधस्तनानि स्थानानि सम्यक् विलोकितानि । **कोष्ठे स्थानानां वर्तमाननामानि लिखितानि सन्ति ।**

श्रीनगरं पुराणाधिष्ठानम् (पौन्ड्रेथन), नीलनागः (वेरीनाग) अनन्तनागः, अमरेश्वरतीर्थम् (अमरनाथ) मार्तण्डपत्तनम् (मटन) शेषनागः, पञ्चतरणी, विजये-श्वरतीर्थम् (विजविहारा), अवन्तिपुरम्, पद्मपुरम् (पोम्पुर), तूलमूल्यम् (क्षीरभवानी) चक्रधरः (चकधर), शंकरपत्तनम् (पट्टन), प्रतापपुरम्, (तापर), वाराहक्षेत्र-तीर्थम् (बारामूला), हुष्कपुरम् (उष्करा) सुय्यपुरम् (सोपूर) महापद्मजलाशयः (वूलरलेक), परिहासपुरम् (परोसपुर), वन्दीपुरम्, (बंडीपुरा) गुप्तगंगा, सुरेश्वरीक्षेत्रम् (निशात-शालिमारोद्यानक्षेत्रान्तिकम्) इत्यादि ।

एतेषु स्थानेषु मया नैकेषां प्राचीनमन्दिराणां, विहारस्तूपप्रभृतीनां भग्ना अपि, भारतीय-संस्कृतेः द्योतकाः प्राचीनकलायाश्च चरमोत्कर्ष-सूचका अवशेषा विलो-किताः, महती च ज्ञानवृद्धिः मम संजाता । तत्रत्यैः बहुभिः पंडितैः यवनवृद्धैश्च नैकविधाः दन्तकथाः लोकश्रुतयश्चाकर्णिताः । बिजबिहारानगरे तावत् पं० प्रेमनाथ इति कश्मीरेषु विख्यातेन दैवज्ञप्रवरेण पूर्वज-वंशपरम्परया लिखितः सुरक्षितश्च विजयेश्वरक्षेत्रस्य विस्तृतः इतिहासः प्रदर्शितः । तस्य पंडित-प्रवरस्य समीपे राज-तरङ्गिण्याः षट्शतवर्षपूर्वम् लिखिता हस्तलिखिता प्रतिः आसीत्, महता प्रयासेन सा प्रतिः तत्पूर्वजैः खलु सुरक्षिता । तस्मात् च कोविदात् सर्वकारेण क्रीता सा प्रति मया श्रीनगरस्य पुस्तकालये विलोकिता । श्रीनगरस्य संग्रहालये मया राजतरङ्गिण्याः नैकराज्ञां स्वर्णरजतमुद्राणां, प्राचीनवस्तूनां, शस्त्रास्त्राणां, उक्तस्थानेभ्यः आनीता-नाञ्च अद्भुतप्रतिमानां सम्यगदध्ययनं विहितम् । येन च मम प्रबन्धलेखने महत्सा-हाय्यमाचरितम् । पुस्तकालयस्य बहूनि पुस्तकान्यपि मयाधीतानि यैः महती मे ज्ञानवृद्धिरभवत् ।

## मथुरा-नालन्दा-प्रभृतीनां यात्रा

प्रबन्धलेखनात् पूर्वम् न केवलं मया कश्मीर-यात्रा एव सम्पादिता, अपितु, मथुरा-नालन्दा-पाटलिपुत्र-हरिद्वार-कुरुक्षेत्र-दिल्ली-वाराणसी-सारनाथ-कुशीनगर-उज्ज-यिनी-राजगृह-जलेश्वर-जनकपुर-दरभङ्गा-बैंगलोर-मैसूर-प्रभृतीनां नगराणामपि यात्रा कृता । जयपुर-मथुरा-पाटलिपुत्र-दिल्ली-हरिद्वाराणां संग्रहालयेषु मया शतशः मूर्तीनां

प्राचीनवस्तूनां चाध्ययनं विहितम् । नालन्दा-विश्वविद्यायस्य भग्नावशेषान् विलोक्य प्राचीन-विहार-स्तूप-मठानां रमणीयं रूपं कल्पितम् । राजतरङ्गिण्यामुल्लिखितं उज्जयिनी-कुरुक्षेत्र-वाराणसी-तीर्थम् मया तीर्थ-दृष्ट्या दृष्ट्म् । तत्रैव प्राचीन-मंदिराणि अपि विलोकितानि । सारनाथे विशाल-संग्रहालये बौद्धधर्मस्य ज्ञानकर्तृणि नैकवस्तूनि मया दृष्टानि । एतेषां सर्वेषां स्थानानां यात्राभिःमहान् मे लाभः समजनि ।

**आभारप्रदर्शनम्** — भगवन्तः चिरात् महता कष्टेन चायं प्रबन्धः प्रकाशं याति । विगतवर्षचतुष्टये मौलिक-रचनासु सततं ममाभिरुचि र्वर्धते, तादृक्रचनानां लेखने प्रकाशने च प्रेरणादातारः मार्गदर्शकाश्च श्रद्धेयगुरुवर्या डॉ० रामचन्द्रद्विवेदि-महाभागा वर्तन्ते । तेषां सदुपदेशेनैव मानापमान-द्वेष-घृणादिकं विस्मृत्य लेखन-कर्म-निरतोऽहम् । अस्य ग्रन्थस्य त्वरया प्रकाशनं तेषामेव कृपया सम्पन्नम् ।

अस्य ग्रन्थस्यावरणपृष्ठस्य कल्पनापि तेषामेव विद्यते । समये-समये तेषां यः सहयोगः परामर्शो वा मया लब्धस्तदर्थं ते धन्यवादार्हा ननु । विद्वत्तल्लजाः श्रद्धेय गुरुप्रवराः मदनमोहनशर्मा-महोदयाः पदे-पदे सुखे वा दुःखे वा मम मार्ग-दर्शनं कुर्वन्ति, यथाशक्ति साहाय्यं कृत्वा सर्वकार्येषु ममोत्साहं वर्धयन्तीति तेषां कृतेऽपि धन्यवादाः ।

ग्रन्थमिमं सौम्यमूर्तीनां तपः पूतानामितिहासज्ञानां कोविदाग्राणां श्रद्धेय-गुरु-चरणानां डॉ० पुरुषोत्तमलाल-भार्गवानां पादारविन्दयोः समर्पयन्नहं धन्यमात्मानं मन्ये, वस्तुतः तेषां मार्गदर्शने एवायं ग्रन्थो मयालेखि ।

भगवन्तः ! संस्कृत-ग्रन्थ-प्रकाशनमतिकठिनं नाम, मुद्रणालयभृत्यानां संस्कृतात् भयम् संयुक्ताक्षराणामभावः प्रूफ-पाठकानामभावः मुद्रणालयेन चाधिकधनस्य याचना चेति बाधाः भवन्ति । तथापि अलङ्कार-प्रकाशन-जयपुरेण प्रकाशनस्य, भूलेलाल-मुद्रणालयेन च मुद्रणस्य या क्लिष्टा व्यवस्था कृता तदर्थं तयोः स्वामिनः धन्यवार्हाः खलु । प्रियजसवीरकौरस्य सहयोगायापि धन्यवादाः ।

सादरं प्रार्थ्यन्ते सहृदया विद्वांसो यत् ग्रन्थ-विषये स्वसम्मतिप्रदानेनानु-गृह्णन्त्विति । ममाज्ञानवशात् मुद्रक-भृत्यानां प्रूफपाठकानां वा प्रमादवशाच्च यानि स्खलितानि समागतानि तेषामुल्लेखं कृत्वा उपकुर्वन्तु मामिति किं बहुना ।

जयपुरम् — विदुषां वशंवदः

15-4-83 — सुभाषो वेदालङ्कारः

# अनुक्रमणिका

# कह्लणस्य जन्मभूमिः परिहासपुरम्



ललितादित्य-निर्मित-
राजविहारस्यावशेषाः ।

पृ. ३, ७०, २६६



ललितादित्य-निर्मित-
चैत्यस्यावशेषाः

पृ. ३, ७०, २७०



परिहासपुरे (संप्रति
परोसपुर) ललितादित्य-
स्य राजविहारे, स्थिता
भग्ना नृसिह-मूर्तिः ।

पृ. ३, ७०

## प्रथमः तरङ्गः

# महाकविः कल्हणः

कश्मीरमंडलं खलु कवीनां जन्मस्थलं वरीवर्ति। बिल्हणशब्देषु कविताविलासास्तत्र तथैव सामान्येनावाप्यन्त यथा कुंकुम-केसराः। शारदा-देव्या महदनुतम्पया बहुभिः कविपुंगवैस्तन्मण्डलं पवित्रीकृतम्। कविवर्येषु च महाकविः कल्हणः मूर्धन्यो नाम। स हि न केवलं कश्मीराणामपितु समस्तभारतभुवः बहुश्रुतः, बहुपठितः, बहुचर्चितः, विद्वान्, पंडितः कविः, महान् इतिहासकारश्च आसीत्। भासो यथा नाटकक्षेत्रे, कालिदासो यथा काव्यक्षेत्रे, बाणश्च यथा गद्यकाव्यक्षेत्रे अग्रण्यः तथैव ऐतिहासिककाव्यनिर्माणे कल्हणः सर्वानपि कवीनतिशेते इत्यत्र न संशयावकाशः।

दुर्दैवात् कवेः जीवनदर्शनस्य, पांडित्यस्य, कवित्वस्य, कृतित्वस्य च ज्ञानाय नोपलभ्यते तत्कालीनं लिखितमितिवृत्तं, प्रबन्धो निबन्धो वा कश्चित्। जोनराजस्य कृतिं व्यतिरिच्य तन्नामापि न क्वापि विलोक्यते। केवलं तस्य लब्धा कृतिः राजतरंगिणी एव वर्तते तथाविधो निर्मलादर्शः, यत्र कवेः समेषामपि गुणानां प्रतिच्छाया प्रतिबिम्बिता खलु।

अष्ट-तरंगेषु विभक्ताया राजतरंगिण्याः प्रत्येकं तरंगस्यावसाने पंक्तिरियं शब्दान्तरेषु विद्यते–

''इति काश्मीरिक-महामात्य-चम्पक-प्रभु-सूनोः कल्हणस्य कृतौ राजतरंगिण्यां....तरंगः

स्पष्टमनया पंक्त्या यत् कल्हणः चम्पकस्य तनयः अवर्तत। नैकपद्येषु चम्पकस्य गुणाः चरितञ्च ससम्मानं वर्णितं कविना। प्रथमन्तावत् हर्षराज्ये द्वारपतिपदे नियुक्तः स नेत्रपथमायाति[1]। 1099 खीष्टाब्दात् पूर्वम् दरदसीमायां विद्यमानस्य दुग्धघातदुर्गस्य[2] विजयाय, चम्पक–प्रयासः ससम्मानं वर्णितो ननु। दुर्गः दरदनृपतेरधीन आसीत्[3], न सुकर आसीत्तस्य विजयः, तथापि द्वाराधिपः चम्पकः हर्षस्याज्ञया विजयाय प्रतस्थे, मधुमतीं च सरितं सबलः तीर्त्वा दुर्गम् परितः अवेष्टयत्[4]।

---

(1) 7-1177। (2) 7-1171।
(3) 7-1173। (4) 7-1179।

हर्षस्य, राज्याय जीवनाय च प्रवर्तमाने संघर्षे चम्पकः केषुचिदेव राजभक्तेषु वर्णितः अस्ति यै र्नंनु आपद्ग्रस्तस्य स्वामिनः साहाय्यं न परित्यक्तम्[5]। राजा स्वयमपि तद्राजभक्तिं वर्णयति[6]। तनयविरहव्याकुलः स यदा, महत्यामपि विपत्तौ, चम्पकं भोजदेवस्यान्वेषणायादिदेश[7], स प्राह भगवन् न मामस्यां विपत्तौ स्वसामिप्यात् दूरं प्रेषयेति[8]। किन्तु पुत्राभावे जगदन्धं मन्यमानो नरपतिस्तं प्रेषयत्येव[9]। अस्मिन् वार्ताप्रसंगे उभयोः मध्ये प्रवर्तमानः संवादः इतिहासदृष्ट्या यथार्थ एवास्ति। संभवतः कल्हणस्तत् घटनाचक्रं चम्पकमुखात् श्रुत्वैव लिलेख। स्टीन-महोदयः अपि अस्य पुष्टिं करोति।

"अश्वनिमित्तं प्रवर्तितस्य कलहस्य सूचिकाया एकस्या घटनाया अप्युल्लेखो वर्तते यां हि केवलं चम्पक एव जज्ञौ, तत्र विद्यमानेन संवादेनापि कल्हणः मन्त्रितनयः अभूदिति ज्ञायते।[11]

चम्पककल्हणयोः पितृपुत्रसम्बन्धे ज्ञाते, अनुमीयते यत् कल्हणः स्वपितुः साहचर्येण तत्कालीनं समस्तमपि वृत्तं सम्यगबुध्यत्। अत एव अन्यैः वर्णनैः समं हर्षस्य राजधानीतः पलायनवृत्तमपि यथार्थम् चित्रितं चकार[12]। हर्षस्य पलायन-समये तस्य गुप्तवासे[13] च प्रयागः, चम्पक-महानस-भृत्यः मुक्तश्चावशिष्टावास्ताम्[14], राज्ञा समं कुटीरे स्थितः प्रयागस्तु शस्त्रिभिः वेष्टितः सन् निहतः, पार्थिवः अपि छिन्नमूलो द्रुम इव तत्रैव पपात[16]। मुक्तस्तु दैवात् ततः पलायांचक्रे[17] संभवतः हर्षस्यान्तिमदिवसानां पूर्णम् वृत्तं कल्हणः तस्मादेव वेद।

कल्हणपिता चम्पकः प्रकृत्या धर्मप्रिय आसीत्। शिवभक्तः स नन्दिक्षेत्रे गत्वा शिवभक्तिं चकार,[18] पूजादानादिकर्मभिः, स्वोपार्जितां सम्पत्तिं च सफलामकार्षीत्।

नन्दिक्षेत्रे व्ययीकृत्य प्रत्यब्दं सप्तवासरान्।
चम्पकः सफलां चक्रे सर्वकालार्जितां श्रियम्॥

तस्य जीवनस्यान्तिमो भागः नन्दिक्षेत्रे एव व्यतीतः अभूत्[19]। कल्हणः अपि संभवतः पित्रा सह नन्दिक्षेत्रं जगाम तीर्थाटनाय, अत एव तस्य वर्णनं यथार्थम् वर्तते।[20]

---

(5) 7-1586। (6) 7-1588।
(7) 7-1588। (8) 7-1588।
(9) 7-1589, 1592। (10) स्टी० राज०—भाग 1।
(11) 7-1591। (12) 7-1624।
(13) 7-1713। (14) 7-1698, 1701।
(15) 7-1700, 1710। (16) 7-1712।
(17) 7-1601, 2। (18) 7-954।
(19) 8-2365। (20) 1-35, 107।

अष्टमतरंगस्य "नन्दिक्षेत्रे स तत्राद्यः प्रणीतश्चम्पकादिभिः[21] । इति पद्येनावगम्यते यत् 1136 खीष्टाब्दे अपि चम्पको जीवित आसीत् ।

पितृव्यः कनकः—केषांचित् पद्यानां सूक्ष्माध्ययनेन, कल्हणस्यापरः सम्बन्धी कनकः दृश्यते । चम्पकस्य अनुजः स वर्णितः –

स्वशिष्यस्तेन तस्यासीद्गायनः कनकोऽथ सः ।
चम्पकावरजः खेदात् गीताभ्यासकृतोद्यमः[22] ।।

स खलु महान् गायकः अभूत् । तत्संगीतेन हृष्टस्तद्गुरुः हर्षः कांचनदीन्नाराणां लक्षं तस्मै ददौ । परिहासपुरे स जनिं लेभे[23] । कनकः हर्षस्य शिष्यः स्वामिभक्तश्च सेवकः अभवत्, तत्सम्मान-रक्षार्थं च सुस्सलसमुदायान्निष्क्रम्य देशान्तरं ययौ, वाराणसीं च गत्वा त्यक्तप्राणः राज्ञः हर्षस्य अनुचरेषु कृतज्ञतापूर्णम् स्थानं लब्धवान्[24] ।

संगीतज्ञः असौ हर्षनृपति परिहासपुरमन्दिरस्य बुद्ध-प्रतिमां याचित्वा तां ररक्ष, अपराञ्चैकां मूर्तिम् बौद्धश्रमणः कुशलश्रीः अरक्षत्[25] । कनकश्रमणयोरेकस्मिन्नेव पद्ये वर्णनेनेदमपि निर्णेतुं शक्यते यत् कनकः अपि केनापि प्रकारेण बौद्धधर्मेण समं सम्बद्ध आसीत् ।

इत्थं च कनके कल्हणस्य पितृव्ये, चम्पके च पितरि सिद्धे, उभयोश्च सम्मानं वीक्ष्य, असंशयमेव, कविपरिवारस्य राजसभायामतीव प्रतिष्ठासीदिति कल्प्यते ।

**कल्हणस्य जन्मस्थली**–"**परिहासपुरे जन्ममेदिन्यां कनकाभिधः**"[26] इत्यनेन परिहासपुरं कनकजन्मभूमिं विदित्वा नेदमनुमातुमसमीचीनं यत् कविपरिवारस्य मूलस्थानं परिहासपुरमभूत् । इदं परिहासपुरस्य पवित्र-भवनानां मन्दिराणाम्, मूर्तीनाम्, प्रासादादीनाञ्च सूक्ष्मवर्णनं विलोक्य, तस्य भौगोलिक-वर्णनस्य च बहुश उल्लेखेनापि संपुष्टं जायते[27] । (एतेषां विस्तृतं वर्णनं कलाध्याये विलोकनीयम्) अतः कल्हणस्यापि जन्मस्थानं परिहासपुरमभूत् इति मम मतमस्ति ।

**कल्हणस्य जातिः**—जात्या कल्हणः ब्राह्मण आसीत् । तस्य जनकः जात्या द्विजः अभूत् । ब्राह्मणान् प्रति विलोक्यते कवेः पौनः पुन्येन पक्षपातः । असकृच्च स भूदेवान् तानभिधाय तन्महत्वं गौरवञ्च प्रदर्शयति । तन्मते द्विजानां धैर्यम् ननु अकुण्ठितं भवति, स्वर्गम्, धरां, रसातलं च क्षणेनैव ते दग्धुं प्रभवन्ति स्वक्रोधाग्निना[28] । यशस्कर-वर्णन-प्रसंगे कविस्तान्, राज्यप्रदान्, वन्दनीयान्, दैवततुल्यांश्चालिखत्[29] । अनुचितैरपि तत्प्रायोपवेशैः समं सहानुभूतिः कविना प्रदर्शिता, नैकस्थले द्विजेभ्यः स्वर्णाग्रहारादिदानं कविः वर्णितवान् । (ब्राह्मणानां विषये कविविचाराः जाति-प्रसंगे विलोकनीयाः) इत्थं ब्राह्मणानां मुहुर्मुहुः प्रशंसा कल्हणस्य द्विजत्वमनुमापयति ।[30]

---

(21) 8-2365 । (22) 7-1117 ।
(23) 7-1098, 1118, 8-12 । (24) 8–12, 13 ।
(25) 7–1097, 98 । (26) 7–1098 ।
(27) 4–194, 204 से 323, 5–97 से 100, 7–1326, 44 ।
(28) 4–631, 42 । (29) 6–2, 3 ।
(30) 8–2227 ।

**कल्हण-धर्मः**—पुरातन-कालादद्यावधि "**शैवधर्मः**" एव काश्मीरवासिनां प्रधानधर्मः अस्ति। कल्हण-समये अपि शैव-सम्प्रदाय एव प्रसिद्धतम आसीत्। शिवस्तत्र पूज्यते। राजतरंगिण्या अध्ययनं कल्हणं शिवभक्तं प्रतिपादयति। प्रत्येकं तरंगस्य मंगलाचरणे अर्धनारीश्वरस्य, शिवस्य स्तुतिरस्ति यत्र खलु शिवपार्वत्योः संयुक्तमूर्तिर्दृश्यते[31]। (धर्मप्रसंगे अर्धनारीश्वर-शिवस्य स्वरूपं विस्तरेण प्रदर्शितं खलु।

कल्हणस्य पिता चम्पकः प्रायेण तीर्थाटनं चकार। नन्दिक्षेत्रे गत्वा स भूतेशं शिवमानर्च।[32] पितुश्च प्रभावः पुत्रे अपि अनिवार्य एव।

पंचम-तरंगे शैव-सिद्धान्तस्य व्याख्यातॄणां, कश्मीरमंडलस्य विदुषामन्यतमस्य भट्टकल्लटस्य ससम्मानं कविरुल्लेखमकार्षीत्।[33] शैवसिद्धान्ताः कवेरविज्ञाता नासन्।

तान्त्रिकाणां तेषां सिद्धान्तानामपि, नैकवारं वर्णनं प्राप्यते, तान्त्रिकधर्मश्च शैवसम्प्रदाये शिवपूजया सह सम्बद्धः अस्ति। कल्हणः तन्त्र-ग्रन्थानधीतवानिति प्रतीयते। कदाचित्तु कविः तान्त्रिक-सिद्धान्ते प्रमत्तानां तान्त्रिकाणां शैवानां च कार्येषु आक्षेपमपि विदधाति।

**बौद्धधर्मे अभिरुचिः**—शैवस्यापि कल्हणस्य बौद्धधर्मे रुचिः नैकशो दृष्टिगोचरा भवति। प्रथमतरंगस्य, अशोकनृपतेः प्रारभ्य, अष्टमतरंगस्य जयसिंहभूपतिपर्यन्तं, राज्ञां दीर्घपरम्परा बौद्धधर्मे रुचिं धत्ते, सहस्रशः बौद्धविहाराणां, स्तूपानां, चैत्यानाञ्च निर्माणे ते संलग्ना दृश्यन्ते। कल्हणः अपि ससम्मानं तेषां वर्णनमकार्षीत्। (एतेषां विषये विस्तृतं वर्णनम् स्थापत्यकला-प्रसंगे द्रष्टव्यम्), न केवलं विहारादीनां वर्णनमेव बौद्धधर्मे कवेः रुचिं प्रदर्शयति, अपितु अन्ये अपि संकेतास्तत्र प्रमाणम्। कविः मेघवाहन-नागार्जुन-सदृशान् बौद्ध-भूपतीन् प्रशशंस। यतस्तैः बौधधर्मप्रतिपादितामहिंसामंगीकृत्य स्वराज्ये जीवहिंसा-निषेध उद्घोषितः। यज्ञे अपि च पशुहिंसा निवारिता अहिंसाया आज्ञां सम्मानयितुं च जययात्राः सम्पादिताः।[34]

कल्हणः भगवतो बुद्धस्य तन्निर्वाणस्य, सर्वलोकानुकम्पिनां बोधिसत्वानां च पौनः पुन्येनल्लेखमकार्षीत्। बोधिसत्वानां लक्षणं गुणांश्चापि स लिलेख।[35] प्रथमतरंगे राज्ञः-जलौकस्य वर्णनप्रसंगे एका कृत्यादेवीकथा वर्णिता वर्तते, सापि कल्हणस्य बौद्धधर्मे सहानुभूतिं सूचयति।[36] शतशः बुद्ध-प्रतिमानामपि कविः वर्णनं व्यदधात् (तासां विस्तृतं वर्णनं-मूर्तिकलाप्रसंगे अवलोकनीयम्)।[37] अपि च कल्हणः स्थाने-

---

(31) 1–1, 2, 2–1, 3–1, 4–1, 5–1, 6–1, 7–1, 8–1।
(32) 7–954, 8–2365।
(33) 5–66।
(34) 1–27, 3–4, 7, 75, 76।
(35) 1–139, 3–7, 1–134, 35, 38, 39, 3–4, 28, 8–2234 2574।
(36) 1–131 से 147।
(37) 3–355, 464, 4–300, 259, 61, 62, 63, 507, 6–172, 8–1184, 7–1097।

स्थाने बौद्धपरम्पराणां, सिद्धान्तानाम्, तत्प्रतिपादकपारिभाषिक-शब्दानाञ्च, उल्लेखं चकार। बोधिसत्व-अहिंसा-क्लेश-बोधिपरनिर्वृति-सर्वार्थसिद्धि'प्रभृतयः शब्दा अत्रोल्लेखनीया ननु।[38] इत्थं च सम्यगवगम्यते बौधधर्मे कवेरभिरुचिः।

कल्हणस्य अध्ययनम्—कल्हणः कुत्र किं किं चाधीतवानिति न तेन क्वापि लिखितं स्पष्ट-शब्देषु। किन्तु राजतरगिण्याः बहून् संकेतान् वीक्ष्यास्माभिः कवेः तद्विद्यार्थिजीवनविषयेऽस्य विस्तरेण ज्ञातुं शक्यते।

(1) कविः कल्हणः —"सुकवेः स गुणः श्लाघ्यो ननु येन स अमृतास्वादमप्यधः करोति येन च तस्या, वर्णितानां नृपति-प्रभृतीनां च कीर्तिः स्थैर्यम् याति", "को नाम कवि-प्रजापतिमतिरिच्य, अतिक्रान्तं कालं प्रत्यक्षीकर्तुं क्षमः"[39] एतैः शब्दैर्भूमिकामारभ्य कल्हणः कस्यापि कवेः गुणानामुल्लेखं विधाय च स्वात्मानं कविरूपे प्रस्तौति। तस्मात् कवये यादृशमध्ययनमनिवार्यमस्ति तादृशं कल्हणेनापि कृतं स्यादिति अनायासेनैव अनुमातुं शक्यते। आचार्यप्रवरा आहुः यत् कविपदप्राप्तुकामाय लेखकाय साहित्यशास्त्रालंकारशास्त्र-व्याकरणेतिहास-नैकविधकाव्य-प्रभृतीनाम ययनमत्यावश्यकं नाम। कल्हणः अपि बहुभिः संकेतैः सूचयत्यस्मान् यत्तेनाप्येतेषां गम्भीराध्ययनं सम्पादितम्।

(2) साहित्यशास्त्रम्—एकस्मिन् पद्ये स वदति कथादैर्घ्यानुरोधेन वैचित्र्ये (अलंकार-सौन्दर्ये) एव मया समयो न नीतस्तथापि विदुषां सहृदयानां चाल्हादाय किंचित् रमणीयं रसालंकारादिवस्तु मम काव्ये अस्त्येव। इत्थं च कविः साहित्य-शास्त्राध्ययनस्य सूचनां ददौ। साहित्यशास्त्र-ग्रन्थेषु प्रचलितानां पारिभाषिक-शब्दानां, सिद्धान्तानां चासकृत् कल्हणेनोल्लेखो विहितः, इमानि पदानि खल्वत्र प्रमाणम्।

**........सुधास्यन्दास्कन्दी ...स .......सुकवेर्गुणः, यशः कायः, कीर्तिकायस्य, रम्यनिर्माणशालिनः, संवेद्यान् भावान् प्रतिभया यदि, वैचित्र्यौऽप्यपपंचिते ....वस्तु यत् प्रीतये सतां, वाच्यप्रकाशने दुष्टवैदुष्य-तीव्रा, गुणवान्, रागद्वेष-बहिष्कृतः, कवि-कर्मणि ....निर्दोषः, नमः कविकर्मणे, भेषज्यमृतसंवादिकथा. मूर्धाभिषेकः शान्तस्य रसस्य, संक्रान्त-प्राक्तनानन्तरव्यवहारः ....सुचेतसः ...संदर्भः हृदयंगमः, अमन्दरसस्यन्द-सुन्दरा, तरंगिणी-मधुमती वाणी च कवि-सेविता।**[40]

इत्यादिषु पदेषु न केवलं काव्यसिद्धान्ता एव संगृहीताः किन्तु काव्य-कारण-प्रयोजनात्मादीनामपि सकेतो विहितः। (सर्वेषामप्येतेषां पदानां विस्तृत-व्याख्या-काव्यकलाप्रसंगे कृतास्ति।

अपि च राजतरंगिणी, कैश्चित् मौलिकगुणैर्युक्तं, आचार्यैः प्रतिपादितैः काव्यलक्षणैः सम्पन्नं महाकाव्यमस्तीत्यनेनापि, साहित्यशास्त्रे कल्हणस्य परिश्रमः सम्यगवगम्यते।

---

(38) 1–135, 37, 38, 39, 72।

(39) 1–3, 4।

(40) 1–6, 3, 45, 4, 5, 6, 7, 18, 13, 21, 22, 23, 37।

अन्यच्च केषाञ्चित् साहित्यशास्त्र-ग्रन्थानां, लेखकानां चापि स्पष्टमुल्लेखः कविना कृतः । तेषु साहित्यशास्त्र-प्रणेता भट्टोद्भट्टः, आचार्यः वामनः, शंकुकः, ध्वन्यालोककारः आनन्दवर्धनाचार्यः कविकण्ठाभरणविरचयिता क्षेमेन्द्रः, इत्यादयो आचार्या लेखकाश्चः प्रमुखाः सन्ति, तेषां ग्रन्थानि कविरधीतवानिति कल्प्यते ।[41]

(3) **काव्यानामध्ययनम्**—अनेकेषां काव्यानामपि कल्हणः, अध्ययनं चकारेति कल्पना नैककवीनां, तत्काव्यानां चोल्लेखेन कर्तुम् शक्यते । **"विलोक्यान्य-निबन्धांश्च कार्यः काव्यक्रियादरः"** इति भामह-वचनं कविः पालितवान् ।

**कालिदास-काव्यानि**—महाकवेः कालिदासस्य काव्यानां विशेषतश्च **"रघुवंशस्य"** कविः ऋणी वर्तते, नैकस्थलेषु भाषाभावानां समानता दृश्यते, सप्तम-तरंगे (7–312) कुरूपा दुर्दैवहता निगदिताः सन्ति । रघुवंशे अपि (12–43) अयं विचारः प्राप्यते ।

**हर्षचरितम्**—बाणस्य "हर्षचरितम्" सूक्ष्मतयाधीतम् कविना । विरल-प्रयोगाणां शब्दानां, सूक्तीनां, अन्येषां नैकविधपदानां, भाषायाश्च प्रयोगे हर्षचरिते, राजतरंगिण्याञ्च विद्यमाना समानता हर्षचरितस्य गम्भीराध्ययनं सूचयति । दृष्टान्ताय कानिचित् पदानीमानि विलोकनीयानि खलु ।

| हर्षचरितम् (पृ० निर्णय सागर प्रेस 1892) | राजतरङ्गिणी |
|---|---|
| 20–अगणय्याप्यवगणा | सगणो वगणो वास्तु 8–21,26 |
| 50–सम्फुल्लमल्लिकाधवलाट्टहासो महाकालः | उत्फुल्ल-वकुलच्छविः । अट्टहासः कृतान्तस्य 4–50 |
| 69–कल्याणाभिनिवेशी | कल्याणाभिनिवेशिना |
| 77–तेजसः परमाणुभिरिव केवलैः निर्मितम् | तैजसैरेव ससृजे परमाणुभिः 7–874 |
| 79–भास्वद्बिम्बधरेण प्रसन्नावलोकितेन चन्द्रमुखेन कृष्णकेशेण-वपुषा सर्वदेवावतारमिव । | भास्वाद्बिम्बधरां कृष्णकेशीं सर्वदेव-मयीव 3–416 |

एतादृशानि समान-शब्द-युक्तानि पदानि त्रिंशत् वर्तन्ते राजतरंगिण्यां हर्ष-चरिते च ।

**विक्रमांकदेव-चरितम्**—पूर्ववर्तिनः बिल्हणमहाकवेः विक्रमांकदेवचरितमपि कल्हणेन नैकवारमधीतम् । बिल्हणप्रदर्शितं इतिहासघटनाद्वयं कविः स्वकृतौ उल्लिलेख । तस्य च कवेः उपाधिं नामापि च ददौ ।

(1) कश्मीरेभ्यो विनिर्यातं राज्यं कलशभूपतेः ।
विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः ॥7-135॥

(2) प्रसर्पतः करटिभिः कर्णाटकटकान्तरे ।
राज्ञोऽग्रे ददृशे तुंगं यस्यैवातपवारणम् ॥7-936॥

(41) 4–494, 497, 705, 5–34 ।

(3) त्यागिनं हर्षदेवं स श्रुत्वा सुकवि बान्धवम् ।
बिल्हणो वंचनां मेने विभूतिं तावतीमपि ॥7-937॥

एतैः त्रिभिः श्लोकैरेव अज्ञातनाम्नः बिल्हणस्य नाम सर्वप्रथमं विद्वद्भिर्लब्धम् ।

कल्हणेन पद्यनैकेन प्रतिपादितः भोजनरेन्द्रस्य कवीन् प्रति समादरः बिल्हण-काव्येनापि सिद्ध्यति ।[42] कल्हणेन प्रशंसितः लोहरनरेशः क्षितिराजः बिल्हणेनापि स्वकाव्ये वीररूपे, कविबन्धुरूपे च प्रशस्तिं प्राप ।[43]

कल्हणेन वर्णितः उत्कर्षः, बिल्हण-काव्ये अपि उल्लिखितः, यत्र, स शौर्येण धरां म्लेच्छशून्यां चकारेति लिखितम् ।[44] प्रवरसेनस्य सशरीरं स्वर्गगमनवृत्तं बिल्हणेनापि वर्णितम्, शब्दाः अपि समान-रूपेण प्रयुक्ताः वर्तन्ते ।[45]

इदं खलु संक्षिप्त-वर्णनं सम्यक् साधयति यत् कल्हणः बिल्हणस्य सुपरिचितोऽभूत् तत्काव्यं च सूक्ष्मतयासौ अधीतवान् ।

**भुवनाभ्युदयम्**—कविः अजितपीड-राज्यप्रसंगे, शंकुकस्य तत्कृतेः भुवनाभ्युदयकाव्यस्यापि ससम्मानमुल्लेखं करोतीति तत्काव्याध्ययनमपि कल्प्यते ।

"कविर्बुधमनः सिन्धुशशांकः शंकुकाभिधः ।
यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधम् ॥"[46]

**हरविजयमहाकाव्यम्**— अवन्तिवर्मणः राज्ये कल्हणः आनन्दवर्धन-मुक्ताकण-शिवस्वाकिविभिः समं "हरविजय-काव्यप्रणेतुः" रत्नाकरस्य सादरं वर्णनं चकार, एतेन तत्काव्यस्य, आनन्दवर्धनस्य "देवीशतक-काव्यस्य" चापि अध्ययनसूचना प्राप्यते । शिवस्वामिकवेः, मुक्ताकणस्य च काव्यांशाः क्षेमेन्द्रेणाप्युद्धृताः सन्ति "कविकण्ठाभरणे" ।

**भल्लटशतकम्**—शंकरवर्मणः राज्ये भल्लटादीनां कवीनाम् वर्णनं वर्वर्ति प भल्लटः "भल्लटशतकम्" "पद्ममंजरी" इत्याख्यं कोषं च निर्मितवान्, उभयोरपि कल्हणेनावश्यमेवाध्ययनं कृतं स्यात् ।

"आसेवन्तावरा वृत्तीः कवयो भल्लटादयः ॥"[47]

**श्रीकण्ठचरितम्**[48]—कल्हणात् पूर्वमेकः मंखाख्यः कविरासीत् तस्योल्लेखं

---

(42) 7–259 वि० 18–47 ।
(43) 7–251 वि० 18–47 ।
(44) 7–256, 57 वि० 18–67 ।
(45) 3–377, वि० 18 28 ।
(46) 4–705 ।
(47) 5–34, 204 ।
(48) 8–3354, 2423 ।

कविश्चकार, मखः 'श्रीकण्ठचरितम्' 'श्रीकण्ठकोषं'' च निर्ममे, उभयमपि कल्हणेनाधीतमभूत् । मंखभ्रातुः अलंकारस्य विद्वत्परिषदि कल्हणः अपि ययौ ।

(4) **रामायण-महाभारतस्याध्ययनम्**—शतशः संकेताः कल्हणस्य.रामायण-महाभारतवीरकाव्ययोः गभीराध्ययनं प्रतिपादयन्ति । प्रायेण कविः अनेक-घटानानां स्फुटीकरणाय, एतयोः महाकाव्ययोः घटनानां, पात्राणाञ्च दृष्टान्तं ददाति ।

**नास्ति काकुत्स्थात् पार्थिवः प्रभुः, वायुपुत्रायितं पङ्ग्वा तया संघाब्धिलंघने । तौ राम-लक्ष्मणावेतौ, "परिभवं लंकेश्वरो लब्धवान् ।"**

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकार-विप्लवः ।।[49]

इत्यादयः पद्यांशाः रामायणाध्ययन-सूचका वर्तन्ते, अपि च कविः, मैनाकपर्वताख्यानं, रामस्याभिषेकं, तन्निर्वासनं, गंगावतरणं सीतान्वेषणम्, सुग्रीवमैत्रीं, बालिवधं, हनुमतावारिधितरणं, अन्याश्च नैका कथाः उल्लिखितवान् एतैश्च रामायणाध्ययने कवेः रुचिः ज्ञायते ।[50]

**महाभारतम्**—महाभारतस्य कृष्ण-बलराम-भीष्म-द्रोण-कृप-युधिष्ठिर-भीमार्जुन-दुर्योधन-कर्णसदृशानां प्रधान-पात्राणां नामानि अनेका घटनाश्च राजतरंगिण्यां प्राप्यन्ते । यादवाः तेषां कुलोद्वहः श्रीकृष्णः, तस्य सपत्नः कंसः, राजधानी मथुरा, जरासन्धेन सम युद्धं, तत्र च लांगलध्वजस्य विजयः, कौरव-पांडवानां कुरुक्षेत्रम्, पांचाली, पांचाल-देशः, महाभारतयुद्धम् इत्यादि-महाभारत-काव्य-सम्बद्धानां, वरीवर्ति तत्र वर्णनम् ।[51]

विशालस्यास्य वीरकाव्यस्य राजतरंगिण्यामागता घटना विस्तरभिया नात्र दीयन्ते, संकेतैरेव संतोषो विधेयः ।[52] विदुषां मते कुरुपांडवानां युद्धं, रामचरितञ्च महत्प्रभावमजनयत् कल्हणजीवने, अन्येषामभिमतमस्ति यत् कवेः, उभयोरपि पवित्र-ग्रन्थयोः महती श्रद्धा आसीत् । नात्रातिशयोक्तिः स्यात् यत् इदमुभयं वीरकाव्यं सम्यगधीत्यैव स्वेतिवृत्तं कल्हणः व्याचचक्षे ।

---

(49) 4-67, 6-226, 7-1202, 8-335, 1808 ।

(50) 8-1355, 15, 1806 से 1810, 2382, 2976, 3159 ।

(51) 1-60, 63, 70, 59, 61, 49, 51, 82, 8-540 ।

(52) 1-119, 2-94, 3-276, 5-70, 103, 521, 600, 26, 41, 7-510, 85, 804, 1168, 1365, 1476, 1718, 8-335, 469, 670, 992, 1093, 1199, 1289, 1355, 2025, 2132, 70, 2256, 80, 2305, 36, 2789, 2811 48, 2911, 48, 77, 3449 ।

(5) **ज्योतिष-शास्त्रम्**—कल्हणो ज्योतिषशास्त्रस्यापि, बभूव किलाध्येता। सप्तमतरंगे राज्ञो हर्षस्य जन्म-कुंडली ज्योतिषशास्त्रानुसारं वर्णिता। तत्र खलु दुर्योधनवत् वंशोच्छेदस्य योगः अभूत्, जन्मलग्नः कर्क आसीत्। शनि-मंगलौ पंचमे भवने, बुधबृहस्पती षष्ठे स्थाने, सूर्यशुक्रौ सप्तमस्थाने, चन्द्रश्च दशमे स्थाने स्थितः अभूत्, यदा चन्द्रमा, शुक्रः, पापग्रहश्च-क्रमशः दशम-सप्तम-पंचम-स्थानेषु, आयान्ति तदा कुलक्षयो भवति। कौरवाणां वंशनाशस्येदमेव कारणमभूत्।[53] इदं खलु वर्णनं ज्योतिशास्त्रानुसारं वरीवर्तीत्यत्र न संशयो ऽवशिष्यते।

प्रथम-तरंगे पद्ययुगले ज्योतिष-संहिताकारैः प्रतिपादितां नक्षत्रगतिं सूचयित्वा कविः युधिष्ठिर समये प्रकाशं पातयति। स आह "चित्र-शिखण्डिनः (सप्तर्षिगणाः) नक्षत्राः एकस्मादपरं नक्षत्रं शतवत्सरेषु प्रयान्ति। राजा युधिष्ठिरो यदा पृथिवीं शशास तदा सप्तर्षयो मघानक्षत्रेषु आसन्।[54] अष्टमतरंगे कविः बृहत्संहितायां वर्णितानि वृष्टिचिन्हानि वर्णयति।[55] नैकस्थलेसु नैकविधानां नक्षत्राणां सनामोल्लेखो वर्तते। इत्थं ज्योतिषशास्त्रे कल्हणस्य रुचिः, तदध्ययनञ्च सम्यगनुमीयते।

(6) **व्याकरणम्**—राजतरंगिण्यां प्रायेण भाषायास्त्रुटयो न दृश्यन्ते तच्च व्याकरणस्य गहनाध्ययनमेव सूचयति। कल्हणसमये तत्पूर्वम् च पाणिनेः व्याकरणस्य, महाभाष्यस्य, अन्येषां व्याकरणग्रन्थानाञ्च प्रचार आसीत्। कविस्तेषां उल्लेखमपि करोति। प्रथम-तरंगे वर्णितः परार्ध्यविभवः अभिमन्युः अभिमन्युपुरं निर्माय चन्द्राचार्य-प्रभृतीन् विदुषः देशान्तरादानीय स्वराज्ये महाभाष्य-प्रवर्तनं चकार, स्वयमपि च व्याकरणम् व्यदधात्।

चन्द्राचार्यादिभिर्लब्ध्वा देशात्तस्मात्तदागमम्।
प्रवर्तितं महाभाष्यं स्वयञ्च व्याकरणं कृतम्॥ 1-176।

समये व्यतीते, व्याकरणाध्ययने विच्छिन्ने सति, चतुर्थ-तरंगे वर्णितो जयापीडो नृपतिः पुनरपि देशान्तरात् कोविदानानीय स्वराज्ये महामाष्यं प्रावर्तयत्, क्षीरस्वामी इत्याख्यात् वैय्याकरणात् स्वयमपि शब्द-विद्यां (व्याकरणं) अधीतवान्।[56]

एकस्मिन् पद्ये पाणिनेः अपरत्र च काशिकावृत्तिकर्तुः वामनस्य ससम्मानमुल्लेखः कविना कृतः।[57] अनेन संक्षिप्तविवेचनेनानुमातुं शक्यते यत् कल्हणः पाणिनि-व्याकरणस्य महाभाष्यस्य, अन्येषाञ्चोपलब्धानां व्याकरणग्रन्थानां गम्भीराध्ययनम-कार्षीत्।

---

(53) 7-1719, 20।
(54) 1-55, 56।
(55) 7-715, 16।
(56) 1-175, 76, 4488, 89।
(57) 4-497।

(7) **कामशास्त्रम्**—कामभावनायाः विविधरूपाणां कल्हणः संकेतं चकार। कामशास्त्रप्रतिपादिताः दशविधाः कामावस्थाः स्थाने-स्थाने उल्लिखिताः खलु, कामभावप्रतिपादकस्य "कुट्टिनीमत-काव्यस्य" निर्मातुः दामोदरगुप्तस्यापि कविना उल्लेखो विहितः।[58]

(8) **नाटकाध्ययनम्**—भास-कालिदास-भवभूति-प्रमुखाः नाटककाराः कल्हणात् पूर्ववर्तिनो बभूवुः। कविकाले च ते तत्कृतयश्च प्रथितयशस आसन्। तेषां कृतीनामध्ययनमपि संभाव्यते। एकस्मिन् पद्ये महाकवि-भवभूतेस्तु स ससम्मानं वर्णनं व्यधात्।[59] भवभूतिः महावीरचरितम्, मालतीमाधवम्, उत्तर-रामचरितञ्चेति नाटकत्रयं लिलेख, उत्तररामचरिते वर्णितायाः शम्बूकवृषल-कथायाः[60] प्रभावः ब्राह्मणतनयबलि-कथायां स्पष्टं संलक्ष्यते। अथ द्वितीयतरंगे चन्दक इत्याख्यः कविरपि उल्लिखितो ननु-

नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः।
द्वैपायनमुनेरंशस्तत्काले चन्दको ऽभवत् ॥ 2–16 ॥

संभवतः कल्हणस्तत्प्रणीतं नाटकं दृष्टवान्। अन्यच्च भरतमुनेरपि कविः नाम ददौ, तस्य शास्त्रे च लिखितानां केषाञ्चित्, नाट्य–नट–नाटक-नेपथ्य–रंग–जवनिकाप्रभृतीनां शब्दानामपि असकृत् प्रयोगो दृष्टिपथमायाति। तदखिलञ्च नाटकानां नाट्यशास्त्रस्य चाध्ययनमन्तरा न संभाव्यते।

(9) **प्राकृतभाषा**—राजतरंगिण्यामनेके प्राकृत-भाषायाः शब्दाः प्रयुक्ताः सन्ति, ये हि तस्या भाषाया अध्ययनं सूचयन्ति। अथ च कविः वाक्पतिराजश्चापि कविना पद्ये एकस्मिन् सादरमुल्लिखितः। तस्य च गौडराज्ञो यशोवर्मणो विजयवर्णनयुक्त "गौडवाहो" इति काव्यमपि कविनाधीतं स्यादिति, सहजमेवानुमातुं शक्यते।[61]

**विविधभाषा-ज्ञानम्**—संस्कृत–भाषायास्तु कल्हणः पंडित आसीदेव, एतदतिरिक्तं, बौद्धसिद्धान्तानां पौनः पुन्येनोल्लेखः पालीभाषाया अपि अध्ययनं ज्ञापयति। काश्मीर–भाषायाश्चापि।

(10) **तन्त्रशास्त्रम्**—अनेकेषां तान्त्रिकाणां, तन्त्र–सिद्धान्तानां, सिद्धानामद्भुतानां तान्त्रिक–चमत्काराणां च मुहुर्मुहुः उल्लेखः तन्त्र–शास्त्रस्य ज्ञानद्योतकं खलु वरीवर्ति। कविः शैव आसीत्, शैवानाञ्च प्रधान–शास्त्रं तन्त्रशास्त्र भवति। अतस्तदध्ययनं कविना विहितं स्यादित्यत्र नहि संशयः।

(11) **पुराणाध्ययनम्**—सर्वेषामप्युपलब्धपुराणानां सम्यगध्ययनं चकार कल्हणः। स्वकीयान् भावान् स्फुटीकर्तुमसौ प्रायेण पुराणानामाख्यानान्येव

---

(58) 3–396।
(59) 4–144।
(60) उ०रा०च० 2–8,10 राज० 3–82,83,84,85।
(61) 4–144।

संकेतितवान् । पुराणेष्वपि नीलमतपुराणस्य गम्भीराध्ययनं स विदधौ । "**मतं नीलमुनेरपि**" (1–14) इत्यभिधाय स्वयमेव कविस्तज्ज्ञानं समसूचयत् । विलुप्तेषु द्विपंचाशतनृपतिषु गोनन्द–प्रभृतयश्चत्वारो नरपतयो नीलपुराणादेव कविना गृहीताः। ... **तेभ्यो नीलमतादृष्टं गोनन्दादि- चतुष्टयम्** (1–16) अपि च तत्पुराणोक्तं पद्यमेकमपि कविनोद्धृतम् —

काश्मीराः पार्वती तत्र राजा ज्ञेयो हरांशजः ।
नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता ।।

पदे–पदे कल्हणस्य नीलमत–पुराणाध्ययनं प्रस्फुटं जायते । प्रथम–तरंगे "**विजयेश्वर–नन्दीशक्षेत्र–ज्येष्ठेशपूजने**" इत्युल्लेखः नीलपुराणे अपि वर्तते ।[62] कश्मीर–तीर्थानां विस्तृतमध्ययनं कल्हणेन नील-पुराणादेवाधिगतम् ।

श्रुतनन्दिपुराणे जलौकः नन्दीशस्पर्धया सोदरादीनां सेवनमकार्षीदिति वर्णयन् कविः नीलपुराणोक्तं सोदरतीर्थम् समसंकेतयत् ।[63] नीलपुराणोक्ताः क्रिया अपि कल्हणो जज्ञौ, आगमद्विषः बौद्धा याश्च अच्छिन्दन् वादेन, प्रतिवादिनः पराजित्य ।[64]

"**मंडले विप्लुताचारे विच्छिन्न–बलिकर्मभिः** 1–179 । अत्र या बलिरुल्लिखिता सा हि नीलपुराणे अपि वर्णितास्ति । [65] (क) "**आद्येन चन्द्रदेवेन शमितो यक्षविप्लवः**"–इत्यभिधाय कविः नीलपुराणोक्तां कथामेवोल्लिखति ।

इत्थं नीलपुराणस्य गम्भीराध्ययनं सूच्यते । अपि च अन्येषामपि पुराणानामनेकविषयाः राजतरंगिण्यां विद्यन्ते यैर्ननु तज्ज्ञानमवबुध्यते ।

(12) **माहात्म्यानां ज्ञानम्**—कल्हणः अनेकेषां माहात्म्यानामपि प्रभूतमध्ययनमकार्षीत् । अनेकेषां तीर्थानां वर्णनमेव तत्र प्रमाणम् ।

**अमरनाथ माहात्म्यम्** – प्रथम–तरङ्गे कविः अमरेश्वरतीर्थस्य तस्य यात्रायाश्चोल्लेखं चकार, अमरेश्वर एव सम्प्रति "**अमरनाथ**" इति नाम्ना प्रसिद्धः अस्ति । अद्यापि च प्रतिवर्षम्-सहस्रशो जनास्तस्य यात्रां कुर्वन्ति । अस्य च तीर्थस्य विस्तृतं वर्णनं "**अमरनाथ–माहात्म्ये**" "**अमरेश्वर–कल्पे**" च वर्तते, राजतरंगिण्यां तीर्थस्योल्लेखः तन्माहात्म्याध्ययनं सूचयति । इदं तीर्थम् तन्माहात्म्यञ्च मया कश्मीरयात्रायां दृष्टम् ।

**अर्धनारीश्वर–माहात्म्यम्**— अर्धनारीश्वरः शिवः पुरातनकालादद्यापि भारतवर्षे पूज्यते । कल्हणः प्रत्येकं तरंगस्य प्रथमपद्ये तमेव स्तौति । अतः अर्धनारीश्वर–माहात्म्याध्यनमनुमीयते ।

**ईशालयमाहात्म्यम्**—ईशेश्वरो हरः पुराहि भारतवर्षे विशेषतश्च कश्मीरेषु पूज्यते स्म । तस्य च नैकवारं कविः वर्णनमकार्षीत् । राजा समधिमत्–आर्यराजः

( 62 ) 1–133 नीलपुराण 55–1134–36 ।
( 63 ) 1–123 से 130 नील 55–1137 ।
( 64 ) 1–178 ।
(65–क) नील० 55–214 से 265, 5–37 स्टी० भा० 2 टि० 103 ।

स्वगुरोः ईशानस्य सम्माने ईशेश्वरमन्दिरं निर्ममे । "**ईशानस्य गुरोर्नाम्ना व्यधादीशेश्वरं हरम्**" । 2–134 । सुरेश्वरीक्षेत्रे तस्य तीर्थमप्यासीत्[65] (ख) यच्च पश्चात् "**ईशबर**" इति विकृतनाम्ना प्रसिद्धिं प्राप । "**डल झील**" इत्यभिधानस्य महाजलाशयस्य, उत्तरपूर्वक्षेत्रे यच्च अतिष्ठत्, अस्य वर्णनं नूनं ईशालय–माहात्म्य–मधीत्यैव कविः चकारेति सहजमेवानुमीयते ।

**कपटेश्वरमाहात्म्यम्** – प्रथम-तरंगे सप्तम-तरंगे च पापसूदन-तीर्थम् कवि-रुल्लिखति ।" यत्र काष्ठरूपः उमापतिः पूज्यते स्म कपटेश्वरनाम्ना । कपटेश्वर-तीर्थमपि पृथकरूपेण सप्तमतरंगे उल्लिखितं खलु, यत्र च मालवाधिपो भोजः स्वर्णराशिभिः कुंडमेकमकारयत् ।[67] अनयोः "कपटेश्वर-पापसूदनतीर्थयोः गौरवं "**कपटेश्वरमाहात्म्ये**" वर्णितम् । तत एव च ज्ञात्वा कल्हणः अप्यलिखत् ।

**कपालमोचन-माहात्म्यम्**—कपालमोचन-तीर्थस्य महिमा "**कपालमोचनमाहात्म्ये**" लिखितो विद्यते, यद्यपि तीर्थस्यास्य सनामोल्लेखो न वर्तते राजतरंगिण्याम्, तथापि तस्य स्थितिस्थानस्य देग्रामस्योल्लेखो वर्वति सप्तमतरंगे । कपालमोचनमाहात्म्ये अपि तीर्थस्य नाम "**द्विग्राम**" इति प्रदत्तं ननु, तदेव च विकृतरूपे, '**देग्राम**' इति विद्यते राजतरंगिण्याम् । एतेन साम्येन "कपालमोचन-माहात्म्यं" कविनाधीत-मित्यवगम्यते ।

**केदारतीर्थ-माहात्म्यम्**—सप्तम-तरंगे पद्ययुगले '**वाराह-क्षेत्रम्** वर्णितम् ।[68] तत्रैव तीर्थमप्येकमासत यत्र हि प्राणत्यागाय जना ययुः । आसन्नमृत्युः क्षेमगुप्तः अपि तत्र ययौ, श्रीकण्ठ-क्षेममठौ च विदधे ।[69] अस्य तीर्थस्य वर्णन केदार-तीर्थमाहात्म्ये वर्तते, तदध्ययनञ्च विधाय कल्हणस्तदुल्लेखं चकार ।

**गया-माहात्म्यम्**—षष्ठसप्तमतरंगयोः गयातीर्थस्य तत्र च काश्मीरेभ्यः गृह्यमाणस्य श्राद्धशुल्कस्योल्लेखः अस्ति ।[70] तद्वर्णनात् पूर्वम् निश्चययेन कल्हणः '**गयामाहात्म्यमधीतवान्**' । "**गोदावरीमाहात्म्यम्**"–प्रथमतरंगे वर्णितो राजा गोधरः गोधराख्यमग्रहारं ब्राह्मणेभ्यो ददौ[71] गोदावरी-माहात्म्ये गोधरशब्दस्य स्थाने "**गोदर**" इति वर्तते । अपि च अष्टम-तरंगस्यान्तिमे श्लोके सप्तधारावाहिनी गोदावरी सरित् अपि उल्लिखिता वर्तते, याञ्च संगत्य विशोकानदी "**गोदर**" स्थाने तीर्थमेकं करोति ।

---

(65–ख) 5–37 स्टी० भा० 2 टि० 103 ।
(66) 1–132, 7–191 ।
(67) 7–190 ।
(68) 7–186, 204 ।
(69) 6–186 ।
(70) 6–254, 7–1008 ।
(71) 1–95, 96 टि० ।

गोदरस्थानस्य, गोदावर्याश्च तीर्थस्य, वर्णनं "गोदावरीमाहात्म्ये" पठित्वा कवि स्तदुल्लेखमकरोत् ।

**ज्येष्ठेश्वर-माहात्म्यम्**—ज्येष्ठेश्वर-ज्येष्ठेश-ज्येष्ठरुद्रादिनाभिः शिवः भारत-वर्षे सेव्यते स्म, तस्य मन्दिराणां तीर्थस्य च बहुशो विद्यते उल्लेखो राजतरंगिण्याम्, स[72] च न संभाव्यते-'ज्येष्ठेश्वर-माहात्म्यस्य' अध्ययनमन्तरा ।

**त्रिपुराप्रादुर्भाव-माहात्म्यम्**—त्रिपुरेश्वरः शिवः, तत्तीर्थम्, तन्मठा मन्दिराणि च पदे-पदे राजतरंगिण्यां वर्णितानि । एकस्मिन् पद्ये तत्पर्वतोल्लेखः अप्यस्ति[73] । इदं वर्णनं च त्रिपुराप्रादुर्भाव-माहात्म्यस्याध्ययनं सूचयति ।

**त्रिसंध्या-माहात्म्यम्**—सन्ध्यादेवी जलरूपे पुण्यपापानां अन्वयव्यतिरेकयोः दर्शनं करोति । कविर्वर्णयति[74] यत् सा हि "त्रिसन्ध्या" नाम्ना सुपरिचितास्ति ब्राह्मणानाम् । सप्तमतरङ्गस्याद्ये पद्ये गिरिजाव्याजेन सा कविना स्तुता । कश्मीर-तीर्थेषु त्रिसन्ध्यातीर्थम्, पवित्रतमं मन्यते स्म पुरा काले । त्रिसन्ध्याया तत्तीर्थस्य च महिमा कविना "त्रिसन्ध्या माहात्म्येनाविगतः" ।

**हरमुकुट-माहात्म्यम् नन्दिक्षेत्रमाहात्म्यम् च**— उभयोरप्यनयोः माहात्म्ययोः अनेकेषां तीर्थानामुल्लेखो विद्यते । एतेषु प्रायेण नन्दीशः शिव एव स्तूयते स्म ।[75] नन्दिक्षेत्रं खलु शिवस्य-वासस्थलममन्यत इति नन्दिक्षेत्रे हरावासे.... इति पद्यांशेन ज्ञायते । अस्य असकृत् उल्लेखः समागतः[76] । तस्य हरस्य च पौनः पुन्येन वर्णनम्, उभयोरपि माहात्म्ययोः विस्तृताध्यनस्य सूचकं ननु । इत्थं च बहूनां माहात्म्यानां कविरध्ययनमकार्षीदिति निश्चीयते ।

(13) **इतिहासप्रबन्धाः**—कविः कल्हणः महान् इतिहासकारो वर्तते इति 'राजतरंगिण्याः' राजवंशावल्याः विस्तृतेन विवेचनेन अग्रे ज्ञास्यते । बहून् इतिहास-ग्रन्थान् कविरधीतवान्, स्वकृतेः भूमिकायां स्वयमपि स तेषामुल्लेखं चकार । सुव्रत-प्रबन्धः, राजकथाश्रिता एकादशग्रन्थाः, हेलराजस्य पार्थिवावलिः, क्षेमेन्द्रस्य नृपावलिः इत्यादयः ग्रन्थाः, विविधानि शास्त्राणि, प्रशस्तिपट्टानि, मन्दिराणि, आज्ञा-पत्राणि, छविल्लाकरस्य, पूर्वमिहिरस्य च प्रबन्धौ, एतेषां तु विस्तरेणाध्ययनं निरीक्षणञ्च कल्हणः, स्वयमेव स्वीचकार [77]।

(14) **अन्ये विषयाः**—राजनीतिशास्त्रे कल्हणः महान् पंडितः अभूत् । राजनीतेः, कूटनीतेः, विविधशस्त्रास्त्राणाञ्च शतशः उल्लेखास्तत्र प्रमाणम् ।

---

(72) 1-124, 290, 341 स्टी० राज० भा० 2 टि० 102 ।
(73) 5-46, 6-135, 7-151, 526, 956, 5-123 ।
(74) 1-33 ।
(75) 1-113, 123, 130, 150, 2-170 ।
(76) 1-36 टि० 113, 7-646, 8-2439 ।
(77) 1-12, 14, 17, 13, 15, 18, 19 ।

अर्थ-विषये विद्यमानाः संकेताः अर्थशास्त्रस्य, वर्णाश्रम-आचार-विधि-विषये स्थिताः विचाराः, स्मृतिग्रन्थानां धर्मशास्त्राणां, तान्त्रिकाणाम्, तान्त्रिकसिद्धान्तानाञ्च वर्णनं तन्त्रशास्त्रस्य, वैदिकसिद्धान्तानामुल्लेखाश्च कल्हणस्य वेदाध्ययनं ज्ञापयन्ति। इत्थञ्च कल्हणः विद्याया विविधक्षेत्रेषु पारंगतः अभूत्।

**मंखस्य श्रीकंठचरिते कल्हणस्योल्लेखः** —कल्हणस्य देशवासी मखः 'श्रीकंठचरितं' नाम काव्यं लिलेख। तस्य च पंचविंशे सर्गे एकस्याः साहित्यपरिषदः उल्लेखं स चकार। सा परिषत् मंखभ्रातुः अलंकारस्य सदने किलायोजिता। मंखः परिषदि समागतानामभ्यागतानां ससम्मानं सनामोल्लेखञ्च परिचयं ददौ। बूल्हरमते मंखः स्वकवितां कल्हणस्य काव्यात् कतिपय-वर्षपूर्वमलिखत्। 1128 ख्रीष्टाब्दात् 1144 खीष्टाब्दस्य मध्ये च तस्य कालः संभाव्यते। अतः कल्हणस्यापि अलंकार-समायाआगमनमनुमीयते। किन्तु परिषदि समागतेषु त्रिंशत् विद्वत्सु 'कल्हण" इति नाम नावाप्यते। किञ्च कल्हणः स्वकृतौ, मंखालंकारयोरुल्लेखञ्चकार। कविः सूचयति यत् अलंकारः जयसिंहस्य गञ्जाधिपः अवर्तत। मठादिनिर्माणञ्च व्यधात्।

स्नानकाष्ठमठब्रह्मपुरी-सेत्वादिकमणा।
सोऽलंचकारालकारौ वृहद्गंजाधिपो धराम्॥ 8-2423 ॥

इत्थमलंकारस्य राजतरंगिण्यामुल्लेख वीक्ष्य, तत्परिषदि कल्हणस्य नामाभावस्य कल्पना समीचीनैव प्रतिभाति।

मंखस्यापरः भ्राता शृंगारः अपि नाम्ना संकेतितः[78] किन्तु नेदं संभवं प्रतिभाति यदनेकेषां विदुषामुल्लेखैः समं कल्हणस्योल्लेखं न कुर्यात् कविप्रवराणां प्रशंसकः मंखः। वस्तुतः कल्हणस्तत्रोल्लिखितो वर्तते, किन्तु कल्याणपदेन स तत्र सूचितः खलु।

**कविः कल्याणः** – मंखः विद्वत्परिषदः प्रसंगे पद्यत्रये कविकल्याणस्योल्लेखमकार्षीत्, स काव्यकर्तृषु प्रवीणं तं लिलेख। तन्मते अलकदत्तस्तत्साहाय्यमकरोत्। कल्याणस्य कविताविषये स कथयति यदत्र बिल्हणकवितायाः प्रतिबिम्बं स्फुटं प्रतिभाति।[79] इदं च मयापि कल्हणाध्यनप्रसङ्गे प्रदर्शितम्।

जोनराजः स्वकृतौ वर्णयति यत् मखमते कल्हणस्याश्रयदाता अलकदत्तः "सांधिविग्रहिक" पदे कार्यमकरोत्। तत्रैव जोनराजो ब्रबीति यत् कल्हणस्य कथानामध्ययने महती रुचिरासीत्। मंखेन कल्याणे अपि सैव रुचिः प्रदर्शिता।

मम मते अपि विविधकथाकलापविज्ञः कल्याणः वस्तुतः कल्हण एवाभूत्। कल्हणशब्दः प्राकृतशब्दस्य "कल्लाण" पदस्यापभ्रंशो वर्तते यस्य संस्कृतरूपं कल्याण एवास्ति। मंगलं च यस्यार्थो वरीवर्ति। कल्याणशब्दः संज्ञावाचिपदेषूपलभ्यते। प्राकृतभाषायां व्यंजकवर्गीयः (ल्य) ध्वनिनियमे(ल्ल) भवति, अथ च (ल्ल)पुनरपि, अप-

(78) 88–2422 टि०।

(79) श्रीकंठचरिते 15–78 से 80।

अपभ्रंशभाषायां भारोपीयभाषासु च (ल्ह रूपे) प्रकटीभवति। एवमेव संस्कृतस्य कल्याम् (श्वः) शब्दः प्राकृते (कल्लु) वर्तते, स एव च कल्ह-काल्ह-कल्ह-काल्ह रूपेषु विविध-भाषासु प्राप्यते। यथा—

| संस्कृते | प्राकृते | अपभ्रंशे |
|---|---|---|
| प्रयास्यति | पल्लठई | बिहारी |
| चिल्ल | चिल्लु | चील, चील्ह |

आकारस्य अकारे परिवर्तनं ध्वनि-नियमानुसारं वर्तते। अस्य प्रमाणरूपे "कल्हण-कल्याण" इत्युभयोर्मध्ये कल्लनरूपमप्यस्ति, यच्च राजतरंगिण्यामपि प्राप्यते। "**आशा-चन्द्रापराख्यस्य कल्लनस्यानुजन्मनः**" (7–182)। राजतरंगिण्या-मेकस्मिन् पद्ये वयमपभ्रंशरूपं "कल्हण" इति प्राप्नुम यद्धि संस्कृते "कल्याण" इत्यस्ति।

"**राजपुत्रः साहदेविः कल्हणो विशतः प्रभोः**" (8–926)। चतुर्थतरंगे शिशोः राज्ञः चिप्पटजयापीडस्य मातुलेषु "कल्याण" नामागतं खलु" '**पद्मोत्पलक-कल्याणमम्मधर्मैः स मातुलेः**" (4–679), अष्टमतरंगे अपि राजभृत्यस्य कल्याण-स्योल्लेखो वरीवर्ति।

"**सङ्क्रान्ते प्रांगणं युद्धात् कल्याणाद्या व्यरंसिषुः**" (8–609) तत्रैव धन्य-भ्रातृव्यः अपि "कल्याण" एवाभिहितः। "**भ्रातृव्यमनयद्धन्यः कल्याणसवकल्यताम्**" (8–2605)। स्त्रीलिंगे अपि तादृक् परिवर्तनयुक्त रूपं दृश्यते। जयापीडस्य राज्ञीषु "**कल्याणदेवी**" कलशजयसिंह-नृपयोः भार्यायाः" **कल्लना-कल्हनिका**-शब्द-स्यानुरूपं वर्तते।[80] कल्हनिकापदं संस्कृतस्य कल्याणिका शब्दस्यापभ्रंशरूपमास्ते। कल्हणः राजतरंगिण्यां तथाविधान् जनानुल्लिखति येषां नामसु कल्हण-कल्याण-वत् स्वरपरिवर्तन दृश्यते रूपान्तरं च विलोक्यते। यथा **गर्गचन्द्रः गग्गचन्द्रः। गर्गः-गग्गः। लोष्ठकः लोठकः लोठनः। अन्यच्च** राजतरंगिण्यां अनेक–पुरुषाणां भिन्नानि-भिन्नानि नामानि लिखितानि विद्यन्ते। यथा गर्गचन्द्रः गर्गः – गग्गो वाभिहितः। राजवदनः बलहरश्चेति उभयं नाम एकस्यैव पुरुषस्य वर्तते। लोठनः लोष्ठकः लोठकश्चापि एक एव पुरुषो विद्यते।[82] "**मनुजेश्वरकोष्ठयो**" (8–1504), **भिक्षु कोष्ठेश्वरमुखानपि** (8–1261), इत्यत्र वर्णितः, कोष्ठः कोष्ठेश्वरो वा अभिन्न एव। स एव च पुनः "**महीभुजा पीड्यमानैराहूतः कोष्ठकादिभिः**" (8–1587) इत्यादिषु "**कोष्ठक**" इति निगदितः। अपि च शरदियः एव शरद्भासीति कथितः।[83]

---

(80) 4–462, 67, 7–293।

(81) 8–182, 196, 2912, 2799, 3313, 2496।

(83) 2183, 1090।

इत्थं च विविधपुरुषाणां भिन्ननाम्नां प्रदर्शनस्य कल्हणस्य प्रवृत्तिं वीक्ष्य, स्वरसमानतां च विलोक्य कल्हणः-कल्याणस्यैव प्राकृतरूपं भविष्यतीति विचारः समीचीन एव ।

अतः मखेन कल्हणस्य वास्तविकं नामैव प्रयुक्तं, किन्तु कविः स्वात्मने कल्हण इति प्रायुंक्त, अत एव कल्याण-पदस्य तदपभ्रंशरूपं राजतरंगिण्याः पंक्तिषु दृश्यते ।

**कल्हणकालः** —काव्यस्य इतिहास-प्रदर्शनरूपं प्रयोजनमंगीकृत्य कल्हणः न क्वापि महाभारतादिप्रवर्तितं कथानकं, प्रेमकथां वा कामपि जग्राह । अपितु स ऐतिहासिकं वृत्तं स्वीकृत्य भारतस्य, विशेषतश्च निजकालिकभारतस्य यथार्थेतिहासं स्फुटीचकार ।

अतिशयभ्रमणेन स्वदेशं पूर्णरूपेण कविर्दृष्टवान् । अतएव तत्र घटमानानां घटनानां स सूक्ष्मतया प्रत्यक्षदर्शी आसीत् । अनेनैव हेतुना राजतरंगिणीमधीत्य वयं तत्कालीनस्य भारतस्य राजनीतिक-सामाजिकार्थिक–धार्मिक–दशां सम्यक् द्रष्टुं पारयामः । संस्कृतेः सभ्यतायाश्च स्पष्टं रमणीयं च चित्रं नो नेत्रपथमायाति । अपि च कल्हणकृतिः भारतस्य, विशेषतश्च कश्मीराणां पूर्णम् मानचित्रमपि प्रस्फुटं विदधाति । कासुचित् परिस्थितिषु वातावरणे च कविरुवासेति सम्यगवगम्यते । अथ चेदमपि स्मर्तव्यं यत् यदाहि कल्हणः समकालस्य वृत्तानि घटनाश्च वर्णयति तदैव स्वदेश–विषये तन्निवासिनां च विषये स्वाभिमतमपि ददात्येव । तच्चावलोक्य कल्हणस्य, व्यक्तित्वचरित्रज्ञानमपि सुकरं सुलभञ्च जायते । यासु परिस्थितिषु कविरुवास, तत्कालस्य, राजनीतिकैतिहासिक–वृत्तं कीदृशमासीदिति पश्चात् वक्ष्यते । अत्र तावत् संक्षेपतो वयं कल्हणस्य जीवनकाले प्रवर्तितानां घटनानां तासां च समाजे प्रभावं द्रक्ष्यामः ।

**कल्हणस्य जन्मकालः** – कवेः वचनानुसारं सः स्वकृतिं 1148-49 खीष्टाब्दे लिलेख । कृतेः शैलीं तत्र प्रतिबिम्बितां कविमनोवृत्तिं च विलोक्य असकृत् प्राप्यन्ते तत्र तथाविधाः संकेताः यैः खलु साधुतया कल्हणस्य तरुणावस्था ज्ञायते । सुस्सलोद्धारात् पूर्वम् 1121 खीष्टाब्दस्य वसन्तौ श्रीनगरे घटितानां घटनानां वर्णनसमयेऽपि तस्य तारुण्यं दृश्यते, परिपक्वबुद्धिः च दृष्टिगोचरा जायते । भिक्षाचरस्य सैन्यानां विश्वासघातिचरितं कल्हणस्य प्रत्यक्षदर्शित्वम् सूचयति स प्राह–

ह्यो जानके भैक्षवेऽद्यबलात्तु ंगतुरंगमान् ।
दृष्टवन्तो वयं सैन्ये सादिनोऽद्यापि साद्भुताः ।। 8-941

घटनानां प्रत्यक्षदर्शनोत्कण्ठा तरुणेष्वेवाधिका भवति । कविना कृते विपत्कालस्य, सुस्सलराज्यस्य पूर्वभागस्य च वर्णने वर्तन्ते तत्र बहवः संकेताः यैः कल्हणस्य सूक्ष्मदृष्टित्वं, साक्षित्वं चावगम्यते । अतः कल्हण-जन्मकालः द्वादश-शताब्द्याः प्रारम्भे

एव स्वीकर्तव्यः। इदञ्च तज्जनकं 1098 खीष्टाब्दे अधिगतद्वाराधिकारं वीक्ष्यापि पुष्टं जायते।

**कल्हणस्य जीवनकाले देशस्य राजनीतिः**—द्वादशशताब्देरारम्भः कश्मीरेतिहासे क्रान्तिकालः, प्रवर्तमान-राजनीतेश्च आमूलपरिवर्तनकालो ऽवर्तत। 1089 खीष्टाब्दात् 1101 खीष्टाब्दपर्यन्तं कृतशासनस्य हर्षस्य राज्यारम्भः सुखसम्पत्-शान्तिसंयुतो दृश्यते। पश्चाच्च स राजा स्वीयैरेव दुष्कर्मभिः राज्यात् प्रच्यावितः, ऐश्वर्योपभोगनिरतस्य राज्ञः, जनधनापहाराय विहिता अनुचितप्रयत्नाः, क्रूरप्रकृतीनां उपद्रवकारिणां डामराणां च कार्याणि हर्षपतनमकार्षुः। डामराः उच्चलसुस्सलयोः नेतृत्वे विद्रोहं चक्रुः। परिणामे च हर्षनृपतिः हत्यया मृत्युमालिलिंग।

हर्षसम्बन्धिभ्यां विद्रोहिभ्यामुच्चलसुस्सलाभ्यां हर्षराज्यं द्विधा विभक्तम्। उच्चलः कश्मीरदेशम्, अनुजः सुस्सलश्च पर्वतप्रदेशं लोहरं शशास।

हर्षपतनेन प्रबलतां याताः डामरा भीषणां विरक्तिं जनयामासुः। कूटनीतिज्ञः उच्चलः डामरान् परस्परं संघर्षनिरतान् विधाय, नीत्या तदधिपेन गर्गचन्द्रेण समं मैत्रीं कृत्वा राज्यं चकार। किन्तु अवरजस्य सुस्सलस्य, अधिकारप्राप्त्यै छलकपट-युक्तैराक्रमणैश्च तद्राज्ये विपदाजगाम। अन्ततश्च स्वाधिकारिणामुपजापेन स कालकवलितो ऽभूत्। अथ अधिकारिभिः राज्ये अभिषिक्ते रड्ढे दिनमेकं राज्ये संचालिते च, गर्गचन्द्रः रिपून् निहत्य राज्याधिकारं स्वहस्ते चकार। सर्वेषामपि जीवनमरणं तद्वशे अभूत्। अथ कल्हणः सड्डहंसरथ-प्रभृतीन् शरीरच्छेदनप विषादिभिरवधीत्।[84]

**सुस्सल-राज्यम्**—इतस्तावत् सुस्सलः गर्गचन्द्रेण समं सन्धिं चकार। उच्चलादधिकं प्रवीरस्यापि तस्य प्रकृतिक्रूरत्वात्, दीर्घसूत्रितया, अदूरदर्शितया च शासनकालः संघर्षमयः, उपद्रवसंकुलः, रुधिरप्लुतश्चाभूत्। डामरैः सहासौ युद्धनिरतो अतिष्ठत्।[85]

भीषणे संघर्षे गर्गचन्द्रे पराजिते अपि अपरे क्रूरा डामरा भिक्षाचर-नेतृत्वे विद्रोहमकार्षुः, राजधान्यामेव च ते सुस्सलं पराजेतुं शक्ता बभूवुः। सुस्सलश्च राजधानीतः पलायांचक्रे।

**भिक्षाचरस्यापहरणम्-सुस्सल-प्रत्यावर्तनं च**—सुस्सले पलायिते भिक्षाचरः राज्यपदे अभिषिक्तः। षण्मासपर्यन्तञ्च शासनमकार्षीत्। किन्तु डामराणां काष्ठ-पुत्तलिकामात्रं स अभूत्। राजवंशसमुद्भवानां स्थाने उच्चपदेषु डामरा एव नियुक्ता बभूवुः। तस्मात् स अपि अचिरादेव गलितविभवः विपद्ग्रस्तो भूत्वा समये भोजनमपि न प्राप। "काले भोज्यमपि प्राप्यं नासीद् गलितसंपदः॥ 8-92॥ अथ राज्ञः प्रमादं डामराणां च कार्यम् वीक्ष्य ब्राह्मणाः प्रायोपवेशान् चक्रुः, ते च सुस्सलं प्रत्यावर्तनाय

---

(84) 8-425, 26, 38, 43, 44, 46, 49।
(85) 8-442, 52, 54।

तुमुलोद्घोषमकार्षुः ।[86] दूताश्च त्वरया तदन्तिकं प्रधाविताः, राज्यस्य सर्वदिक्षु विप्लवा उपद्रवाश्चावर्धन्त ।

अथ वैशाखमासस्य शुक्लत्रयोदश्यां सोमपालबिम्बप्रभृतिभिः समं युध्वा, पूर्वकृतं स्वावमानं च प्रक्षाल्य, डामरानुकृतः ससैन्यः सुस्सलः काश्मीरान् प्रति प्रतस्थे । 4197 लौकिकाब्दे, ज्येष्ठशुक्लतृतीयायां च षण्मासानन्तरं पुनरपि राजधानीं प्रविवेश । डामराणां विघटनं विलोक्य च अनायासेनैव सिंहासनमारुरोह ।[87]

सत्वरमेव भिक्षाचरं च बबन्ध, कियत्कालानन्तरं भिक्षुः काश्मीरमंडलं विहाय पुष्याणनाडाख्यं ग्रामं जगाम, पश्चाच्च तत्रैव स कैश्चिन्निहतः । इत्थं पुनरपि सुस्सलः, अरिदलं विदार्य राजच्छत्रं प्राप ।[88]

**सुस्सलराज्ये गृहकलहाः** — भिक्षाचरकालात् प्रवर्तमानः गृहकलहः सुस्सले पुनः राज्यारूढे अपि सततं वृद्धिमाययौ । स्वसपत्नसहायकानां स्पर्धायामसमर्थः अभवत् सुस्सलः । किञ्च निजानीकिनीभिः कृतैरुपद्रवैः स अधिकं दौर्बल्यम् प्राप । त्रिवारं खलु श्रीनगरम्, उपद्रवेषु विद्रोहेषु दुर्भिक्षेषु च न्यपतत् । अग्निना च महती हानिरुत्पादिता । सर्वत्र विप्लवाः समजायन्त, डामराणां च दाहलुण्ठनादिभिः सततं ते संवर्धिताः ।[89] तथापि पंचनदीयानाम्, पर्वतीयानाञ्च सामन्तानां शक्त्या सुस्सलः स्वराज्यस्थितिं सुदृढां चकार ।

**जयसिंहस्य उदयः**—अथ 1128 खीष्टाब्दे सुस्सलः निजरिपूणां विरोधे प्रारब्धेन, स्वीयेनैव षड्यन्त्रेण स्वयमेव निहतः ।[90] तस्य तनयः जयसिंहश्च उदयं प्राप । सिंहासनमारुह्य स जज्ञौ यत् डामराः पूर्ववत् क्रूरा उपद्रव-निरताश्च वर्तन्ते । किन्तु कूटनीत्या कपटबलेन च स दृढमूलः अभूत् । तस्य भयावहः शत्रुः भिक्षाचरःअपि एकस्मिन् सीमान्तदुर्गे निहतः । अत्रान्तरे, पित्रा विजितः एकः दुर्गः लोहरक्षेत्रञ्च सल्हणभ्रातुः लोठनस्य वशे जगाम । पुनश्च स जयसिंहेन विजितः । तथापि लोठन-मल्लार्जुनौ डामराणां साहाय्येन उपद्रवनिरतावास्ताम् एव । 1143 खीष्टाब्दे मल्लार्जुने निगृहीते, कश्मीरमण्डलमुपद्रवशून्यं भविष्यतीत्याश्वस्ते जयसिंहे, अकस्मादेव अनुचिताधिकारप्रार्थी नूतनः अरिः सल्हणसुतः भोजः उदियाय । डामरा अपि शस्त्र-सज्जिता अजायन्त । अन्ते च जयसिंहस्य कूटनीतिः भोजेन समं सन्धिना सफलाभूत् ।

इदं सर्वं वर्णयन्नपि कल्हणो न कदापि लिलेख यत् हर्षकालात् प्रवर्तमानाः प्रवर्धमानाश्चः, उपद्रवाः शमं ययुः ।

---

(86) 8–898, 99, 900, 904 ।
(87) 8–916–954 ।
(88) 8–957, 59, 1174 ।
(89) 8–1127, 57 ।
(90) 8–1314, 15, 16, 17 ।

अनेन संक्षिप्तविवेचनेन निर्णीतं यत् कल्हण-जीवनस्याधिको भागः तस्मिन् दीर्घसमये ययौ यदा समस्तमपि कश्मीरमण्डलं गृहकलहैः, उपद्रवैः षड्यन्त्रैश्च पूर्णमासीत्। कवेः जीवने मनसि च तत्प्रभावःअवश्यंभावी बभूव।

**कल्हणस्य परिवारः, हर्षस्य च पतनम्**—कश्मीरदेशे प्रवर्तमानेन विद्रोहेण, उपद्रवेण च हर्षस्य राज्यं विच्छिन्नम्। तत्पतनेन समं कल्हणपरिवारे अपि दुर्दैववारिदा व्याप्ताः। अष्टमतरंगे, हर्षस्योत्तराधिकारिणां राज्येषु, वयं हर्ष-समये राजसेवानिरतान् राजपुरुषान् पश्यामः किन्तु न तत्र क्वापि दृश्यते चम्पकः। केवलमेकस्मिन् स्थले भूतेश्वरतीर्थप्रसंगे तन्नामैव दृश्यते, येन च 1135 ख्रीष्टाब्दे स जीवित आसीदित्यनुमीयते।

नन्दिक्षेत्रे स तत्राद्यैः प्रणीतश्चम्पकादिभिः ॥ 8–2365 ॥

हर्षराज्ये उच्चपदेषु स्थितः चम्पकः तत्पतनानन्तरं जनजीवने प्रजायै न किमप्युल्लेखनीयं कार्यमकार्षीत्। धर्मकार्येषु प्रायेण निरतः स उवास। राजकार्यात् विरक्ते च तस्मिन् कल्हणःअपि प्राप्यानधिकारान् न प्राप्नोत्।[91]

**कल्हणस्य संरक्षकत्वम्**—राजतरंगिण्या ज्ञायते यत् कल्हणः कस्यापि राज्ञो राजसभायां नैकमप्युच्चपदमलंचकार। न च कस्यापि नृपतेः विशेषस्नेहं सम्मानं वा प्राप।

**जयसिंहः**—प्रायेण कविभिः स्वसंरक्षकाणां राज्ञां स्तुतौ बहूनि काव्यानि पद्यानि वा विलिखितानि। किन्तु न खलु कल्हणस्तच्चकार। राजतरंगिण्याम् तद्विपरीत्यमेव विलोक्यते। कवेः जीवन-काले प्रायेण जयसिंह-भूपतेः राज्यमासीत् किन्तु केवलं न तत्प्रशंसायां किंचिल्लिलेख कल्हणः। निष्पक्षतया स तस्य गुणैः सह भीषण-दुर्गुणानां दुर्वृत्तानां चापि पदे 2 भर्त्सनाञ्चकार। यया च स्फुटं जायते यत् नासीत् कल्हणः सभाकविः।

भूभृतः जयसिंहस्य चरित्रं वर्णयन् कविर्लिखति यत् मन्त्रिणः, राजनि गाम्भीर्यस्य अभावं व्यलोकयन् अतएव राजापि तान् सिषेवे। राज्ञः जाड्यत्वम् मूढजनसंग्रहप्रवृत्ति[92] च कविः पौन-पुन्येन प्रादर्शयत्। किन्तु अष्टमतरंगावसाने तस्य प्रशंसामपि कृतवान्।

भूपतेः भीषणदूषणानि प्रदर्शयन् कविर्लिलेख।'यो हि जयसिंहसदृशो नृपतिः अतथ्यं तथ्यं, असत्यं सत्यं पश्यति, अचिरेणैव स अन्यैः कदर्थ्यते। कस्मिन्नपि कार्ये विघ्नविहतः जयसिंहः स्वदुष्कृत्यानि स्मरन् ततापः। बहवो जना निगदन्ति यत् जयसिंहः कौर्यधाम आसीत्। स्वार्थपरायणः राजा अपराधिनमपि न किंचिदुवाच।[93]।" जयसिंह-शासने दुर्दशां वर्णयन् कविराह–सुस्सलद्वैराज्ये अपि न हि तादृशः संकटो दृष्टिगोचरोऽभूत् यथेदानीं तत्पुत्रं परितः।[94]

---

(91) 8–1566।

(92) 8–2105, 2106, 2381।

(93) 8–2083, 2186, 2381, 2978।

(94) 8–2809।

प्राशः कवयः स्वसंरक्षकाणां दुर्गुणानविगणय्य तत्प्रशंसायामेव निरता भवन्ति । राजतरंगिण्यां न तथा दृश्यते । कविः जयसिंहस्य दुर्गुणान् बहुशः वर्णितवान् । प्रशंसायान्तु श्लोकाः केचन एव विद्यन्ते । अतः जयसिंहः नासीत् कल्हणस्य संरक्षक ।

**सुस्सल** :–जयसिंहजनकः सुस्सलः अपि कल्हणस्य संरक्षकत्वेन नैव संभाव्यते । यतः कविः निर्भयमेव तस्य चरित्रस्य दुरन्तदूषणानि भीषणक्रौर्यम्, लुब्धप्रकृति प्रायेण वर्णयति । सुस्सलः प्रेतशासित आसीदिति लोकप्रवाद-प्रकथने नहि संकोचं चकार कल्हणः । तस्य क्रुद्ध-प्रकृति वर्णयन् सः प्राह, पृथ्वीहरादिभिः कृतमुपद्रवं वीक्ष्य तीव्र-प्रकोपः सुस्सलः कुपथं समाललम्बे यं च केचित् दुर्दैवोपहता एवालम्बन्ते[95] ।

सुस्सलस्य राज्यप्राप्तिमुल्लिखन्नाह कविः–4194 लौकिकाब्दे छलकपटैः राजा भूत्वा सुस्सलः भूतैरधिष्ठित इव यावज्जीवं प्रजासंहारमकार्षीत् ।[96]

एकतस्तु कटुशब्दैः सुस्सलस्य निन्दां करोति अपरत्र च भिक्षाचरस्य शूरतायाः महोत्साहस्य च मुहुर्मुहुः प्रशंसामप्यकरोत् । स कथयति–गजेन्द्रवत् शूरवरः, संकटे सैन्यानां संरक्षकः, श्रान्तिशून्यः, श्लाघाविरहितः क्लेशसहो नान्यः क्वचिदासीत् भिक्षाचराद्व्यतिरिक्तः । तस्य शौर्येण, विजेतारोऽपि विस्मिता बभूवुः[97] । इत्थं प्रकारान्तरेषु प्रशंसितोऽपि भिक्षाचरः नहि कल्हणपरिवारस्य लाभमकरोत् । तस्मान्नापि सुस्सलः नैव च भिक्षाचरः कल्हणस्य संरक्षकत्वेन स्वीकर्तुं शक्यते ।

केचित् विद्वांसः अलकदत्तं कल्हणसंरक्षकमाहुः तदपि नैव समीचीनम् । तस्य संरक्षकत्वे नोपलभ्यते किंचित् प्रमाणं, स्वयं कल्हणः एकमपि शब्दं न लिलेख तद्विषये । वस्तुतः कवेः जनकः चम्पक एव तस्य संरक्षकः, पथ-प्रदर्शकश्चासीत् मन्मते ।

**देशवासिनां कृते कल्हणस्य विचाराः**—कविसम्मतौ काश्मीरिकेषु शारीरिक-शक्तेः नैतिकशक्तेश्च न्यूनता, तच्चरितस्य उल्लेखनीयं वस्तु वरीवर्ति । अधमजातिषु, वर्गेषु तावत्तस्याः शक्तेः सर्वथाभाव एवाभूत् । ऐतिहासिक-घटना वर्णयन् कविः हास्य-रसमाश्रित्य-काश्मीरिकाणां सैनिकानां कातरतायाः चाटुकारितायाश्च विशेषतः वर्णनमकार्षीत् ।

सेवकानां प्रथमप्रहारस्यैव भयवशात् तुंगस्य प्राणाः निर्ययुः । भीतस्य च राज्ञः संग्रामदेवस्य निरुद्धः श्वासः अपि प्राचलत् । तच्चावलोक्य धर्मपुत्रस्य पार्थस्य दुर्बुद्धेः कंकस्य भयात् मलमूत्रं निर्गतं, शस्त्रं च भूमौ पतितम् । तुंगमन्त्री च चंगः शस्त्रहस्तः अपि कान्तावत् मौनं-दधौ । संग्रामराजेन प्रहिताः नानभागनन्दिमुख-प्रमुखा अपि तुंगवत् तुरुष्काहवे पलायिताः[98] । काश्मीरिका जनप्रवादादेव भयन्ते स्म ।

---

(95) 8–654, 1460, 675 ।
(96) 8–1460 ।
(97) 8–1067, 1767, 68, 76 ।
(98) 7–84, 86, 87, 118, ।

पार्थिवो हर्षः "तुरुष्काः आस्कन्दोद्यता सन्तीति" दंडनायकेन कृताया विभीषिकाया एव कारणात् साध्वसात् कृत्स्नां कोशसामग्रीं विहाय ससैन्यः पलायांचक्रे[99]। दुग्धघाटदुर्गे युध्यन्ती हर्षसेना सर्वम् सैन्यवस्तुजातं, कोशं, श्रियं, आयुधजालञ्च विसृज्य पलायनपरायणाभूत्। तृणकम्पनमात्रेण गर्गसेना सशंकाभूत्। "उत्पलो हतः" इति जनश्रुतिमाकर्ण्य सुस्सलसेवका भयात् पलायिताः। सुस्सलस्य हत्यां विधाय हन्तारः पलायितवन्तः प्राणरक्षणाय। सुज्जेः तुरहीघोषं श्रुत्वैव शत्रवः अन्ये चापि पलायांचक्रिरे[100]।



एतैः शब्दैः काश्मीरसैनिकानामप्रतिकातरता विभीषिका, जनश्रुतिमात्रेण पलायनप्रवृत्तिः स्पष्टं दृश्यते। कल्हणः सर्वमिदमनुभूयैव लिखितवान्।

असकृत् कविः निजकालस्य शासकानां, प्रधानाश्रयाणां राजपुत्राणामन्येषां च शौर्येण सममेव तेषां धनलोलुपतामपि प्रदर्शयामास[101]। कविः स्वजीवनकाले काश्मीरिकेषु सर्वत्र द्रोहप्रवृत्तिं ददर्श। ये खलु लब्धप्रभावा राजपुत्रा राजभृत्या वा स्वस्वामिनं विक्रेतुं, तन्नाशाय वा उद्यता अभूवन्, कटुशब्दैस्तानाक्षिपन् कल्हणः वर्णयति। विपद्ग्रस्तस्य हर्षस्य सहायतां नहि कश्चित् मन्त्री ब्राह्मणो वा चकारेति वर्णयन् कविस्तान् धिक्करोति, तन्मते भक्तिशून्या जना धिक्करणीया भवन्ति[102]।

राजद्रोहिणां वर्णनेन सह अनेकेषां राजभक्तानां स्वामिभक्तेरपि ससम्भ्रमसमुल्लेखः कविना विहितः। उच्चलेन बद्धः अपि सुहेलः स्वामिभक्तत्वात् प्रभवे हितमेवाचिन्तयत्। स्वामिद्रोहस्याशंकया कलंकितेषु राज्ञः हर्षस्य सेवकेषु, स्वामिभक्तः मन्त्री चन्द्रराज एव केवलं कलेवरं दत्वा कीर्तिम् बुभोज। हर्षस्य सुस्सलेन सह युद्धे प्रवर्तिते सति मिल्लः रणक्षेत्रं गत्वा प्राणान् त्यक्त्वा स्वामिभक्तिं प्रादर्शयत्। राजभक्तस्य हिल्लातनयस्य कलशस्य कौशलं वर्णयन् कल्हणः स्ववाणीं पुण्यभागिनीं मनुते। मल्लकः स्वस्वामिनः प्राणरक्षां कुर्वन् वीरशय्यायामशेत[103]।

कल्हणः देशवासिनां स्वभावे, परिवर्तने परितोषमपि प्राप। नवपार्थिवस्यागमनवृत्तं सामोदं ते सर्वत्राकथयन्[104]। काश्मीरिका आधुनिक-भाषायां निसर्गतः

---

(99) 7–1158, 59।

(100) 7–1191, 8–464, 1322, 42, 1880, 88।

(101) 8-1047, 82-88, 1148।

(102) 7-1608, 10, 11, 8-782, 803, 24, 923,27, 41, 1522 35, 37, 7-1411।

(103) 7-1323, 76, 1534, 8-2157, 2330।

(104) 7-1466, 8-702, 711।

पुंजीवादिनोऽभूवन्। अर्जितं वित्तं ते गर्ते न्यक्षिपन्, अश्वादीनां क्रयैः विक्रयैः वा च तदवर्धयन्[105]।

**डामराणां विषये विचाराः**—डामराणां कृते महती घृणा अनुभूयते कविहृदये। तेषां हि अप्रतिमा शक्तिः उपद्रवप्रवृत्तिरेव हर्षपतनस्य, कल्हणजीवन-काले च देशे समुत्पन्नानामापदां प्रधानं हेतुरासीत्। तदेव च प्रधानं कारणमभूत् कल्हणहृदये घृणायाः। डामराणां कृते प्रयुक्तः दस्युशब्दस्तच्चरितं सम्यक् प्रदर्शयति[105]।

कल्हणमते ते वै डामरा निसर्गतः रुक्षाः क्रूरा असभ्याश्चासन्। धनसंग्रहं, अन्नसंग्रहं च कृत्वा गर्वितास्ते नृपाज्ञातिक्रमणोद्यता अभूवन्। तेषामेतेषां दोषाणां वर्णने कविः न क्वापि शैथिल्यं प्रदर्शयामास[106]।

क्षुद्रप्रकृतिषु प्रजापीडकेषु राजसु सत्सु ते डामरा न केवलं कृषकवर्गे एव अपितु राजकर्मचारिषु राजधान्या ब्राह्मणेष्वपि च अत्याचारान् चक्रुः। ते तत्परिवाराः क्षेत्राणि च तेषामेवानुकम्पया जीवनं दधुः।

कटुशब्दैः डामराणां क्रौर्यं लम्पटतां च प्रदर्शयन्तं कविं वीक्ष्यानुमीयते यत् संभवतः कल्हणस्य परिवारोऽपि डामरदुष्कृत्यैरत्याचारैश्च पीडितोऽभविष्यत्।

**अधिकारीन् प्रति विचारः**—कल्हणः उच्चपदेष्वासीनानामधिकारिणां पक्ष-पाती नाभूत्। कायस्थानां निन्दनीयकर्मणां निर्देशेन, तदुपर्याक्षेपेन चेदं स्फुटं जायते। कविस्तान् गुणिनां गुणधननाशस्य, राज्ञां च कीर्तिक्षतेःमूलकारणममन्यत। प्रकृत्या कृपणाः, लुब्धकाः, पापिनस्ते जनधनापहारं कृत्वा प्रजापीडननिरता अतिष्ठन्। जिघां-सवः, भूताविष्टाश्च ते कविसम्मतौ विपूचिकाशूलसन्यासादिभ्यो रोगेभ्यः अप्यधिकं भयानका भवन्ति। भूपतिभिः जनहिताय नियुक्ता अपि ते रोगा भूत्वा प्रजा नाशयन्ति। कृतघ्नास्ते लब्धावकाशा उपकारिणमपि हिंसन्ति विषवृक्षतुल्याः कायस्था यमाश्रित्य वर्धन्ते तमेव समूलं विनाशयन्ति[107]।

अत एव उच्चलस्तान् सान्वयं चिच्छेद। अनेकान् देशान्निष्कासितवान्, विविध-दंडैश्चादण्डयत्[108]। इत्थमधिकारिणां कायस्थानां क्रूरतायाः, लोलुपतायाः, कृतघ्नतायाः, वर्णनं विलोक्यानुमीयते यत् कविस्तच्चरितं सम्यक् ज्ञातवान्।

**पुरोहितानां कृत्यम्**—राजतरंगिणी बहुशः विप्रपुरोहितानां कार्यम् प्रति कवेः विचारान् स्फुटीकरोति। पर्षत्सु संगठिताः पुरोहिताः प्रायेण सर्वेषु प्रधानेषु मन्दिरेषु तीर्थेषु एकत्रीभूय धनदानादिप्रवृत्ताः सन्तो देशस्यान्तरिकनीतिषु प्रमुखं प्रभावजनकं च

---

(105) 7-418, 8-73।
(106) 8-7, 4-348।
(107) 4-621, 5-180, 439, 7-149, 1226, 8-86, 87, 88, 89, 90, 91।
(108) 8-87, 92, 107।

स्थानं दधुः । विविधासु विपत्सु प्रायोपवेशान् विधाय ते दुर्बलान् शासकानधश्चक्रुः । कल्हणः अज्ञानिनामुद्दंडानां गर्वितानां तेषां पुरोहितानां राजकार्येषु हस्ताक्षेपस्य तीव्र-भर्त्सनामकार्षीत् । बहुशः कविः तत्परिषदामुपहासं कुर्वन् तत्कातरतां हठप्रवृत्तिं, गर्वोक्तिं, अनशनैरात्महत्यां च निनिन्द[109] ।

**वणिक्-प्रवृत्तिः**—कल्हणो वणिजां दुष्प्रकृतिं लोलुपतां, छलं च वर्णयन् तेषां चरितस्य स्वभावस्य च गहनाध्ययनं सूचयति । स ब्रवीति वणिगन्तिके न्यस्तस्य वस्तुनो भूयः प्राप्तिर्न सम्भाव्यते, धनादानसमये तु वणिक् तैलस्निग्धमुखो भवति[110] । दान-समये च व्याघ्रादप्यधिकामुग्रतां प्रदर्शयति । "**न्यासग्रासविवादोग्रो वणिक् व्याघ्राद्विशिष्यते**" 8-129 ।

धनसम्बन्धिविवादसमये शठतां परित्यजन्त इव दृश्यन्ते वणिजः, वस्तुतस्तु प्राणान्ते अपि न तत् त्यजन्ति । षडंगेषु तिलकचर्चितः वणिक् वृश्चिक इव क्षणादेव प्राणान्तं करोति । रक्तं मासं च स कर्षति जनानाम्[111] ।

अनेन वर्णनेनानुमीयते यत् कविः वणिक्स्वभावं सम्यगनुभूतवान्, यद्वा कल्हणः, अन्यो वा कश्चित् तत्परिचितः वणिजा केनचित् संतापितोऽभूत् ।

**समकालीनपुरुषैः सह कल्हणस्य सम्बन्धः**—काव्यस्याध्ययनेन साधु प्रतीयते यत् कविः वर्णितैः बहुभिः प्रधानपुरुषैः समं सुपरिचित आसीत् । किन्तु निष्पक्षतया कृतेन प्रख्यातमनुष्याणां यथार्थवर्णनेन नेदमवगम्यते यत् कैश्चित् सह कवेः विशेष-सम्बन्धः आसीदिति ।

**रिल्हणः**—इदमनुमीयते यत् रणांगणेषु सुस्सलस्य विश्वासपात्रभक्तेन, सर्वकृत्येषु सहायकेन, जयसिंहस्य च शासनकाले समधिगतप्रभावेण मन्त्रिणा रिल्हणेन समं तस्य मैत्री अभूत् । जयसिंहनृपतेः उच्चाधिकारिषु रिल्हण एव केवलं, स्वगुणैः, विद्यायाः संरक्षकत्वेन च संस्तुतो ननु । कविर्निगदति यत् स खलु रिल्हणः गुणग्राम-बान्धवः, धर्ममार्गे च समस्तामात्यवर्गस्य मार्गदर्शकः, अवर्तत । शुद्धधीः स तपोधनान् धर्मवृद्धान् च न कदापि तत्याज । तज्जीवनं दानैः धर्मकन्याविवाहैश्च पूर्णमासीत् । यज्वनामाश्रयदाता, नैकमठमन्दिराणां निर्माता, स किल बभूव ।[112]

रिल्हणस्येदं वर्णनं न केवलं वर्णनमात्रं खलु । किन्तु कल्हणेन लिखिता मित्रं प्रति प्रशस्तिरस्ति । अस्य शैली अपि, अन्यवर्णनेभ्यो भिन्ना एवास्ते । इदं यथार्थ-वर्णनं व्यक्तिगतसम्बन्धेनैव संभाव्यते ।

---

(109) 5-465, 7-13, 8-902, 939, 768, 78, 2337 ।
(110) 8-128 ।
(111) 8-128, 29, 30, 33, 34 ।
(112) 8-2403, 4, 5, 6, 8, 9, 10-18, 3364-70

**उदयः अलंकारः राजवदनश्च**—जयसिंहराज्ये उच्चपदासीनः अलंकारः अपि सुविशेषं वर्णितः। मंखस्य काव्येन ज्ञायते यत् अलंकारः विद्याप्रेमी, विद्वान्, विदुषामाश्रयदाता चासीत्। कल्हणः अपि तत् पुष्टिं चकार। पूर्वमस्माभिर्ज्ञातं यत् अलंकारेणायोजितायां साहित्यपरिषदि कल्हणः अप्यवर्तत। तदाप्रभृति एव संभवतः कल्हणस्यालंकारेण सह सम्बन्धः समजनि।

द्वाराधिपमुदयं प्रत्यपि विशेषं स्नेहं सम्मानं च कविर्वर्णितवान्। इदन्तु चित्रं यत् जयसिंहविरोधे कृतस्य विद्रोहस्य नेता राजवदनः अपि ससम्मानं वर्णितो विद्यते। तस्य शौर्यकर्माणि बहुशः कविना प्रदर्शितानि।[113]

कल्हणेन रिल्हणालंकारोदयराजवदनानां कृते प्रदर्शितः विशिष्टसम्मानः प्रदर्शयति यत् तैः सह सुसम्बन्ध आसीत् कवेः।

**कल्हणस्योद्देश्यम् महत्वम् च**—कल्हण-व्यक्तित्वसूचकानि सर्वाणीमानि तथ्यानि वीक्ष्यास्माभिः राजतरंगिण्याः लेखनोद्देश्यं अवगन्तुं शक्यते। प्रतिष्ठितपरिवारे जनिं लब्ध्वा, पितरि चम्पके राजसभायां सम्मानिते सतीदं संभाव्यते स्म यत् कल्हणः अपि पितृवत् देशाय हितावह कार्यम् सम्पादयिष्यतीति। किन्तु देशस्य परिस्थितिभिः अशान्तराजनीत्या च स कविपदे प्रतिष्ठापितः। न खलु स प्राप्तुमैच्छन् कमप्युच्चपदं नापि साचिव्यम्। जन्मना लब्धा रुचिः, गुरुपरम्पराप्राप्ता शिक्षा च तस्मै देशस्य परम्पराणां देशेतिहासस्य, तत्कालीन-परिस्थितीनाञ्च अध्ययनाय प्रेरणां ददौ। जन्मान्तरसंस्कार-लब्धा काव्यप्रतिभा च उद्बुध्य काव्यकर्मणि तं न्ययुंक्त।

राजनीतिविषये कवेः दृढविचारान्, स्वदेशेतिहासस्य घटमान-घटनानां वृतानां चावबोधाय तच्छक्तिं वयं साधु ज्ञातुं शक्नुमः। सेनानां यात्राणाम् विविध-युद्धानां यथार्थ-वर्णनं वीक्ष्येदमवगम्यते यत् कल्हणः युद्धकला-कौशलं शास्त्रं वा वेद।

देशस्य स्थलाकृति-विज्ञानस्य, भौगोलिक-परिस्थितीनां च विस्तृतज्ञानं तस्य भूयो भूयः देशाटनं सूचयति। एतस्य विस्तृतज्ञानस्य भ्रमणस्यैव वा फलं यत् कल्हणस्य विविधघटनानां गुम्फने जनानां व्यक्तित्व-चित्रणे च यथार्थता दृष्टिपथमायाति।

अनेन खलु संक्षिप्त-विवेचनेनेदं ज्ञायते यत् कवेः प्रधानमुद्देश्यं स्वदेशस्येतिहासस्य, संस्कृतेः सभ्यतायाश्च यथार्थरूपेण चित्रणमासीत्। तत्र च कविः पूर्णरूपेण साफल्यं लेभे। अतएव भारतस्य संस्कृतकविषु महाकवेः कल्हणस्य महत्वपूर्णम् सम्मानपूर्णम् च स्थानं वरीवर्ति।

कालिदास-भवभूति-बाण-बिल्हण-प्रभृतयो विश्व-विश्रुता महाकवयः स्वसंरक्षकानां प्रशंसायां स्वकाव्यान्यलिखन्, न हि तैः स्वनायकानां यथार्थचित्रणं विहितं, न खलु च तेषां दोषाः स्वकृतिषु प्रदर्शिताः। कल्हणस्तु नैव कस्यापि पराधीनतां स्वीचकार, स्वतंत्र-रूपेण, स्वतन्त्र-रीत्या, स्वतन्त्र-बुद्धया च सर्वमलिखत्।

---

(113) 7-2423 टि., 8-2501-4, 2695-99, 2993

कल्हणस्याध्ययनप्रकारः सर्वेभ्यः अपि कविभ्यः भिन्नः अभवत् । आधुनिककालस्य अनुसन्धातॄणां, अध्ययनमिवासीत् तस्याध्ययनम् । न खलु कविना केवलमुपलब्धं सर्वम् संस्कृतसाहित्यमेव दृष्टमपितु स्वविषय-पुष्टिकरणाय, विविधानि प्रशस्तिपत्राणि आज्ञापत्राणि, भवनानि, मन्दिराणि, चापि तेन दृष्टानि । यच्चान्यः कविः नाकार्षीत् ।

देशस्येतिहासप्रदर्शनमासीत्तस्य प्रधानमुद्देश्यम् । तस्मिन् च असंशयमेव स सर्वानपि कवीनतिशेते । बाण-मंख-बिल्हण प्रभृतयः अपि इतिहासमलिखन् किन्तु न वर्तते तेषामितिहासे यथार्थता । अद्यावधि नैकेनापि संस्कृत-कविना, तिथिक्रमानुसारं भारतेतिहासः प्रदर्शितः । कल्हण एव प्रथमः एतादृशः कविरस्ति । राज्यसभायाः, युद्धानां, राजनीतिक-कौशलानां वर्णनात् पूर्वम् कविना प्रत्यक्षं सर्वम् विलोकितम् । नैकानि पद्यानि तस्य साक्षात्द्रष्टृत्वं सूचयन्ति । राजतरङ्गिणी खलु भारतेतिहासस्य सर्वाधिक-प्रमाणितः, सर्वप्रथमश्च लिखित इतिहास आसीदिति विद्वांसो वदन्ति । अद्यापि च इतिहासलेखकाः इतिहास-जिज्ञासवो वा न हि राजतरंगिणीमुपेक्षन्ते । काश्मीरप्रदेशस्य तु विस्तृतं पूर्णम् च वर्णनं अन्यस्मिन् काव्ये न विलोक्यते ।

न हि इतिहासकाररूपे एव कल्हणः सर्वेषां कविपुंगवानामग्रगण्यः किन्तु कविताक्षेत्रे अपि नवीनता तत्कृतौ दृष्टिगोचरा जायते । वर्तन्ते तत्र बहूनि मौलिकतत्त्वानि । भास-कालिदास-प्रभृतयः कविप्रवराः आचार्यवरैः प्रतिपादितां सरणिं त्यक्तुं न समर्था अभूवन् किन्तु कल्हणः सर्वप्रथममेव आचार्याणां मार्गं विसृज्य नूतनां सरणीमंगीचकार 'एक एव भवेदंगी शृंगारो वीर एव वा'' इति आचार्याणामुपदेशः । कल्हणस्तु शान्तरसं प्रधानत्वेन स्वीचकार ।

सर्गबन्धो महाकाव्यमिति आचार्याणां मतं, कल्हणस्तु स्वकृतिं तरंगेषु विभाजितवान्, आचार्यैः प्रतिपादितेषु नैकतत्त्वेषु कल्हणेन परिवर्तनं विधाय नूतनो मार्गः अनुसृतः । तच्च राजतरंगिण्याः विषये लिखिते द्वितीये तरंगे विस्तरेण विलोकनीयम् । अपि च कवयः देशस्य परिस्थितिं वर्णयन्तः तत्भूगोलं विस्मरन्ति । कल्हणस्तु भौगोलिक-दशानामपि विस्तरेण यथार्थम् वर्णनं कृतवान् ।

भारतस्य विशेषतश्च कश्मीराणां संस्कृतेः सभ्यतायाश्च पूर्णम् विस्तृतं स्फुटं च यादृशं चित्रं राजतरंगिण्यामवाप्यते न तथान्यत्र । अत एव विद्वद्भिः कृतिरियं पौनःपुन्येन प्रशंसिता ।

इदं खलु कल्हणस्य महत्त्वं, तच्चरित्रस्य व्यक्तित्वस्य सूचकानि तत्त्वानि, राजतरंगिण्याः विस्तृतमध्ययनं कृत्वा अधिकं स्फुटीभविष्यन्ति ।

———

## द्वितीयः तरङ्गः

# राजतरङ्गिणी

**कल्हणकृतिः**—राजतरंगिणी कल्हणकृतिरस्ति। अन्यां कामपि कृतिं कविरकरोन्नवेति त्रैमत्यमत्र विदुषां वरीवर्ति। रत्नाकरस्य "सारसमुच्चय" इति ग्रन्थे उद्धृतेनैकेनोद्धरणेन ज्ञायते यत् कल्हणः जयसिंहस्य जीवनमाश्रित्य "जयसिंहाभ्युदयं" नाम काव्यमपि विरचितवान्, संभवतः अपरापि काचित् कविता कविना कृता स्यात्, तथापि केवलं राजरंगिणी एव सम्प्रति उपलभ्यते।

राजतरंगिणी कल्हणविरचितैव खलु इति काव्यस्यान्तः प्रमाणैरेव सिद्ध्यति : प्रथमतरंगे कविरलिखत्—

तदमन्दरसस्यन्दसुन्दरेयं निपीयताम्।
श्रोत्रशुक्तिपुटैः स्पष्टमंग राजतरंगिणी ॥ 1-24 ॥

अष्टमतरंगस्यान्तिम-पद्येऽपि तन्नामावलोक्यतेः—

विश्रान्तये विशति राजतरंगिणीयम् ॥ 8-3449॥

अपि च प्रत्येकं तरंगस्यावसाने एका पंक्तिः शब्दान्तरेषु सर्वत्र दृश्यते—

इति काश्मीरिक–महामात्य–चम्पकप्रभु–सूनोः कल्हणस्य राजतरंगिण्यां...... तरंगः।

तस्मात् राजतरंगिणी कल्हणस्यैव रचनास्तीत्यत्र न संशयावकाशः।

**परिचयः**—राजतरंगिणी अष्टसु तरंगेषु कविना विभाजिता ननु। तस्याः प्रथमे तरंगे त्रिसप्तत्युत्तरशतत्रयं, द्वितीये एकसप्तत्यधिकशतं, तृतीये त्रिंशदुत्तर-पंचशतकं, चतुर्थे विंशत्युत्तरसप्तशतं, पचमे त्रिरशीत्यधिकशतचतुष्टयं, षष्ठे अष्टषष्ट्यधिकत्रिशतं, सप्तमे द्वित्रिंशदुत्तर-सप्तदशशतं, चरमे तरंगे च एकोनपंचाशदुत्तरसहस्रत्रितयं, पद्यानि वर्तन्ते। संपिडितेन षड्विंशत्यधिकाष्टशतं सहस्राणां सप्तकं चेति पद्यानां संख्या तत्रास्ति।

राजतरंगिणी काव्यं वर्तते किन्तु तत् खलु उद्देश्ये विस्तारे शैल्यां च चरितकाव्यैः सर्वथा भिन्नं विद्यते। विक्रमांकदेवचरित-महाकाव्ये यथा विक्रमांकदेवस्य, हर्षचरिते यथा राज्ञो हर्षस्य, नैषधे नलस्य च चरित्रं वर्णितं, न तथा राजतरंगिण्यां

दृष्टिपथमायाति । न हि तत्र कस्यचिदेकस्य राज्ञः पुरुषस्य वा चरितं वर्णितमपितु शतशो राज्ञां चरित्रस्य तरंगिणी तत्र प्रवहति अत एव "राज्ञां तरंगिणी" इति व्युत्पत्या काव्यस्य नाम "राजतरंगिणी" इति निष्पन्नम् ।

अन्यच्च चरितकाव्ये प्रायेण नायकस्य सच्चरितमेव वर्ण्यते, संरक्षक-राजानमाश्रित्य तत् निर्मीयते दूषणानि च तस्य नोल्लिख्यन्ते । किन्तु न तथा दृश्यते राजतरंगिण्याम् । राज्ञः जयसिंहस्य राज्ये निवसतापि कल्हणेन तस्य गुणवर्णनेन समं तन्नृशंसकर्मणां दोषाणां च कटु-शब्दैः भर्त्सना कृता । अन्येषामपि राज्ञां गुणदोषावुभावपि कविः प्रदर्शितवान् ।

राजतरंगिण्या लेखने कवेः प्रधानमुद्देश्यं पुराकालादारभ्य निजकालपर्यन्तं शतशः शासकानां यथार्थमितिवृत्तप्रदर्शनमासीत् । कविः स्वकृतिं प्राचीनभारतस्य प्रचलितपरम्पराणां द्योतकैराख्यानैः प्रारभते । तत्कृते च प्राचीनकाले लिखितेभ्यः प्रबन्धेभ्यः बहून् नृपतीन् जग्राह, क्रमेण च तान् वर्णितवान् ।

अन्तिमतरंगः विस्तारदृष्ट्या च सर्वाधिकं महत्वपूर्णो ननु । तत्र वर्णितानां घटनानां कल्हणः प्रत्यक्षदर्शनेन यद्वानुभवेनैव निबन्धनं चकार । सर्वा अपि तत्रोल्लिखिता घटनाः कल्हणेन स्वतन्त्रधिया लिखिताः सन्ति । अनेनैव हेतुना सभाकवीनामिव सर्वं वर्णनं प्रशस्तिमात्रमेव नास्ति । तस्मात् चरित-काव्येभ्यः इदं काव्यं सवथा भिन्नं नाम ।

अथ च कल्हणः स्वात्मानं "कविः, महाकविः" इति भणति "इति काश्मीरिक"—इति उक्ता पंक्तिः तस्य कवित्वे प्रमाणम् । अपि च—

**इति श्रीमहामात्यचम्पक-प्रभुसूनु-महाकवि-श्रीकल्हण-कृतायां राजतरंगिण्यामष्टमः तरंगः ।**

अत्र स स्वात्मने महाकविपदं प्रयुक्तवान् । किं च कल्हणः तमेव कविं प्रशंसनीयमाह यस्य काव्यं पीयूषमप्यधः करोति । यच्च स्वात्मने परस्मै च कीर्तिं दद्यात् । स आह 'रम्यनिर्माणकर्तॄन् कवि-प्रजापतीन् विहाय को नामान्यः व्यतीतं कालं द्रष्टुं शक्नोति । ते कविवेधस एव राज्ञां कीर्तिकायस्य कर्तारो भवन्ति[1] । कविकर्म एव काव्यं भणितामाचार्यैः तच्च भूयो भूयः स्तुवन् कल्हणः कथयति ।

"महौजसां येषां नृपतिप्रवराणां भुजाश्रयं प्राप्य मेदिनी सर्वथा विगतभयाऽभूत् तेऽपि यदनुग्रहं विना स्मृतिमपि न यान्ति तादृशं हे कविकर्म तुभ्यं नमोऽस्ति ।"

"येन विना दलितेभकुम्भान् भूलक्ष्म्या अधीशान्, विविधवैभयुक्तान् भूपानयं लोकः स्वप्नवत् विस्मरति तादृक् हे कविकृत्य ! तव स्तुतिशतैः न कोऽपि लाभः, त्वां विना जगदन्धमेवास्ति[2] ।

---

(1) 1-3, 4
(2) 1-46, 47

अनेन विवेचनेन राजतरंगिणी अपि कल्हणकवेः कर्मतया काव्यमेवास्ति प्राधान्येन।

**राजतरंगिणी महाकाव्यम्**—काव्यं दृश्य-श्रव्य-भेदेन द्विधा प्रोक्तमाचार्यैः। द्रष्टुं योग्यं दृश्यं कथितम्, सर्वाण्यपि नाटकानि दृश्यकाव्यानि भवन्ति। श्रोतुं योग्यं काव्यं श्रव्यं निगदितं यथा रघुवंश किरातार्जुनीयादिकम्। श्रव्यमपि काव्यं त्रिधा विभक्तं खलु। महाकाव्यम् खण्डकाव्यम्, मुक्तकं चेति। श्रव्यकाव्ये एव 'गद्यं पद्यं चम्पूः' इत्यपि भेदत्रयं संजायते। दृश्यकाव्यमपि रूपकोपरूपकभेदेन द्विविधं भवति। उभयोरपि दृश्यश्रव्ययो र्बहवो भेदा भवन्ति।

काव्यदृष्ट्या राजतरंगिणी महाकाव्यं विद्यते। महाकाव्यलक्षणप्रसगे आचार्या आहुः यत् तत् सर्गनिबद्धं भवति। "**सर्गबन्धो महाकाव्यम्**" कश्चित् क्षत्रियः, देवत', कुलीनो वा पुरुषस्तस्य नायको जायते "**तत्रैको नायकः सुरः क्षत्रियो वापि सद्वंशः**"। वीरश्रृंगारयोः कश्चिदेको रसः प्राधान्येन भवति '**एक एव भवेदंगी श्रृंगारो वीर एव वा**" अन्ये रसा अपि च तत्र गौणरूपेण निबध्यन्ते। कथानकं तत्रेतिहासोद्भवं भवति। कस्यचित् पुरुषविशेषस्य वा चरित्रं तत्र चित्र्यते। प्रत्येकस्मिन् सर्गे एकमेव वृत्तं प्रयुज्यते। किन्तु सर्गान्ते वृत्तपरिवर्तनं जायते। सर्गाः परिमाणे नातिदीर्घाः नातिस्वल्पा भवन्ति। अष्टाधिकाश्च ते लिख्यन्ते। सर्गान्ते चागामिकथानकं सूचितं भवेत्। वृत्ताञ्चालंकृतं परिबृहितञ्च विधातुं सन्ध्या-सूर्योदय-प्रदोष रात्रि-तमश्चन्द्रोदय-कानन गिरि-सागर-ऋतु-प्रभृतीनां वर्णनं स्थाने स्थाने अपेक्षितं भवति। श्रृंगाररस-पोषाय मध्ये मध्ये, स्त्रीणां जलकेलिप्रभृतयोऽपि वर्ण्यन्ते। वीररसप्रसंगे युद्ध-मन्त्रणाक्रमणास्त्र-शस्त्राणां सांगं वर्णनं विधीयते। नायकप्रतिनायकस्य संघर्षः महाकाव्स्य प्रधानं विषयो ननु। तस्य च प्रधानं लक्ष्यं अधर्मे धर्मस्य, अन्याये न्यायस्य विजय-प्राप्तिराचार्यैः प्रतिपादितम्[3]। कल्हणः सर्वेषामप्येतेषां लक्षणानामन्धानुकरणं नाकार्षीत्। तत्र वर्तते मौलिकता नूतनता चापि।

प्रथमन्तावत् राजतरंगिणी सर्गाणां स्थाने तरंगेषु विभक्ता वर्तते। तेषामाकारेऽपि न वर्तते महाकाव्य-लक्षणानामनुकृतिः। "नातिदीर्घा नातिस्वल्पाः सर्गा अष्टाधिका इह" इति न दृश्यते राजतरंगिण्याम्। केवलं द्वितीयतरंगः एव पद्यसंख्यादृष्ट्या महाकाव्यानामन्येषां सामीप्यं प्राप्नोति। अन्ये तरंगास्तु दीर्घाः दीर्घतराः, दीर्घतमाश्च विद्यन्ते। प्रथमतृतीय-चतुर्थ-पंचम-षष्ठ-तरंगाणां पद्यसंख्या शतत्रयादूर्ध्वं याति। सप्तमे तरंगे सार्ध-सहस्राधिकं पद्यानि लिखित्वा नूतनामेव धारां कविः प्रवाहितवान्। रसप्रसंगे वीरकाव्यं महाभारतं विहायान्येषां सर्वेषामपि काव्यानां प्रधानरसः श्रृंगारो वीरो वा वर्तते। कल्हणस्तु राजतरंगिण्यां शान्तरसं प्रधानत्वेन स्वीचकार।

'**मूर्धाभिषेकः शान्तस्य रसस्यात्र विचार्यताम्** ॥ 1-22॥

---

(3) साहित्यदर्पणं षष्ठः परिच्छेदः—315-325।

इमं रसमंगीकृत्य निर्वाहं च तस्य विधाया "शान्तोऽपि नवमो रसः" इति मम्मटप्रतिपादितं शान्तरससिद्धान्तं स पुपोषेति। अन्ये सर्वे अपि रसाः गौणत्वेन स्थाने स्थाने प्रयुक्ताः सन्ति।

महाकाव्यस्य नाम प्रायेण प्रधाननायकस्य, कवेःनाम्ना वा विधीयते, यथा रघुवंशम्, किरातार्जुनीमम्, शिशुपालवधम् नैषधचरितमित्यादि। किन्तु राजतरंगिण्याः चरितकाव्येभ्यो भिन्नत्वात् तस्या नाम न कस्यचिन्नायकस्य नामनि विद्यते। नापि च कविनाम्ना। किन्त अनेकेषां राज्ञामितिवृत्तपूर्णतया "राजतरंगिणी" इति नाम संपन्नम्।

किञ्च अन्येषां महाकाव्यानां सर्गाः एकवृत्तमयाः, अवसाने च भिन्नवृत्ता वर्तन्ते। राजतरंगिण्यास्तु प्रत्येकं तरंगो नानावृत्तमयो विद्यते। तरंगावसाने एकाधिकवृत्तं विलोक्यते।

अन्यानि लक्षणानि आचार्यप्रतिपादित-महाकाव्य-लक्षणानुसारं वर्तन्ते। राजतरंगिण्या अपि नायका रघुवंशादिवत् बहवः कुलजा नृपतयः सन्ति। तस्याः कथानकमपीतिहासोद्भवमास्ते। भारतवर्षस्य विशेषतश्च कश्मीराणां शतशो नृपवर्याणामितिहासस्तत्र वर्णितो विद्यते। यथास्थानं तत्र धर्मार्थकाममोक्षाणामपि फलं सूचितम्। शान्तरसप्रधानत्वात् मोक्षप्राप्तिः प्रधानं फलमस्ति। मंगलाचरणविषये "आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा" इति महाकाव्यानां नियमो विद्यते। अत्र तु राजतरंगिण्यां दृश्यते काचित् विशेषता। रघुवंशप्रभृतिषु महाकाव्येषु प्रत्येकं सर्गस्यारम्भे मंगलाचरणं नास्ति किन्तु, राजतरंगिण्याः प्रत्येकं सर्गस्यारम्भे मंगलं क्रियते। यत्र च प्रायेण अर्धनारीश्वरः शिवः संस्तुतोऽस्ति। तत्र चापि वर्तते विविधता।

प्रथमतरंगस्य प्रथमे श्लोके "नमः प्रलीनमुक्ताय हरकल्पमहीरुहे" अत्र मंगलं नमस्कारात्मकं वर्तते। द्वितीये श्लोके—'अस्तु यशसे भागो वामोऽथवा दक्षिणः" द्वितीयतरंगे—"विभोर्जयति ललनापुंगवाभ्यां शरीरविनिर्मितिः," इत्युभयोः श्लोकयोः स्तुतिसूचकं मंगलाचरणमास्ते। अन्येषु तरंगेषु तावत् "हरःपातु वः, अपर्णावतात्, सा भिद्याद्दुरितं, इत्यादि—पदैः आशीर्वादात्मकं मंगलं वरीवर्ति।

"क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनं" इति महाकाव्यनियमानुसारं डामरकायस्थादीनां राजतरंगिण्यां स्थाने-स्थाने निन्दास्ति। मेघवाहनावन्तिवर्म—भिक्षु—रल्हणप्रभृतीनां नृपतिवरेण्यानामन्येषामनेकेषां विदुषां च गुणकीर्तनं कृतं कविना। प्रत्येकं तरंगस्यावसाने आगामितरंगस्य कथायाः सूचना विद्यते। केषांचित् राज्ञां वर्णनन्तु, एकस्मिन् तरंगे एव समाप्यते, किन्तु तत्कथा अपरस्मिन् तरंगेऽपि प्रवर्तते। युद्ध-वृष्टि-सन्ध्या-सूर्य-रजनी-प्रदोष-ध्वान्त-दिवस-प्रातर्मध्याह्न-वन-पर्वत-सागराग्निदाहादीनामपि यथास्थानं तत्र दृश्यते वर्णनम्[4] यथैव च तत्रास्ति तपस्विमुनिजना-

(4) 1-366, 7-1622, 33, 8-840, 976-988, 7-478-480

नामुल्लेखस्तथैव संभोग-विप्रलम्भ-शृंगारावपि सूक्ष्मतया चित्रतौ।

विविध-युद्ध-प्रयाण-जययात्राणां राजनीतेः साम-दामाद्युपायानामपि च विस्तरशो विद्यते राजतरंगिण्यामुल्लेखः, नैकविधा उत्सवा मनोविनोदाश्चापि वर्णिता विद्यन्ते। इत्थञ्च महाकाव्यप्रसंगे वर्णितानां प्रायेण समेषामपि गुणानां तत्रास्ति संकेतः। तस्मात् राजतरंगिणी महाकाव्यमस्तीति न संशयावकाशः।

अथ च राजतरंगिण्या महाकाव्यत्वे सिद्धे तत्र विद्यमाना अलंकारशास्त्रसिद्धान्ताः गुणाश्चापि विलोकनीया ननु कविराह काव्यभूमिकायाम्—

"कथाया दीर्घतया वैचित्र्यं (अलंकार-सौन्दर्यम्) नात्र प्रपंचितं तथापि किंचित् सतां प्रीतिकरं वस्तु अत्र वर्तत एव"।[5]

भामह-वामनप्रभृतय आचार्याः अलंकार-सौन्दर्यमपि काव्येऽनिवार्यं मन्यन्ते। किरातार्जुनीय-शिशुपालवध-नैषधचरित-प्रभृतीना काव्याना तुलनायामलंकाराणाम्, तत्प्रयोगाय च विविधवर्णनानां न वर्तते तत्र अधिको विस्तारः। कथा-दैर्घ्यमेव तत्र प्रधानं हेतुः। वयं वै समस्तेऽपि महाकाव्ये केवलं उपयुक्तस्थानेषु स्वतः समागतान् अलंकारान् विविधवस्तूनां च संक्षिप्तवर्णनानि विलोकयामः। इयन्तावतत्र विशेषतास्ति, यत् हर्षादिवत् कल्हणः वर्णनेषु, अलंकारादिप्रयोगेषु च न वृथाश्रमं चकार, भाषालंकरणे एव न तूलिकायै विश्रामं ददौ। अत एव माघादीनां काव्येषु कथाभंगस्य प्रवाहाभावस्य च वर्तते महान् दोषः। राजतरंग्याण्याञ्च वर्तते कथाप्रवाहः। भाषापि सरला, सरसा, सुबोधा चास्ति। **"तदत्र किंचिदस्त्येव वस्तु यत्प्रीतये सताम्"** इत्यभिधाय कल्हणः स्वकृतिं स्थाने-स्थाने अलंकार-सौन्दर्येण अलंचकार[6]। समस्त-संसारस्य प्राणिनां क्षणभंगुरत्वं विलोक्य शान्तरसं कविः प्रधानत्वेन स्वीचकार। तत्प्रदर्शनाय च कविः अनेकेषां राज्ञां कथां वर्णयति यैर्ननु धर्मकर्माणि कुर्वद्भिः मरणमवाप्तम्[7]। राजतरंगिण्या अष्टतरंगेषु चत्वारस्तरंगाः शान्तरसस्य वर्णनेन पूर्णा विद्यन्ते।

**राजतरंगिण्यां शिक्षासम्बन्धि-गौरवम्**—शान्तरसे प्रधानत्वेन स्वीकृते वयं शिक्षासम्बन्धितत्वानि संग्रहीतुं शक्नुमः। "समस्तजन्तूनां विश्ववैभवानाञ्च क्षणभंगुरत्वं, अनित्यत्वञ्च[8] राज्यशासनानामस्थिरत्वम्, अनिश्चितता च, नैतिकनियमानामुल्लंघने जीवननाशः" इत्येव शिक्षा वर्तते राजतरंगिण्याः। सप्तमाष्टमतरंगयोः इमाः शिक्षाः सदृष्टान्तं पौनः पुन्येन पुरत आयान्ति। नीतिकार्याणि, राजनीतिः,

---

(5) 1–6

(6) 1–208, 3–414, 5–343, 7–928, 1560, 61, 8–882, 948, 49, 78, 79, 1744, 45, 2148, 49, 3366

(7) 1-367-373, 2-2, 3, 153, 3-512, 4-381, 7-1646-49

(8) 1-23, 7-433

राज्यपद्धतिः, व्यक्तिगतकर्माणि च धर्मशास्त्रेण नीतिशास्त्रेण च प्रभावितानि दृश्यन्ते ।

स्ववचांसि दृष्टान्तान् च स्फुटीकर्तुं कविः रामायणमहाभारतयोः समागतान् तादृशानेव उदाहरणान् उल्लिखति । अपि च काव्ये पुनः पुनः लोकप्रचलितानां परम्पराणां लोकोक्तीनां जनश्रुतीनाञ्चोल्लेखः तेषां दृष्टान्ताश्चापि महत्महत्वं धारयन्ति ।[9]

इदमपि च विलोकनीयं यत् राजतरंगिण्यां प्रसृतानां शिक्षाणां स्रोतांसि पुराण–रामायण–महाभारतप्रभृतीनि सन्ति । अपि च येषां राजकथाश्रितानां ग्रन्थानां कविरध्ययनमकार्षीत् यदनुकरणं चाकरोत्, तत्रासन् इमाः शिक्षाः, तासां च स्पष्टं प्रभावः राजतरंगिण्यां परिलक्ष्यते । पुराण–रामायण–महाभारतग्रन्थाः संस्कृतस्य नैककाव्यानां विकासे सहयोगं ददुरित्यत्र न विमतं मतिमताम् । कालिदास–भारवि–भवभूति–माघबाण–काव्यानि तैः प्रभावितानि सन्ति । तत्कल्हणकृतावपि तत्प्रभावः स्वाभाविक एव । इमे च ग्रन्था अद्यापि विविधसाहित्येषु, जनजीवने च सततं प्रभावमुत्पादयन्ति ।

अन्यास्तावत् कल्हणकाव्ये जनितप्रभावास्ताः ऐतिहासिककृतयः सम्प्रति नोपलभ्यन्ते दुर्दैवात् । अत एव तत्प्रभावविषये समुत्पन्नः प्रश्नोऽनुत्तर एव तिष्ठति ।

**राजतरंगिण्याः स्रोतांसि**—कल्हणः राजतरंगिण्यां वर्णितेनेतिहासेन अनेकेषां भारतीय–पाश्चात्यकोविदानां ध्यानमाकृष्टवान् । अस्य खलु विशालमहाकाव्यस्य स्रोतांसि अपि विस्तृतानि बभूवुः ।

कल्हणः इतिहासकारस्य हृदयं धत्ते भूमिकायां स लिखति यत् –"स एव प्रतिभादिगुणालंकृतः कविः श्लाघनीयो विद्यते यस्य रागद्वेशशून्या वाणी अतीतार्थप्रकथने समर्था स्यात् ।[10] इत्यनेन ज्ञायते यत् कल्हणः इतिहासकारस्य प्रधानं गुणं रागद्वेषशून्यत्वं मनुते । अपि च उदारचेताः स स्वयमेव स्वीचकार "यन्नाहं सर्वप्रथम इतिहासकारः, मत्पूर्वमपि बहुभिरितिहासकारैः भारतेरिहासः लिखितः. मया तु पूर्वसूरिभिः निबद्धं कालान्तरे स्खलितं कथावस्तु एव भूयः संयोज्यते । प्राक्तनैः विरचितानि इतिवृत्तानि सम्यगधीत्य तत्सत्यतामसत्यताञ्च समीक्ष्य, विशृंखलितेतिहास–योजनायैव उद्यमो मया विधीयते ।"[11]

इमानि वर्तन्ते स्रोतांसि राजतरंगिण्याः—

**1. अज्ञातनामान इतिहासग्रन्थाः**—भूमिकामवलोक्य ज्ञायते यत् बहवो विशालाकारा अज्ञातनामान इतिहासग्रन्थाः पुरातनैः कोविदैर्विरचिताः तेषां स्मृति

---

(9) 6–273, 364, 7–36, 136, 37, 483, 504, 616, 824 ।
(10) 1–7 ।
(11) 1–8, 9 ।

सुकरां विधातुं सुव्रतस्तेषां संक्षेपं चकार येन च ते विस्तृता ग्रन्था विच्छिन्नाः।
"सुव्रतस्य प्रबन्धेन छिन्ना राजकथाश्रयाः 1-11 ॥"

अत्र छिन्नापदस्य विविधा व्याख्या कर्तुं शक्यते। इतिहासग्रन्थाः लुप्ताः, विनष्टाः, यद्वा भग्नक्रमाः संजाता इति। इदन्तु निश्चितं यत् अनेकेषामतिविस्तृतानां ग्रन्थानां संक्षेपं कुर्वन् सुव्रतः बहून् कथांशान् विससर्ज, बहूंश्च स्वशब्दैः संक्षिप्य लोपितवान्, इत्थं च तेषां क्रमे स्खलनमपि नैवासम्भवमभूत्। अथवा इतिहासग्रन्थाः बहुखंडेषु इतस्ततः स्खलिता येषां च योजनाय कल्हणेन प्रयासः कृतः इत्यर्थोऽपि कर्तुं शक्यते।

अनेन विवेचनेन राजतरंगिण्याः प्रथमं स्रोतः, ते विच्छिन्नाः, खंडश इतस्ततो वा व्यस्ता राजकथाश्रिता ग्रन्था एवासन्। इदमपि निश्चितं यत् कल्हणः तेषां विच्छिन्नानंशान्, अधीतवान् अत एव स्खलित-योजनं सम्भवं सुकरञ्च अजायत। अस्खलितानां मूलरूपे एव वा प्राप्तानान्तु योजनस्य प्रश्न एव नोत्पद्यते।

2. **सुव्रतभारती**—सुव्रतभारती यद्वा सुव्रतेन लिखितः इतिहासग्रन्थः द्वितीयं स्रोत आसीत् राजतरंगिण्याः। कल्हणसमये सुव्रतकृतिरत्यन्तं प्रचलिताभूत्। तच्च—"या प्रथामगमत्" 1-12 इति पद्यांशेन ज्ञायते। कविः सूक्ष्मतया तदध्ययनमकार्षीत्। "दुष्टवैदुष्यतर्व्रा" 1-12 इति पदांशस्तत्रप्रमाणम्।

3. **क्षेमेन्द्रस्य नृपावलिः**—क्षेमेन्द्रः "नृपावलिः" इत्याख्यं काव्यं लिलेख यत्र तेन अनेकेषां नृपाणामितिहासो लिखितः। तच्च काव्यं तृतीयं स्रोतः अभूत्। तदध्ययने महान् परिश्रमः कल्हणेन विहितः नैकः अप्यंशः कवेरविज्ञात आसीत्।"
"अंशोऽपि नास्ति निर्दोषः क्षेमेन्द्रस्य नृपावलौ ॥" 1-13 ॥

इति श्लोकार्धः सूक्ष्माध्ययनसूचको ननु।

नृपावलिरपि कल्हणसमये प्रसिद्धिं प्रापेति अनुमीयते। अत एव सुव्रतभारतेरनन्तरम् सनामोल्लेखं क्षेमेन्द्रस्य कृतेरुल्लेखं कल्हणश्चकार। तस्य दोषबाहुल्यमपि समसंकेतयत्, दूषणानां कारणञ्च अनवधानं स आह। क्षेमेन्द्रः कल्हणात् शतवर्षपूर्वमभूत् दुर्दैवात् तस्य सम्पूर्णा कृतिर्नेदानीमुपलभ्यते।

4. **एकादशग्रन्थाः नीलमतञ्च**—कविः एकादशग्रन्थानामध्ययनस्य सूचनामपि ददाति। नीलपुराणस्य चापि संकेतं कृतवान्।

दृग्गोचरं पूर्वसूरिग्रन्था राजकथाश्रयाः।
मम त्वेकादश गता मतं नीलमुनेरपि ॥ 1-14 ॥

"दृग्गोचरम्" पदेन प्रतिभाति यत् ते ग्रन्थाः कल्हणसमये अपि पूर्णतः उपलब्धा अभूवन्। कविश्च तेषां गम्भीरमध्ययनमकार्षीत्। बहुविधाश्च सूचना घटना वा तेभ्य एव कविना संगृहीताः। अतः राजरंगिण्याः स्रोतस्सु एकादशेतिहासग्रन्थानामतीव गौरवपूर्णं स्थानमभूत्।

"मतं नीलमुनेरपि" इत्यनेन नीलमतपुराणस्य अध्ययनं सूचितं कल्हणेन। अस्य पुराणस्य प्रभावः पदे पदे राजतरंगिण्यां विलोक्यते। विशेषतश्च धार्मिक-स्थलेषु, नदीनां वर्णनेषु, सर्वतीर्थानामुल्लेखेषु, न नीलमतपुराणस्यैव छाया प्रतिबिम्बतास्ति। आम्नाय-अंशात् विस्मृतेषु विलुप्तेषु वा द्वापंचाशत्राजसु गोनन्द-प्रथमः, दामोदर-प्रथमः, यशोवती, गोनन्द-द्वितीयश्चेति नृपति-चतुष्टयं नीलमत-पुराणादेव कविः लेभे। **"तेभ्यो नीलमताद् दृष्टं गोनन्दादिचतुष्टयम्"** ॥ 1–15 ॥ अतः नीलमतपुराणमपि महत्वपूर्णं स्रोतो बभूव।

5. **हेलराजस्य पार्थिवावलिः—पूर्वमिहिरस्य च ग्रन्थः**—जात्या द्विजः महाव्रती हेलराजः "पार्थिवावलिरित्याख्यमेकं" विशालं काव्यग्रन्थं, लिलेख यत्र खलु द्वादशसहस्रं पद्यान्यभूवन्,[12] पूर्वमिहिराख्यो महान् विद्वान् तं ग्रन्थमधीत्य तन्मतं च सम्यगालोच्य, अशोकादीनां पूर्वजान्, लवः, तत्सुतः कुशः, तत्तनयः धैर्यधुरीणः खगेन्द्रः तत्सूनुः सुरेन्द्रप्रतिमः सुरेन्द्रः, निस्संततौ तस्मिन् दिवंगते च गोधरो नामान्यकुलसंभव राजा, तस्य पुत्रः सुवर्णः, तदात्मजश्च, जनकः तत्तनूजः शचीनरः इति अष्टौ पार्थिवान् स्वग्रन्थे न्यदर्शयत्।[13]

हेलराजपूर्वमिहिरयोरुभयोरपि ग्रन्थौ कल्हणेन दृष्टौ स्यातामित्यनुमीयते। अतस्तावदधीत्यैव अष्टभूपान् कल्हणो निज-काव्ये वर्णितवान्। अतः उभयमपि ग्रन्थ-रत्नं कल्हणस्य स्रोतः अभवत्।

6. **छविल्लाकरग्रन्थः**—कल्हणः छविल्लाकरस्य इतिहासग्रन्थस्य अपि उल्लेख-मकार्षीत्। स कथयति "छविल्लाकराख्यः कोविदः द्विपंचाशतनरपतिषु अशोकात् अभिमन्युपर्यन्तं पंचभूभृतां वर्णनं स्वग्रन्थे अकरोत्"[14] छविल्लाकरग्रन्थस्यैकं पद्यमपि कविरलिखत्—

आ ऽशोकादभिमन्योर्ये पंच प्रोक्ता महीभुजः।
ते द्वापंचाशतां मध्यादेव लब्धा पुरातनैः ॥1–20॥

इदं खलु पद्यं सूचयति यत् कविः छविल्लाकरग्रन्थ सम्यगधीतवान्, पंच भूपांश्च ततः प्राप्तवान्। तस्मात् राजतरंगिण्याः स्रोतस्सु छविल्लाकरग्रन्थस्यापि वर्तते विशिष्टस्थानम्। उपरि वर्णितानां सुव्रतक्षेमेन्द्र–हेलराजप्रभृतीनां विदुषां ग्रन्थोल्लेखेनायं निष्कर्षो निष्पद्यते यत्तैः, स्वकाव्यग्रन्थः अतिप्राचीनकालस्येतिहासात् प्रारब्धः। इदञ्चाप्यवगन्तव्यं यत् ये एकादशग्रन्थाः कल्हणेन दृष्टा आसन् तत्र नासीत् पूर्वकालस्य पूर्णेतिहासः, यतो नहि कल्हणस्तत्विस्तारं ददर्श। राजतरंगिणी

---

(12) 1–17।
(13) 1-84, 88, 89, 91, 95, 97, 98, 100।
(14) 1–19।

अनुमापयति यत् कैश्चित् कोविदैः केवलं समकालस्यैव राज्ञामितिहासः प्रदर्शितः। तस्मात् सर्वेषां तेषामध्ययनेनापि नाभूत् कवेः परितोषः छविल्लाकरादीनामुल्लेखेनानुमीयते यत् ते हि न पूर्णेतिहासमलिखन्, वस्तुतः तत्पूर्ववर्तिभिः यत्रेतिहासः समापितस्तत एव ते स्ववृत्तमारेभिरे। यथाहि जोनराज-श्रीवरप्रभृतिभिः कल्हणस्य पश्चात्वर्तिभिः कृतम्। अपूर्णतया च न सम्पूर्णां सामग्रीं कल्हणः प्राप्नोत्। तथापि नात्र विप्रतिपत्ति र्यत् राजतरंगिण्याः स्रोतस्तु वर्णितानां ग्रन्थानां गौरवपूर्णं स्थानमासीत्।

7. **प्रशस्तिपत्राणि-आज्ञापत्राणि-लेखा भवनानि च**—नैकानितिहासग्रन्थानधीत्यापि, अनधिगताधिकपरितोषः कल्हणः, आधुनिकानुसन्धातृवत् सर्वविधभ्रमाणां निवारणाय भृशं प्रयासमकरोत् स्वपित्रा चम्पकेन सममेकाकी च भूयो भूयः स देशाटनमकार्षीत। इतस्ततो विक्षिप्तानि बहूनि प्रशस्तिपत्राणि च ददर्श सम्यगधीतवांश्च। अनेकानि मन्दिराणि, प्रासादान्, दुर्गान् अन्यानि पुरातनभवनानि नगराणि चापि दृष्टवान् तेभ्यश्चेतिहाससामग्रीमलभत। भवनेषु लिखितान् लेखानपि स अवलोकितवान्। कल्हणे दृश्यमानेयं सूक्ष्मबुद्धिः, अन्वेषणप्रवृत्तिश्च, नान्यस्मिन् कविश्रेष्ठे दृश्यते।

कल्हणः विविधानि शास्त्राण्यपि विलोकितवान्। "**शास्त्रै**" पदेन शास्त्राणि, विविधविज्ञानपुस्तकानि यद्वा संस्कृतपुस्तकानां हस्तलिखिताः मूलप्रतयोऽप्यनुमातुं शक्यन्ते। इमाः मूलप्रतयः ग्रन्थस्यावसाने लेखकस्य, आश्रयदातुः राज्ञश्च विषये वा परिचयं ददति।

**दृष्टैश्च पूर्वभूभर्तृप्रतिष्ठावस्तुशासनैः।**
**प्रशस्तिपट्टैः शास्त्रैश्च शान्तोऽशेषभ्रमक्लमः॥ 1-15**

इदमनुमीयते यत् नैकभवनताम्रपत्रादीनामध्ययनेन राज्ञां विषये यथार्थेतिहास सामग्रीं प्राप कल्हणः प्राचीनमठमन्दिराणि विलोक्य तत एव संभवतः कविः प्राचीनशास्त्राणां मूलपुस्तकानि प्राप्नोत्। धर्मस्थलेषु मन्दिरादिषु प्रायेण तन्निर्मातृ णां राज्ञां, श्रेष्ठिनां वा परिचयः उल्लिख्यत एव पुरातनकालादद्यावधि। तान् लेखानधीत्यापि कविः महतीं सामग्रीं लब्धवान्। अपि च संभवतः धार्मिकभवनानां भित्तिषु बहूनि धर्मवचनानि लिखितानि स्युः यैश्च कल्हणः सहायतां प्राप।

इत्थं प्रशस्तिपत्राणि, ताम्रपत्राणि, वास्तुकलासूचकानि मन्दिराणि तत्रोल्लिखितानि शासनानि, नैकविधशास्त्राणि चापि राजतरंगिण्याः लेखने महद्योगं ददुरित्यत्र न संशयः। तेषामध्ययनेन च कल्हणस्य सर्वविधसंशयो विनष्टः। अतः राजतरंगिण्याः स्रोतस्सु तेषां प्रधानं स्थानमभवत्।

(8) **पूर्वकालिकवस्तूनि**—कल्हणस्य कृतिरुक्तानां सामग्रीणां प्रयोगे प्रमाणमस्ति। राजतरंगिण्यां विस्तरशः वर्णितानि मन्दिराणि, तीर्थानि, अन्यानि नैकभव-

नानि पवित्रप्रतिमाश्च निःसंशयमेव कल्हणस्य दानपत्राणां सूक्ष्माध्ययनं प्रमाणीकुर्वन्ति । शतशोऽग्रहाणां दानानाञ्चोल्लेखः ताम्र पत्राणामध्ययनादृते न संभाव्यते ।[15]

इदानीं ननु भारतेतिहासजिज्ञासूनामध्येतृणां च कृते प्रशस्तिपट्टानामतिशय महत्वं वरीवर्ति । कल्हणः बहूनि तानि ददर्श । एकस्य प्रशस्तिपट्टस्य स्वयमपि कविरुल्लेखमकार्षीत् ।

उत्तमो लोकपालोऽयमिति लक्ष्म प्रशस्तिषु ।
यः प्राप्तवान् विना यज्ञं चक्षमे न पशुक्षयम् ।। 1-344 ।।

राजतरंगिण्यामनेकेषां लेखकानां, साहित्यवृत्तानां च शतश उल्लेखैः वयं तेषां लेखकानां व्यक्तित्वस्य, समयस्य, आश्रयदातृणां राज्ञाञ्च परिचयं प्राप्नुमस्तदखिलञ्च तेषां लेखकानां कृतीनां मूलरूपस्यावलोकनेन विना न संभवति वर्णयितुम् ।

9. मुद्राः—शिलालेखाः, लिखितानि पत्राणि, शास्त्राणि, चैव नासन् केवलं राजतरंगिण्याः स्रोतांसि अपितु नैकमुद्राणामपि कविरध्ययनं चकार । मुद्राभिश्चापि यथार्थज्ञानं तेनाधिगतम् । तृतीयतरंगे कविः तोरमाणमुद्राणामुल्लेखं चकार ।

तोरमाणेन दीन्नाराः स्वाहताः संप्रवर्तिताः ॥ 3–103 ॥

संभवतः कविस्तन्नृपतेः मुद्रां स्वयं दृष्टवान् । षष्ठतरंगे कल्हणः लिखति यत् दिद्दायां रक्तमानः सिंहराजः "दिद्दाक्षेम" इति लज्जावहां ख्यातिं ययौ 16, स हि स्वनामांकितान् दीन्नारानपि प्रावर्तयत् । दिद्दाक्षेम-विषये प्रवर्तितायाः कथाया आधारोऽपि संभवतः दीनार एवाभूत् । यं च कल्हणोऽपि ददर्श ।

सप्तमतरंगे राज्ञा हर्षेण प्रवर्तिताया मुद्राया उल्लेखो वरीवर्ति । (7–926) "कर्णाटानुगुणष्टंकस्ततस्तेन प्रवर्तितः" जनरलकनिंघम-महोदयः अप्यस्योल्लेखं चकार । स्वर्णनिर्मिताः हर्षनामांकिताः टंकाः सम्प्रत्यपि प्राप्यन्ते । अतः कल्हणेन तदध्ययनं, अवश्यमेव कृतं स्यात् ।

अष्टमतरंगे कलशस्योच्चलस्य च नामांकितानां टंकानामुल्लेखो विद्यते तैः सममपि कल्हणस्य पूर्णपरिचय आसीत् ।[17] षष्टतरंगे टंकनिर्माणस्य विद्यते वर्णनम् ।

........"प्रादात् टंकान्तःपुरबर्जिताम्" 6–88 ।

तस्मादितिहासलेखनात् पूर्वं बहवःटंका अपि कल्हणेनन दृष्टा इति निर्विवादं ननु ।

---

(15) 1–347 टि०, 2–132 ।
(16) 6–177 ।
(17) 8–151, 52, 53, 4–263 ।

**10. प्राचीनवस्तूनि**—अन्यच्च पूर्वकालस्य प्रभूतवस्तूनां विलोकनस्य तदध्ययनस्य च रुचिः कल्हणे बभूव । बटेश्वरलिंगस्योल्लेखे कविः लिखति—

बिन्दुरेखाच्छविर्यस्य, दृष्टाभाव्यर्थशंसिनी ।
स रावणस्य पूजार्थं लिंगं भाति बटेश्वरः ।। 1-194 ।।

बिन्दुरेखाछविः, भाति च इति पदद्वयेन, कल्हणेन कृतं तत्सौन्दर्यस्य सूक्ष्माध्ययनमवगम्यते । तृतीयतरंगे दैत्यांकितानां पारध्वजपताकानामुल्लेखो विद्यते—

पाराद्वारिनिधेः प्राप्ताः काश्मीरेष्वधुनापि यैः ।
राज्ञा यात्रासु, निर्यान्ति ख्याताः पारध्वजाः पुरः ।। 3-78 ।।

"अधुनापि, निर्यान्ति" इति पदद्वयं पताकानां साक्षात्द्रष्टृत्वं कल्हणस्य सूचयति । राज्ञां जययात्राः कविना दृष्टा इत्यपि च सिद्धं जायते । चतुर्थतरंगे बुद्धप्रतिमायाः चंकुण-विहारस्य च वर्णनं वरीवर्ति—

स्वविहारेऽथ भगवान् स तेन बिनिवेशितः ।
कपिशाभिः सकाषायः इव यो भाति कान्तिभिः ।। 4-262 ।।

"**यो भाति कान्तिभिः**" पदमनुमापयति यत् कल्हणस्तां प्रतिभां तत्कपिशां कान्ति च भूयोभूयो ददर्श । चंकुणविहारस्तस्यावशेषाश्चापि कविना दृष्टा आसन्निति संभाव्यते । प्रतिमायाश्च लोहकटकैः निबद्धो विष्टरोऽपि कल्हणस्य नेत्रपथमाययौ । तस्मिन्नेव तरंगे वर्णितं मन्दिरमेककमपि कल्हणेन दृष्टमासीत् ।

अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदम् ।। 4-335 ।।

चतुर्थतरंगे मुद्रांकस्य गंगोदकस्योल्लेखो विद्यते, अद्यापि हरिद्वारप्रभृतिषु स्थानेषु मुद्रांकेषु पात्रेषु निधाय गंगाजलं भारतस्येतरस्थानेषु नीयते । कल्हणलेखानुसार जयापीडसमये तन्नामांकितमुद्राभिः युक्तानि गंगोदकपात्राणि अपरत्र नीयन्ते स्म कल्हणश्च तानि ददर्श । तच्च.......

तन्मुद्रांकं पयः पीत्वा गांगमद्यापि निर्मलम् 4-418 ।।

इत्यस्य "**अद्यापि**" पदं द्योतयति । अन्यच्च जयापीडप्रसंगे कविरलिखित् "स जयापीडः कान्यकुब्जनरेशं संग्रामे पराजित्य तस्य राज्यककुदं सिंहासनं जहार", अष्टमतरंगे पुनरप्युल्लिखितंयत् वन्हिना प्लुष्टं तत् सिंहासनमुच्चलः, भूयोऽपि अलंकृतं विधाय नूतनं चकार ।[18] तच्च उच्चलसमकालीनत्वात् कल्हणेनापि दृष्टमासीत् । एवं च वर्णितानां वस्तूनां सूक्ष्मतया निरीक्षणं विधाय कल्हणः असंशयमेव तेषामुद्भवविकासस्य इतिहासप्रख्यापने महच्छ्रममकार्षीत् ।

अनेन चायं निष्कर्षो निष्पद्यते यत् कविना वर्णितानाम्, अनेकेषां जनकार्यालयानां संस्थानां च विस्तृतं वर्णनं वीक्ष्य तृतीयतरंगे वर्णितो नरेन्द्रादित्यो लिखितानां

(18) 4-471, 8-81 ।

लेखानां सुरक्षायै नूतनमेकमधिकरणं स्थापितवान्[19क]। कल्हणसमये अपि तादृशानां विभागानां स्थापना संभाव्यते, कविना च ते दृष्टाः स्युः।

चतुर्थतरंगे 'सहस्रभक्तम्" इत्युत्सवस्योल्लेखो वरीवर्ति[19ख] यत्र खलु ब्राह्मणेभ्यो बृहत्दानमदीयत। कविकाले तथाविधा उत्सवाः प्रचलिता अभविष्यन् यांश्च विलोक्य कविः राजभिः कृतं दानं जज्ञौ।

सप्तमतरंगे हरिराजकृतानां गंजानां स्थापना उल्लिखिता खलु; ते च गंजाः कविसमये अपि स्थाप्यन्ते स्म, यत्र च पुरातनवस्तूनि सुरक्षितान्यभूवन्,[20] तान् गंजान् वीक्ष्यापि कल्हणः राजतरंगिण्याः सामग्रीं प्राप।

इत्थं च सर्वाणीमानि, उल्लिखितानि, कल्हणेन च दृष्टानि वस्तूनि राजतरंगिण्याः महत्त्वपूर्णानि स्रोतांस्यभूवन्।

(11) **लोकपरम्परा**:—काव्यस्य अध्ययनमनुमापयति यत् तस्य स्रोतस्सु प्रचलितानां लोकपरम्पराणां जनश्रुतीनाञ्चापि महत्वपूर्णं स्थानमभवत्। नात्र विप्रतिपत्तिर्विदुषां यत् कविः स्वकृतेः प्रारम्भिकतरंगेषु बहूनि उपाख्यानानि पौराणिककथाश्च स्वकाले प्रचलितानां प्रथानां ज्ञानादेव जग्राह, न च पूर्ववर्तिनां कोविदाग्राणां ग्रन्थेभ्यः। कृत्याश्रम-विहारस्य कथा, दामोदरसूदतीर्थस्य कथा, नरपुरविनाशस्याख्यानम्, प्रवरपुरस्थापनाया उपाख्यानम्, जयपुरसंस्थापनस्य कथा, सुय्यस्य नदीविषयकोपाख्यानम्। इत्यादिषु वर्णितं वृत्तं कविः प्रचलितलोकोक्तिभ्यः एव जग्राह ? कानिचित् स्थानानि कल्हणः ददर्श चापि[21]। स्रोतोभूताश्चासन्निमाः कथा राजतरंगिण्याः।

यद्यप्येतासां लोकोक्तीनां परम्पराणां वा न वर्तते ऐतिहासिक-दृष्ट्या महत्वं तथापि तासां वर्णनेन प्राचीनभारतस्य जनविश्वासानां परिचयस्तु जायत एव। भारतीयभूगोलस्यापि प्रसंगात् ज्ञानं भवति।

कतिचित् स्थलेषु कविः तथाविधा अपि लोकपरम्परा उल्लिखितवान् यासां विषये तस्य तत्पूर्ववर्तिनां वा विदुषां मतं विरुद्धमस्ति[22]।

(12) **समकालस्य घटनाज्ञानम्**—सप्तमाष्टमतरंगयोः विस्तरशः वर्णितानां वृत्तानां घटनानां च प्रधानं स्रोतः कल्हणस्य स्वीयोऽनुभवोऽभूत्। कल्हण-जीवन-

---

(19क) 3-383, 385 परिहासपुरस्यावशेषेषु चंकुणविहारस्यावशेषा मया कश्मीरयात्रायां विलोकिताः।

(19ख) 4-243

(20) 7–125

(21) 1–131, 156-167, 263, 331, 2–129, 3–336, 339 374, 4–503–511, 5–68, 101-107

(22) 1–312, 3–456, 57, 58, 4–367, 68, 69, 8–146।

प्रसंगे अस्माभिः ज्ञातं यत् स्वपित्रा सह प्रभूतं भ्रमणमसौ अकार्षीत्, तस्य पिता चम्पकः हर्षसाम्राज्ये उच्चपदेषु आसीन आसीत्। अतः राजसभायाः राज्यकार्याणां पूर्णपरिचयः कल्हणेन अवश्यमधिगतः अभविष्यत्। स्वेच्छया चापि सः शतशः स्थानानि दृष्टवान्, बहुशः राज्यसम्बद्धान् समाजसम्बद्धान् वा जनान् अद्राक्षीत् तेभ्यश्च विविधवृत्तानि जज्ञौ, विविधलोकपरम्पराणां भूयो भूय उल्लेखः कल्हणस्य विस्तृतभ्रमणमेव सूचयति। हर्षविषये, तत्पूर्ववर्तिनाञ्च अनेकेषां राज्ञामुदन्तास्तेन पित्रा एव लब्धा आसन्। हर्षानन्तरं सुस्सलोच्चल-जयसिंहनृपतीनां राज्यानां शतशो घटनानां विविधव्यवहाराणां च कल्हणः द्रष्टाभूत्। बहुभिः राजभृत्यैः सह, उच्चपदासीनैः जनैः सह च तस्य मैत्री आसीत्। अत एव अष्टमतरंगे अतिमात्रं विस्तरेण दत्तानां, ऐतिहासिकघटनानां महत्महत्त्वमास्ते विदुषां मते, तासां यथार्थतायां च न वर्तते विमतम्।

बहुषु स्थानेषु कल्हणः स्वदृष्टानि वृत्तानि उद्धरति सुस्सलजयसिंहप्रसंगे विविधघटनाद्रष्टृत्वं कविः स्वयमेव स्वीचकार।

प्रत्यक्षदर्शिनोऽद्यापि साश्चर्या वयमस्य यत्।
ताः प्रजाः कोपिताः केन केन भूयः प्रसादिताः ॥8-895॥

हर्षस्याधःपतनवृत्तस्य दुःखदमृत्योश्च यथार्थवर्णनं कल्हणः पितुः मुखात् श्रुत्वैव चकार। तन्वंगस्य पौत्राणां कार्याणि वर्णयन् कविः तत्कथावक्तॄणां वृद्धानां स्पष्टमुल्लेखमकार्षीत्[23]। तन्वंगपौत्रविषये, हर्षविषये च वृत्तान्तानां प्रत्यक्षदर्शित्वं कवेः ज्ञायते।

"हतानामपि सौन्दर्यम् तेषामद्यापि वर्ण्यते ॥ 7-1066॥
"गीतमाकर्ण्यतेऽद्यापि तस्य वाग्गेयकारिण ॥7-942॥

इत्यादिवाक्यानि तत्र प्रमाणम्।

**राजतरंगिण्याः काव्यसौन्दर्यम्—**

कथादैर्घ्यानुरोधेन वैचित्र्येऽप्यप्रपंचिते।
तदत्र किंचिदस्त्येव वस्तु यत् प्रीतये सताम् ॥1-6॥

इति भूमिकायां लिखित्वा कविरस्मान् सूचयति यत् कथाया दीर्घत्वात् नाविकमलंकारादिसौन्दर्यं तेन प्रदर्शितं तथापि विदुषामाल्हादकरं किंचित् तत्त्वं तत्र वर्तत एव। वस्तुतः कल्हणेन भारवि-माघ-हर्षादिवत्, भाषालंकरणे, वर्णनेषु च न वृथा समयो यापितः। अत एव प्रायेण कथाभंगो न भवति, प्रसंगवशाच्च क्वचित् साहित्यशास्त्रप्रतिपादितनियमानुसारं काव्यसौन्दर्यमपि प्रदर्शितम्। अलंकाराः रसादयश्च तत्रानायासेनैव समागताः।

---

(23) 7-1066, 67

प्रथमतरंगे युधिष्ठिरस्य पलायनप्रसंगे[24] काव्यसौन्दर्यं दृश्यते। च्युतराज्यं युधिष्ठिरं वर्णयन् कविराह—

राज्याच्युतस्य बहुशः परिवार-रामाकोशादि तस्य रिपवो व्रजतोपजह्रुः।
उर्वीरुहो विगलितस्य नगेन्द्र शृंगाद्वल्लीफलादि रभसादिव गण्डशैलाः[25] ॥

पंचमतरंगे चक्रवर्मणः नगरप्रवेशः सुन्दरशब्दैः वर्णितः खलु। अश्ववारैः परिवृतः चक्रवर्मा नगरं ययौ, अश्वास्तस्य नृत्यन्त इव ययुः। तत्रैव केचित् अलंकाराः प्रयुक्ताः सन्ति।[26]

सप्तमतरंगे राज्ञः सुस्सलस्य नगरप्रवेशवर्णनमपि हृदयावर्जकं वर्तते।[27] अष्टमतरंगे भिक्षाचरस्यान्तिमयुद्धप्रसंगे तस्य यत् रूपं कविना प्रदर्शितं तद्धि विस्मयजनकमाल्हादकरं चास्ति।[28]

एतेषु प्रसंगेषु यद्यपि काव्यसौन्दर्यमस्ति किन्तु, ऐतिहासिक-तत्वानामभावो दृश्यते। यद्यपि काव्यगुणानामादर्शप्रदर्शनाय कल्हणेन नाधिकं लिखितम्, तथापि यदपि तत्र दत्तं तत्प्रशंसनीयमेवास्ति। कवेः काव्यगुणप्रदर्शनप्रसंगे तत्काव्ये विद्यमानानि नाटकतत्वान्यपि विलोकनीयानि, काश्चित्तत्र वर्तन्ते वर्णिताः करुणरसपूर्णा घटनाः, यत्र नाटकीयशक्ति र्दरीदृश्यते।

जयापीडस्यावसानवर्णने नृपतेः ब्राह्मणेषु च प्रवर्तमानः लोमहर्षणः ओजपूर्णः संवादः अत्र सुन्दरमुदाहरणमस्ति।[29] सप्तमतरंगे अनन्तस्य अन्त्येष्टिक्रियायाः, सतीभूतायास्तस्या भार्यायाः सूर्यमत्याश्च चित्रणमपि अतिशयप्रभावोत्पादकं वरीवर्ति।[30] तस्मिन्नेव तरंगे हर्षस्य दुःखदमरणावसरे कल्हणः यथार्थनाम्, ऐतिहासिकघटनानां व्याख्यानस्य, सर्वोत्कृष्टशक्तिं प्रतिभां च प्रदर्शयति। नाटकीयशक्तियुक्तेषु शब्देषु सरलया, सुललितया च शैल्या स दैवोपहतस्य, अधःपतनं प्रति व्रजतो भूपतेः वर्णनं चकार। हर्षस्य पराजयः, तदनुगामिनां द्रोहप्रवृत्तिः, तस्य पलायनम्, पलायने च विविधतापतपनम्, महतीभिरापद्भिश्च समं संघर्षः इत्यादिकं सर्वमपि विस्तरेण वर्णितं नाटकवत् नयनपथमायाति पाठकानाम्।[31] अद्भुतं वर्णनं

(24) 1–368, 373
(25) 1–368
(26) 5–342–347।
(27) 8–948–953।
(28) 8–1744–1750।
(29) 4–640–656।
(30) 7–461-481।
(31) 7–1600-1714।

गभीरं प्रभावं जनयति पाठकवर्गेषु, तस्य च प्रधानं कारणमस्ति अतिविस्तृतवर्णने अपि अतिशयोक्तेः, अलंकारादीनां च न्यूनता।

अन्यच्च एतादृशा अपि आयान्ति बहुशः प्रसंगा यत्र गद्यस्य स्फुटं प्रभावः परिलक्ष्यते। शतशः पदानि गद्यात् परिवर्तितानीव दृश्यन्ते।

**राजतरंगिण्याः भाषा**—राजतरंगिण्या भाषा सरसा सरला प्रायेण दीर्घ-समासविरहिता च वर्तते। प्रसिद्धवृत्तानां व्याख्यानप्रसंगे कविः सर्वविधं वर्णनं, उपमोत्प्रेक्षादिभिः, मधुराभिः विपरीतोक्तिभिः, अन्यैश्चालंकारशास्त्रप्रतिपादितैः रसरीतिप्रभृतिभिः, क्वचिच्च श्लेषादिभिः, एकस्मिन्नेव प्रवाहे लये च लिखितुं श्रमं विदधाति साफल्यं च लभते।

कल्हणस्य भाषायां लक्षणावृत्तेः बाहुल्येन प्रयोगो दृश्यते। अत एव रूपकालंकाराणां सर्वस्मिन् एव काव्ये बाहुल्यं दरीदृश्यते। प्रयुक्तानि च तानि रूपकाणि सुस्फुटानि, कविप्रतिभासमुद्भूतानि हृदयावर्जकानि च वर्तन्ते।

अलंकाराणां प्रयोगस्य केचित् रमणीया दृष्टान्ता इमे सन्ति।

विगताध्यापका बाला इवामोदन्त मन्त्रिणः॥ 6-209॥
संतताभ्यस्तताम्बूलैः स्रस्तैस्तद्दशनांकुरैः।
कीर्णशोणाश्ममालेव सुचिरं वध्यभूरभूत्॥ 7-1067॥
हलावरुग्णो वृद्धोक्षे गण्डशैलमिवाक्षिपत्॥ 7-1225॥
पाण्डुश्यामोऽग्निधूमार्द्रैः सूच्यास्यो गहनोदरः
तुम्बीफलोपमः श्रेष्ठी रक्तं मासं च कर्षति॥ 8-134॥
मिहिकासंहतेः कालतूलतल्पाकृतेर्दधत्॥ 8-2520॥
मीलिताक्षमिव त्रासात्ततो दुर्गमजायत॥ 8-2560॥
तत एव व्यजहतां विष्ठां नीडादिवाण्डजौ॥ 8-2586॥
कालम्बकम्बलो गोष्ठात् वृद्धोक्ष इव निर्ययौ॥ 8-2635॥
स्वपक्ष-सूचि-विशिखान्क्षिु श्वाविदिवाक्षिपत्॥ 8-2747॥

अपि च कल्हणः स्वकथायां रोचकतामुत्पादयितुं मध्ये मध्ये आभणकयुक्तानि पद्यानि लिलेख। येषु प्रचलिताः लोकोक्तीः प्रायुंक्त। तथाविधानि पद्यानि प्रायेण श्रमसाध्येषु छन्दःसु विनिर्मितानि वर्तन्ते। तस्मादेव तानि काव्ये प्राचुर्येण प्रयुक्तैः अनुष्टुप्छन्दोभिः विशिष्टानि दरीदृश्यन्ते। बहूनि च तेषु कथाप्रवाहे भंगमुत्पाद्यापि काव्यात्मकसौन्दर्यं दधति। क्लिष्टा चापि तेषां भाषा प्रायः लालित्य-पूर्णा रमणीया च भवति। प्राचीनकालस्यार्वाचीनकालस्य च सुभाषित-पद्यावलिषु कल्हणस्याभणकानि दृष्टिपथमायान्ति।[32]

---

(32) सुभाषित रत्न भाण्डागार—66–18, 62–288, 33–45 इत्यादि।

**राजतरंगिण्याः सार्वजनिक–व्याख्यानानि संवादाश्च**—विचित्रतायाः विविधतायाश्च कामनया कल्हणेन स्वकृतौ लघूनि व्याख्यानानि, संवादाश्च प्रदत्तानि सन्ति। येषां साहाय्येन भाषा सरसा सुमधुरा च जायते।

सप्तमतरंगे उच्चलः स्वस्य, राजगोत्रादुत्पत्तिं सिंहासनप्राप्त्यधिकारं च व्याख्यानेन स्फुटीकरोति। कलशप्रेरणया संग्रामप्रभृतिभिः निजबन्धनाय कृतं षड्यन्त्रं ज्ञात्वा महातेजा उच्चलः संग्रामपालसमीपं गत्वा कोपरुक्षाक्षरः तं भर्त्सयन्नाहः—पुरा हि दार्वाभिसारे भरद्वाजवंशीयः नरो नाम नरपतिः बभूव। तस्य च सूनोः नरवाहनात् फुल्लाख्यः तनयो जनिं लेभे। तस्मात् सातवाहनाख्यः सुतः ततश्च चन्दोऽभूत्। चन्दराजः अपि गोपालसिंहराजाख्यौ द्वौ पुत्रौ अवाप्तवान्। सिंहराजः दिद्दाभिधां स्वात्मजां कश्मीरनरेशाय क्षेमगुप्ताय ददौ। सा च सुताभावे भ्रातृनन्दनं संग्रामराजं राज्ये व्यदधात्। दिद्दाया द्वितीयो भ्राता कान्तिराजः जस्सराजाख्यं सुतमलभत। संग्रामराजस्यैकः सुतः "अनन्तदेवः" इति, जस्सराजस्य च तन्वंगगुंगाख्यौ तनयावजायेताम्। अथानन्तदेवात् कलशः गुंगात् मल्लराजाभिधानः तनुजः अजायत। कलशराजस्य हर्षदेवादयः, मल्लराजस्य च आवां "उच्चलसुस्सलौ" पुत्रौ स्वः। इत्थं क्रमेण राजवंशात् समुद्भवाभ्यामपि आवाभ्यां कृते "कथं राजवंशीयाविमाविति" मन्दा वदन्ति।

वीरभोग्यायां वसुन्धरायां राज्यभोगाय वंशपरम्परायाः, क्रमस्तु नैवोपयुज्यते भुजा एव वीराणां सहायका भवन्ति। वयमपि च स्वभुजवीर्येण राज्यं प्राप्स्यामः।[33]

हर्षः स्वराज्यरक्षायाः चिन्तामाख्यानेन प्रकटीकरोति पश्चिमे अपि समये यथा मया राज्यं भुक्तं न तथान्य उपभोक्ष्यते। यमः कुबेरश्च राज्ञामोष्ठाग्रे तिष्ठत इति किं वदन्ती मदेकशरणाभूत्। रुद्रोपेन्द्रादयः अपि यमपुरीं प्रापुः सामान्याजनानान्तु का तत्र गतिः। कुलवधूरिव मया पालिता वसुधेदानीं घट्टचेटीव सामान्यजनैः प्रसभभोग्या भविष्यति। इतः प्रभृति मम राज्यस्य भोक्ता छलकपटकुशलो भविष्यति। मया कृतानि अलौकिक-कर्माणि वन्ध्यफलानि जातानीति विलोक्य जना हसिष्यन्ति। शास्त्रसंदर्भविज्ञेन मया जनकल्याणाय यत् श्रीगर्भत्वं प्रदर्शितं तदिदानीं मम जाड्यं साधयति। यदहं राज्यरक्षायै स्वात्मातमसमर्थं मन्ये, न तत्र कारणं भीतिः किन्तु अवमानमेवास्ति। अत एवाहं मृत्युं कामये। "स्वीयैरेव नो चेत् हतः अयं नरपतिस्तर्हि कस्तस्मात् वसुधां हरेदिति इति प्रसिद्धिं भवद्भिः निहतः रक्षितुं कामये।" पुरा हि मुक्तापीडोऽपि यशोरक्षायै अग्निं प्रविवेश। तस्मात् भवद्भिः कीर्तिरक्षणायाहं हन्तव्य एवेति।[34]

निजपक्षैरानीतं सुस्सलमुंडं वीक्ष्य गाढामर्षाग्निदीप्तो भिक्षुः निजसैनिकानामरिदले रुचिमनुभूय मनस्थं तापं व्याख्यानेन प्रकटीचकार।

---

(33) विलोक्यतां बल्लभदेवस्य सुभाषितावलिः पृ० 18, स्टी० राज० भा० 1, लि० 7। 7–1276, 1281–1288।

(34) 7–1416–1452, 8–1024–1027।

"सिंहदेवं निहत्य हठात् राज्यं लब्ध्वा कश्मीरशासको भविष्यामीति मया चिन्तितमासीत् किन्तु दैवादन्यथा संजातम्, रिपौ निहते राज्याभिलाषोऽपि विगतः। किमेतेन भोगमात्रोपयोगिना राज्येन। पूर्वजमुंडानां निपातयिता सुस्सलः दशमासावधि पूर्वजेभ्यः पीडां ददौ, मया तु दशवत्सराणि यावत् तस्य सुखच्छेदो विहितः। तस्मादहमधुना निष्कामकर्म कुर्वन् शान्तमनस्तापो जीवनं यापयिष्ये[35]।

एवंविधानि अन्यान्यपि बहूनि व्याख्यानानि सन्ति यैः भाषा सशक्ता हृदयहारिणी च संजाता।

अपरत्र च राजतरंगिण्यां विद्यन्ते केचन रोचकाः संवादाश्चापि, ये हि वैविध्यमुत्पाद्य हृदिस्थान् भावान् साधु प्रदर्श्य पदे पदे उल्लासं जनयन्ति। संवादेष्वपि च केचन इमे अतीव चित्तावर्जका वर्तन्ते—

सप्तमतरंगे आत्महत्यायाः पूर्वमनन्तस्य निजभार्यया सूर्यमत्या सह संवादः[36]। राज्ञः हर्षस्य स्वसचिवैः समं संपादिते विचारविमर्शे प्रवर्तमानः संवादः[37]। भिक्षाचरस्य पतनसमये डामराणां सैनिकानामन्येषां च मध्ये सम्पन्नः संवादः[38]। शिरढशिलादुर्गात् बहिः मन्त्रिणां परस्परं संवादः[39]। जयसिंहभोजयोः संगमावसरे प्रवर्तितः संवादः, ततश्च राज्ञः तत्भार्यायाः, भोजस्य च संवादः[40] अतिशयेन रमणीयः अद्भुतः चित्ताकर्षकश्च वर्तते।

**शैल्या गूढता**—नात्र संशयो यत् राजतरंगिण्याः नैकस्थलेषु कथा अस्फुटा विद्यते। पूर्वार्द्धे अनेकेषां श्लोकानां पदानां वा असमीचीनव्याख्या दृश्यते। याभिश्च शैली गूढा जाता, क्वचित्तु असकृत् अल्पं प्रयुज्यमानान् अन्यत्रादृश्यान् शब्दान् प्रयुज्य कविना काव्यसौन्दर्यं विलोपितम्। किन्तु प्रयुक्तानामप्रचलितशब्दानामाशयः गम्भीरमर्थं धत्ते।

काव्यस्य चरमे भागे कविः राज्यस्यान्तःकलहानां, संश्लिष्टषड्यन्त्राणां, राज्यसभायाः, शासनस्य क्षुद्रवृत्तानि च वर्णयति। तत्र च स्वहृदयस्थं विचारं सुस्फुटं विधित्सुरपि स अल्पप्रचलितानप्रचलितांश्च शब्दान् प्रयुज्य तं विचारम् हृद्गतं भावञ्च अस्पष्टं गूढञ्च विदधाति। तत्र प्रयुक्तानि पदानि काव्यस्य अलङ्कृतानि वाक्यचातुर्याणीव प्रतिभान्ति।

---

(35) 8–1446–1554
(36) 7–423–444
(37) 7–1386–1415
(38) 8–1704–1709
(39) 7–1713–1728
(40) 8–3221–3253

तादृक् शब्देषु वा कानिचिदिमानि सन्ति । चटसीकृते:[41], भांकार:[42], तमालपत्राणि ताडीदलानि[43] च, आलोक-न्यस्तलोचन:,[44] रोरि शिखिभागिषु,[45] नीवी,[46] द्रोहचाक्रिका:[47] घूपशन्दामूल[48], नयोज्जासधनं[49] निर्गुणडामर:[50], वास्तुकम्[51], डामरैरौर्ष्या कार्यं[52], सभेदयात्रायाम्[53],

एतादृशानां शब्दानां प्रयोगं विलोक्येदं प्रतीयते यत् कल्हण: काश्मीरपाठकानां कृते एव स्वकाव्यं लिलेख । यत: बहवस्तत्र प्रयुक्ता: शब्दा: कश्मीरभाषाया: शब्दानां तुल्या वर्तन्ते । अपि च स्वकालस्येतिवृत्तं वर्णयन् कवि: कानिचित् वर्णनीयानि विशिष्टवृत्तानि परित्यजति । संक्षेताद्वा वर्णयति । येन च अस्पष्टता जायते[54] ।

किं च नैकस्थलेषु कवि: स्वकाले प्रचलिता: गूढाशया: लोकोक्ती: प्रायुंक्त, याभि: काश्मीरान् व्यतिरिच्यान्येषां कृते काव्यं क्वचित् स्थलेषु गूढं कृतम् । केचित्तु तथाविधा: शब्दा: कविना प्रयुक्ता ये अन्येषु प्रदेशेष्वपि अप्रचलिता आसन् कोषेष्वपि च ये प्रायेण न दृश्यन्ते । कम्पन-द्वार-पादाग्र-डामर-पर्षदादय: तादृशा: शब्दा: सन्ति । कम्पन: सेनाया पर्यायो वर्तते,[55] सेनापतिरपि क्वचित् कम्पनो निगदित: । सीमान्त-निरीक्षणस्थानं द्वारमभिहितम्,[56] अस्याध्यक्ष: द्वाराधिप: कथित:, द्वारेणैव पुरा सीमासुरक्षा युद्धसंचालनञ्चाभूत् । "पादाग्र" इत्याख्य: राज्यशासनकार्येषु एव विभागविशेषो बभूव इति प्रतीयते । यत्र खलु राज्यस्य आयव्ययस्य लेख आसीत् । डामरा जातिविशेषे, वर्गविशेषे, शासकवर्गे वाभूवन् इति न क्वापि स्पष्टम्, किन्तु ते क्रूरा:, दुष्टा दुराचाराश्चाभवन् इति निश्चितम्, शनै: शनै: जनधनान्नसंग्रहं कृत्वा ते राजाज्ञामुल्लंध्य शासकानात्मन अघोषयन् । पुरोहितानां सभा पर्षदित्युच्यते स्म[57] । केषुचित् स्थलेषु कल्हणस्याभिप्राय: गूढो जायते । कमभिलक्ष्य स विवक्षुरस्तीति बहुशो नावगम्यते । तत्समये राज्माधिकारिणां पदपरिवर्तनं सत्वरमेवाभवत् अत एव कल्हण: बहून पूरुषान् राज्येन समं संयोजयति । अतोऽपि वर्णनप्रसंगे क्वचित् संशयो जायते ।

---

(41) 1-213 टि. (42) 3-172, 8-953
(43) 3-326 (44) 4-549
(45) 5-15 (46) 4-246, 5-145, 7-1473, 8-839, 1259, 2216
(47) 5-268
(48) 8-143 (49) 8-147
(50) 8-975 (51) 8-1346
(52) 8-3131 (53) 8-3149
(54) 7-441, 8-263, 2890, 3102, 903
(55) 5-47 टि.
(56) चौकीइतिभाषा 5-214 टि.
(57) 2-132 टि.

**राजतरंगिण्याः समाप्तिकालः**—कल्हणस्य कृतिः पूर्णा वर्तते। सौभाग्यात् कविः स्वकृतेः प्रारम्भस्यावसानस्य च तिथिं ददौ। येन च प्रमाणीभवति यत् तत्समाप्त्यनन्तरं न हि कल्हणस्तत्र वस्तुपरिवर्तनमकार्षीत्। यस्मिन् रूपे च निजकाव्यं विसृज्य स द्युलोकं जगाम, तस्मिन्नेव रूपे तल्लब्धं भारतीयैः। राजतरंगिण्या भूमिकाया अनन्तरम्, कृतेः प्रारम्भकाल स्पष्टमेव कविरलिखत्—

लौकिकेऽब्दे चतुर्विंशे शककालस्य साम्प्रतम्।
सप्तत्यभ्यधिकं यातं सहस्रं परिवत्सराः॥1-52॥

इदानीं शककालस्य चतुर्विंशे लौकिके संवत्सरे सप्तत्यधिकसहस्रं वर्षाणि व्यतिगतानि। ख्रीष्टाब्दे चायं कालः 1148-49 इति भवति। चरमे तरंगे काव्यसमाप्तिं कुर्वन् पुनः कविः लौकिकाब्दमिंगितयति—

समाद्वाविंशती राज्यावाप्तेः प्राग्भूभुजो गताः।
तावत्येवाप्तराजस्य पंचविंशतिवत्सरे॥8-3404॥

अत्र खलु लौकिक-संवत्सरस्य पंचविंशत्युत्तर-द्विचत्वारिंशो वत्सरः यद्वा 1148-49 परिसमाप्त इति सूचितमस्ति। अस्मिन्नेव समये कल्हणः स्वकृतिं सम्पूर्णां चकार। अयञ्च राज्यं कुर्वतो राज्ञो जयसिंहस्य द्वाविंशः संवत्सरो बभूव। उक्तं पद्ययुगलं वीक्ष्य नात्र संशयः अवशिष्यते यत् कल्हणः 4224 लौकिकाब्दे यद्वा 1148–49 ख्रीष्टाब्दे निजरचनामारेभे, अग्रिमे एव च 4225 लौकिकसंवत्सरे यद्वा 1149–50 ख्रीष्टाब्दे तां समापितवान्। इत्थञ्च प्रायेण अष्टसहस्रपद्ययुक्तस्य विशालमहाकाव्यस्य निर्मितिः एकस्मिन्नेव वर्षे अजायतेति सिद्धम्।

ट्रायरमहोदयः राजतरंगिण्याः स्वलिखिते अनुवादे मतमिदमभिव्यनक्ति यदस्याः प्रथमे षट्तरंगास्तु कल्हणलेखनी-निसृताः सन्ति चरमस्य च तरंगद्वयस्य लेखकः कश्चिदपरो लेखको वरीवर्ति। किन्तु प्रो० बूल्हरमहोदयः सम्यक् समसाधयत्, यत् इदं ट्रायरमतं राजतरंगिण्याः कथावस्तुनः समेषां पद्यानाम्, तत्र विद्यमानानां सामग्रीणां च सम्यगध्ययनाभावेन विद्यते। असौ अभिदधाति यत् जोनराजः कल्हणस्य शतद्वयवर्षानन्तरं राजतरंगिणीमनुसृत्य तथाविधमेव कथावस्तु स्वकाव्ये न्यबध्नात्। स आह "मम पूर्वगः कविवरः कल्हणः स्वकृतिं जयसिंहराज्यकाले समापितवान्"[58] जोनराजस्यायं लेखः साधयति यत् राजतरंगिण्याः सर्वेषामपि तरंगाणां लेखकः कल्हण आसीत्।

यत्र च कल्हणकृतिः समाप्तिं ययौ तत एव जोनराजः निजरचनामलिखत्।

**राजतरंगिण्याः स्खलितानि**—सम्पूर्णायां राजतरंगिण्यामेकस्यैव विदुषः सिद्धायाम्, तत्स्खलितान्यपि विलोकनीयानि। तानि च सप्तमाष्टमतरंगयोरधिकानि वर्तन्ते

(58) जोनराज 5

इत्यपि च संभवतः ट्रायरमहोदयस्य अभिमते कारणं स्यात्। विदुषां पुरस्तात् प्रथमतरंगः काठिन्यं जनयति, यतः कविना काश्मीरेषु प्रचलितानां लोकोक्तीनाम्, शब्दानाञ्च तत्र बाहुल्येन प्रयोगो विहितः। स्वकालस्यैव च इतिहासे विशेषतो दृष्टिनिक्षेपः कृतः।

अपरं काठिन्यं काव्यस्य शब्देषु, पदेषु, वाक्येषु, संपूर्णे पद्ये वा निहितानि स्खलितानि उत्पादयन्ति। तासामशुद्धीनां कारणं प्रतिलिपिकारका अपि संभवतो बभूवुः। अस्या कृतेः नैकाः प्रतिलिपयः कृताः आसन् तासु च पद्ये पद्यांशे वा परिवर्तनं स्खलितं वा संभाव्यत एव।

एतावदेव न, काश्चिदशुद्धयस्तावत् कल्हणस्य कारणादपि अनुमातुं शक्यन्ते। न च तत्र हेतुः तस्य अज्ञानं, प्रतिभाया अभावो वा किन्तु कविप्रमाद एव तत्र प्रधानं निमित्तम्। यद्वशात् अष्टमतरंगं लिखित्वा नैकवारमपि तस्य पुनरावृत्ति चकार। तां विना च स्खलितानि तत्रावशिष्टानि। बहवश्चात्र वर्तन्ते दृष्टान्ताः।

अष्टमतरंगस्यावसाने कल्हणेन पूर्ववर्णितानां समस्त-राज्ञां नामावलिः, अतिसंक्षेपात् तेषां राज्यकार्यवर्णनं च विहितम्। तत्र च स्थानद्वये अशुद्धिर्विद्यते। 3411 पद्ये "तज्जन्मा जनकोऽप्यासीत् सूनुः शूच्याः शचीनरः" अत्र हि शचीनरः शच्याः पुत्रः अभिहितः किन्तु प्रथमतरंगे (1-99) तदुल्लेखो नास्ति। ततश्च पद्यमेकमिदमायाति—

पृथिव्यापीडसंग्रामापीडावनु नृपोऽभवत्।
जयापीडोऽस्य मन्त्री च जज्जः पुत्रावपि क्रमात्॥8-3485॥

जज्जः खल्वत्र मन्त्री निगदितः किन्तु चतुर्थतरंगे स जयापीडस्यालो निगदितः।

तस्य दूरप्रयातस्य स्यालो जज्जाभिधो बलात्॥4-410॥

अपि च चित्रं यत् 8-3414 पद्ये विभीषणमुपवर्ण्य तस्य सूनुः नरः (प्रथमः) नोल्लिखितः कविना, यद्यपि प्रथमतरंगे नर-विषये प्रचलिताः लोककथा विस्तरशो वर्णिताः खलु[59]। 8-3416 पद्ये कविः नरद्वितीयं वर्णयति।

सूक्ष्मदर्शी कल्हणश्चेत् पुनरावृत्तिमकरिष्यत् स्वस्य पूर्णमहाकाव्यस्य, तर्हि एतादृशीनामशुद्धीनां संभावना नाभविष्यत्।

अन्यच्च अष्टमतरंगे व्यड्डसूहेन श्रीलेखाया अधरपानमुल्लिखितं किन्तु सप्तमतरंगे[60] तस्याः स्वैरिणीत्व-प्रसंगे न विद्यते व्यड्डसूहस्योल्लेखः।

अथ च चरमतरंगयोः त्वरया वर्णितानि कानिचित् वृत्तानि हृदि क्लेशं जनयन्ति। राजकुमारस्य घटोत्कचस्य विजयप्रसंगस्तत्र प्रमाणम्[61]।

---

(59) 1-197-274
(60) 8-1957, 7-127
(61) 8-3398-3402

क्वचित्तु प्रवर्तितं प्रसंगमकस्मात् विसृज्य, कविः अपरे प्रसंगे आगतः। तद्यथा सपत्नैः समं युध्यतः जयसिंहस्य विजयं सूचयित्वा युद्धाग्नेः शमं च प्रतिपादयता कविना, अकस्मादेव कृतं समरोन्मुखानां दारदानां वर्णनं विचित्रमिव प्रतिभाति[62]।

अष्टमतरंगस्य भाषायामपि कानिचित् स्खलितानि दृश्यन्ते। अलंकार-शास्त्रस्याचार्यैः प्रतिपादिताः केचित् दोषा अपि तत्र विलोक्यन्ते। कतिचित् पद्येषु असंस्कृतं संस्कृतं, अशुद्धच्छन्दांसि च दरीदृश्यन्ते। क्वचित् शब्दयोजना असमीचीना वर्तते[63]। वाचने च कटु प्रतिभाति। दुश्रत्वदोषः अपि क्वचित् लभ्यते[64]। क्वचित् प्रवाहाभावतया चारुता नास्ति वाचने अपि बाधानुभूयते[65]।

केषुचित् पद्येषु, पदेषु च परस्परं सम्बन्धो विच्छिन्न इव प्रतिभाति अस्फुटत्वदोषश्च वरिवर्ति[66]। "तुल्यस्तुल्येन कर्तव्यं किमनुध्याय बध्यते–8-392। इत्यस्याशयः अस्पष्टो विद्यते। "अन्यत्प्रविष्टो धन्योऽथ—"न प्राणा द्रविणं नाद्यः"—इत्यनयोः[67] पद्ययोः शब्दयोजना असम्बद्धा, असंगतास्ति च। "त्वय्यर्पिते" पार्वतीयभूभृत्संगेन्यदादिनः"[68] इत्यादिपद्यस्य संस्कृतमसंस्कृतं भ्रष्टं चास्ते। अपि च 'निर्दोषपारिषद्यादिहृद्यान्तिश्चौद्यधीर्व्यधात्'"[69] इति पद्यांशे "अश्लीलत्व-दोषो विद्यते, शब्दाश्चापि रम्या न वर्तन्ते। दुःश्रत्वदोषस्तु नैकपद्येषु वर्वर्ति[70]।

क्वचित्तु छन्दोभगदोषः अपि विद्यते "प्रभोः पुरस्तात् कार्यान्ते" इति पद्यांशस्य पंचमः अक्षरः लघुर्नास्ति येन च भाव्यमेव। पालनार्थं राजपुत्रान्[71] अत्र रा दीर्घो वर्तते न च ह्रस्वः 'युग्याधिरूढं किं नारी'–इत्यादौ चापि स एव दोषः। उभयत्र ह्रस्व-दीर्घाक्षराभ्यां भाव्यम्।

एतेषां सर्वेषां स्खलितानां कारणं केवलं पुनरावृत्तेरभावः, सम्यक्निरीक्षणं च कवेः प्रमाद एवास्ते।

अन्यच्च अलंकारशास्त्रे एकस्मिन्नेव पद्ये अपरस्मिन् पद्ये वा समानार्थस्य पदस्य, शब्दस्य, कस्यचिदलंकारस्य, भावस्य वा पुनरावृत्तिः दोषेषु परिगणिता। स च दोषः राजतरंगिण्यामपि दृश्यते। स चाष्टमतरंगे एव प्रायेण वरीवर्ति[72]। संकेतमात्रं दृष्टान्तद्वयमिदमस्ति 'मार्गे धनंजयस्यैव शैनेय-पवनात्मजौ 8-2789, इत्यस्य उपमा, शैनेयमारुतीपार्थमिव प्रार्थितसैन्धवम् 8-469 पद्ये अपि दृश्यते। "वैश्वरूप्य-

---

(62) 8-2842
(63) 8-3070, 71
(64) 8-3070
(65) 8-3334, 35
(66) 8-2701
(67) 8-3268, 39
(68) 8-3231
(69) 8-3319
(70) 8-3070-3327 इत्यादौ।
(71) 8-2862, 2610, 3071
(72) 8-2789, 2796, 2810, 2848 पद्यानां 8-469, 2747, 776, 1199 पद्यैः सह तुलना विलोकनीया।

**मिवादधौ** 8-2748। **इत्यस्योपमायाः** पुनरावृत्तिः" विश्वरूप इवाबभौ 8-1199 इति पद्यांशे **अस्ति**। अन्यच्च 'यथाकालं ततो गूढ़ो'—इत्यादि पद्यस्य, **अकृशश्वाविदा**–8-2796 इति पद्यस्य च 8-2747 अलंकारे भावे च समानतास्ति।

एतेनेदं प्रतिभाति यत् चरमभागानां पुनरनवलोकनादेव खलु वर्तन्ते स्खलितानि। तानि च, अशुद्धवाचनात् पश्चात्भूतैः प्रतिलिपिकारैधिकं वर्धितानि। कल्हणस्य प्रतिलिपिकर्तॄणां वा प्रमादस्य फलरूपे काव्यस्य मूलभागे अपि अशुद्धयः सन्ति, क्रमभंगस्तु बहुषु स्थलेषु प्राप्यते। तद्यथा—

**नयन् प्रजसृजा साम्यं** 8-2818 अत्र '**प्रजासृजा**" इत्यस्य स्थाने "**प्रजसृजा**" इति अशुद्धं लिखितम्।

"**युग्याधिरूढं किं नारीसेवतां यामिको यथा**" 8:2862, अत्र छन्दसि भंगस्तु वर्तते एव, अपि च "**नारीसेवतां**" पदस्य कुत्रसगतिरस्तीत्यपि न साधु प्रतीयते। स्टीनमते "**नारी**" एव तां 'पाठ उपयुक्तः" अस्ति, यश्च मन्यते नोचितः, प्रसंगे न कस्याश्चित् नार्या उल्लेखो दृश्यते, अतः (ताम्) पदं कस्याः विशेषणमिति प्रश्नः समुत्पत्स्यते। अन्यच्च "**इति ते संदिशन्तं च व्यहसन् स विहाय तम्** 8-2863। इत्यादौ "**व्यहसन स विहाय तं**" पाठः दूषितः प्रतिभाति, व्यहसन् स विहाय तम्" इति पाठः संगच्छते। यश्च युद्धमितिव्यग्रं—'उक्त्वेतिमोहयन्[73] धन्यं—इत्युभयोरपि पद्ययोः मूलं दूषितमस्ति, अतः स्फुटं कश्चिदर्थः अपि न निर्गच्छति।

पद्येषु क्रमभंग-विलोकनाय अधः संकेतितानि पद्यानि द्रष्टव्यानि[74]। अपि च कानिचित् दूषितानि पद्यानि तथाविधानि सन्ति यत्र पद्यार्धे पदार्धे वा पद्यान्तरं प्राप्यते।

अथ स्थित स्त्रिभिर्व्यूहैः रहितास्तेऽकिरन् शरान्।
हन्तुं वामेन ते योधाः सर्वे वाहनदुर्मदाः॥ 8-1197॥
स प्रेरयंश्च तुरंगं दैवात्तस्य च तादृशः।
सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनाम्॥8-1198॥

इत्युभयोरपि पद्ययोः प्रथमार्धं द्वितीयार्धेन सहासम्बद्धो दृश्यते। अनुमीयते यत् भिन्नश्लोकानां पदान्यत्र संगृहीतानि।

ताम्बूलमायात्रिकतां नीत्वाऽमूनामयानिव।
आर्पिपन्मधुरावट्टं जीवं यस्य निजः सुतः॥8-3327॥

अत्रापि उभे पद्यार्थे परम्परमसम्बद्धे प्रतीयेते, पद्यान्तरस्य च एकत्रिते अनुमीयेते। अपि च—

अत्यक्तमण्डनशिखण्डि-शिखोऽपि—8-3379॥

इति पद्यस्य पदानि अपि पद्यान्तरस्य संगृहीतानि खलु।

———

(73) 8-3003, 3004

(74) 8-3204, 5, 6, 8-12, 24, 28, 31-32, 56, 61, 66, 67, 69, 72, 73, 78. 93, 3327, 38, 34, 40, 67

## तृतीयः तरङ्गः

# राजतरङ्गिण्याः राजवंशावलिः

### प्रथम-तरङ्गस्य राजानः —

महाकविः कल्हणः प्रथम एव तथाविधः भारतीय-कविः आसीत् येन खलु भारतस्य प्रामाणिक इतिहासः तिथिक्रमपुरस्सरं लिखितः। बाण-बिल्हण-मंखप्रभृतिभिरपि यद्यपि इतिहासघटना वर्णिताः सन्ति, तथापि न तत्कृतिषु प्राप्यते तिथिक्रमः। अपि च साहित्यशास्त्रनियमाननुसरद्भिस्तैः केवलं स्वनायकानां गुणा एव आविष्कृता न च तद्दोषाः, अत एव नैकस्थलेषु तत्र दृश्यते अयथार्थता। न च तथास्ति कल्हणकाव्ये।

राजतरंगिण्या इतिहासघटनाः प्रायेण यथार्थतामावहन्ति। तस्यां किल कविना भारतदेशस्य विशेषतश्च तस्य काश्मीरप्रदेशस्य सुविस्तृत इतिहासः प्रदर्शितः। राज्ञां कार्य-चरितादिवर्णनप्रसंगे न हि तेन क्वापि तद्गुणैः समं, भीषणदोषाविष्करणे भीतिरनुभूता। मनःप्रसूताः कल्पना अपि न तत्र प्रदर्शिताः प्रायेण। यथाशक्ति यथार्थमेव चालिखत् कविः। किन्तु काश्चन घटना जनश्रुतावाधृता अपि वर्णिताः सन्ति।

**विलुप्ताः पार्थिवाः**—कल्हणो निजेतिहासं तेषां द्वापंचाशतनृपाणामुल्लेखेन समं प्रारेभे यन्नामकीर्तनं ग्रन्थान्तरेषु नासीत्। कविस्तु अन्वेषणं विधाय केषांचित् वर्णनं चकार। कुतस्ते प्राप्तानि इत्यपि च लिलेख[1]।

**नीलमतात् संगृहीता राजानः**—प्रथमगोनन्दात् द्वितीयगोनन्दं यावत् चत्वारो नरपतयः कविना नीलमतपुराणात् गृहीताः खलु। तेषां विषये स चेदमलिखत्[2] ....

**प्रथमः गोनन्दः**—कल्हणः सूचयति यत् गोनन्दप्रथमः स्वसम्बन्धिना मगधराजेन जरासन्धेन सहायतायै आहूतः, तेन समं, मथुरां प्रतस्थे कृष्णविजयाय, भीषणे च युद्धे असौ कृष्णाग्रजेन बलरामेण निहतः।

---

(1) 1-44, 16, 19, 54, 83
(2) 1-57 से 82

# राजतरङ्गिण्याः राजवंशावलिः



कश्मीराणां पुरातन-राजधान्यां पुराणाधिष्ठाने सम्राटशोक-निर्मितं भव्यं "अशोकेश्वर-मन्दिरम्" प्राचीन-कलाया अद्भुतं रूपमस्ति । [पृष्ठः–५०, आवरण-पृष्ठश्च] ।



तुरुष्कराजेन हुष्केन निर्मिते हुष्कपुरे (सम्प्रति उष्करा) ललितादित्य-विहारस्यावशेषाः, अत्रैव चीनयात्री ह्यून्सांगः प्रवासं चकार [पृ. ५१, २३२, २६६] ।



प्रतापादित्य-द्वितीयस्य प्रतापपुरे (सम्प्रति तापर), मन्दिरस्य अवशेषाः, (पृ. ६५)

# ललितादित्यमुक्तापीडस्य मार्तण्डमन्दिरम् (पृ. ६६–७१)



मार्तण्डतीर्थे (सम्प्रति मटन) मार्तण्डमंदिरस्य भव्या अवशेषाः प्राचीन-कलाया अद्भुतं रूपं प्रस्तुवन्ति ।

पृ. २२३, २३०

मन्दिरस्य पूर्वभागः प्रधानद्वारञ्च



मन्दिरस्य अग्रभागः पृष्ठभागश्च



मन्दिरस्य द्वितीयः पृष्ठभागः अत्रैव सूर्य-प्रतिमा पूजास्थलञ्च व्यराजत ।

# अवन्तिवर्मणः अवन्तिपुरम्



अवन्तिस्वामि–मन्दिरस्य अवशेषाः प्राचीनभारते स्थापत्यकलायाश्चरमोत्कर्षं सूचयन्ति [पृ. ७५]



मन्दिरस्य मुख्यद्वारम्



अवन्तीश्वर-मन्दिरस्य नष्टभ्रष्टाः अवशेषाः [पृ. ७५]



१. २. शङ्कर-गौरी-
श्वरमन्दिरम् [पृ. ७८]

१. पूर्वभागः

३. अङ्कितनवावतारं
सुवर्णरचितं श्रीनगर-
संग्रहालये स्थापितं परम-
रमणीयं शङ्करचक्रम्
[पृ. ७७]

२. पृष्ठभागः



३



**प्रथमः दामोदरः**—दिवंगते गोनन्दे तत्तनयो दामोदरः सिंहासनमारुह्य, स्व-पितृवधं स्मारं स्मारं, गान्धारनरेशेन स्वयंवरायाहूतं सबान्धवसैन्यं कृष्णं पराजेतुं गन्धारदेशं प्रतस्थे। भयावहं तत्र जन्यमजनि, तत्र च कृष्णस्य सुदर्शनचक्रधारया सः अपि परेतपतेः पथः पथिकः कारितः।

**यशोमती** - दामोदरे निहते श्रीकृष्णः आपन्नसत्वां तत्पत्नीं यशोमतीं राज्ये अभ्यषेचयत्।

**द्वितीयः गोनन्दः**—अत्रान्तरे राज्ञी सुन्दरमेकं सूनुं प्रासूत। सर्वविधसंस्कारा-णामनन्तरमसौ 'गोनन्द' इति पैतामहं नाम प्राप। जात एव स सिंहासनमारुरोह। कविर्भणति यत् अस्मिन्नेव समये महाभारत-युद्धं प्रारब्धं किन्तु बालभूपतिरसौ न नीतः कुरुपांडवैः।

गोनन्दप्रथमस्य तत्संततेश्च कथा नीलमतमाधृता खलु, अन्यत्र च न क्वापि प्राप्यते तदुल्लेखः। इदं च विचित्रं यत् गोनन्दद्वितयं नीलपुराणात् गृहीत्वा तत्वर्णनं च विधायापि अग्रे वर्ण्यमानं तृतीयं गोनन्दम्, गोनन्दवंशे प्रथममभणत्, वंशस्य संस्था-पकमपि च तमेव मेने[3]। इदत्त्चात्र संभाव्यते यत् उभावपि प्रथमद्वितीयगोनन्दौ कवि-कल्पना-प्रसूतौ स्याताम्। कथंचिदपि महाभारयुद्धेन समं च सम्बन्धं द्योतयितुं कविना तौ वर्णितौ।

**पंचत्रिंशत् विलुप्ता भूपतयः**—द्वितीयगोनन्दं वर्णयित्वा, आम्नायभंगात् विलु-प्तनाम्नः, पंचत्रिंशत्-नृपतीन् कविरुल्लिखति कल्लहणादुत्तरवर्तिभिः कैश्चित् यवन-लेखकैरपि तद्विषये किंचित् लिखितम्।

**हेलराजात् गृहीता राजानः**—लुप्तनरपतिषु अष्टराजानः कविना हेलराजात् गृहीताः। इतिहास-दृष्ट्या यद्यपि नहि ते महत्वं दधति, नापि तन्नामविषये क्वाप्य-न्यत्र लभ्यते किंचन प्रमाणं तथापि तेषामुल्लेखेन राजतरंगिण्याः स्रोतसो ज्ञानन्तु जायत एव। कवि-वक्तव्यानुसारं तानि नामानि तेन पद्ममिहिरात् लब्धानि। सोऽपि तानि हेल-राजस्य पार्थिवावलिरिति ग्रन्थाज्जग्राह[4]।

**लव-कुश-प्रभृतयः**—एतेषां विषये एतावदेव कविर्लिलेख यत् लवः लेवराग्रहारं कुशः कुरुहाराग्रहारम्, खगेन्द्रः खागी-खोनमुषाग्रहारं गोधरश्च गोधरीति ख्यातमग्रहारं निर्ममे। राजतरंगिण्यां वर्णितानां मन्दिरादिनिर्मितीनां, ग्रामाणां, कुल्यादीनाञ्च नामानि लवप्रभृतीनां नामभिः समं समानतामावहन्ति। एतदतिरिच्य नान्यत् प्रमाणं तेषां सत्ता-विषये लभ्यते।

प्रायेण समस्तदेशेषु लोककथाः प्रचलिता भवन्ति, ताभिः सार्धञ्च यथार्थानां कल्पनाप्रसूतानां वा राज्ञां नामानि प्रायेण योज्यन्ते। लवादीनामपि नाम लोककथा-

---

(3) 1-191
(4) 1-18

स्वाघृतं नन्वस्ति तन्नेदं सम्यक् वक्तुं शक्यते यत् कल्हणेन वर्णिता राजानो काल्प-निकाः सन्ति उत वा वस्तुतस्तेषां सम्बन्ध आसीत् तत्तदाग्रहारैः सह। अत एव हेल-राजस्य वक्तव्ये लवात् शचीन्द्रपर्यन्तं वर्णनं सन्दिग्धमेवास्ति, इतिहास-दृष्ट्या च तन्न महत्वं धत्ते।

**छविल्लाकरात् प्राप्ताः पंचनृपतयः**—छविल्लाकर-ग्रन्थाल्लब्धानामशोकादि-पंचनृपाणां भिन्नमेव वर्णनं वयं प्राप्नुमः[5]। यद्यपि छविल्लाकरस्य समय-स्थानविषये न क्वापि प्राप्यते सुनिश्चितवर्णनं तथापि स नैकलोककथानां किंचित् लाभकरं वर्णनं व्यदधात्। ताश्च कैश्चित् विख्यातनृपैः समं सम्बद्धाः सन्ति।

**अशोकः** कवेः व्याख्यानं खलु भारतेतिहासे प्रथितयशसं सम्राजमशोकं बौद्ध-धर्मस्य भक्तमनुयायिनं प्रतिपादयति। काव्ये वर्णिते शुष्कलेत्रवितस्तात्रक्षेत्रे तेन नृप-तिना विहारस्तूपैराच्छादिते **"शुष्कलेत्रवितस्तात्रौ तस्तार स्तूपमंडपैः"**। एतादृशा उल्लेखा अशोकं कश्मीरमंडलेन समं सम्यक् सम्बद्धं कुर्वन्ति। चीनदेशात् समागतानां यात्रिणामुल्लेखा अपि तदेव पोषयन्ति। अशोकः 'श्रीनगरी' नाम्नीं कश्मीरराजधानीं चकार या वै अद्यतनस्य श्रीनगरस्य समीप एव आसीत्[6]। अद्यापि च 'पाण्ड्रेथन' इति स्थाने तन्नगर्या अवशिष्टं भव्यं मन्दिरमेकं विराजते*। विजयेश्वरतीर्थे प्राचीनस्य शिव-मन्दिरस्य जीर्णोद्धारं कृत्वासौ भूभृत् अशोकेश्वर-संज्ञितं देवप्रासादमेकं चक्रे[7]।

भूतेशशिवस्य तीर्थस्य यात्रिषु तद्भक्तेषु अशोकः अप्यन्यतमः अभूत्। तस्य खलु शचीनरेण समं प्रदर्शितः सम्बन्धः सन्दिग्धो विद्यते। हेलराजस्य राजावल्यां विद्य-मानस्य शकुनेः विषये अपि अन्यत्र किंचिदपि न ज्ञायते। तथापि समस्ते अपि उत्तर-भारते स्थापितसाम्राज्यस्य अशोकस्य कश्मीरेषु वर्णितः प्रभावः तत्तेजः कीर्तिम् च प्रख्यापयत्येव।

**जलौकः**—अशोकस्य अनन्तरं तत्तनयः जलौको राजा बभूव। स हि अनेक-लोककथानां नायकः अस्ति। स्वमंडले प्रसृतं म्लेच्छमंडलमसौ उज्झटितवान्, जैत्रया-त्राभिश्च बहून् विजयान् प्राप। कान्यकुब्जात् वर्णव्यवस्थाम्, धर्म्यान् व्यवहारिणश्चा-नीय, सुव्यवस्थितं निजशासनमकार्षीत्। अष्टादशकर्मस्थानानि च संस्थाप्य राज्ये यौधिष्ठिरीं स्थितिं चकार, कविमते स शैव आसीत्। विजयेश-नन्दीश-शिवस्य स भक्तः निगदितः। कल्हणः जलौकवर्णनप्रसंगे कृत्याश्रमविहारकथामलिखत्, यस्यां खलु

---

(5) 1-96

(6) 1-101, 102

*(7) इदमुभयमपि मन्दिरं मया कश्मीर-भ्रमणप्रसंगे 27-8-67 तिथौ दृष्टं, विजयेश्वर एव सम्प्रति बिजबिहारा इत्यस्ति तस्य केचित् अवशेषा अपि मया विलोकिताः। 1-105, 8-391

बौद्धधर्मप्रभावः संलक्ष्यते। सिद्धः अवधूतः जलौकस्य गुरुरभवत्। नेदं वक्तुं सुकरं यत् कश्मीरेषु प्रचलिताः जलौकविषयकक्थाः किमैतिहासिकं महत्वं दधते। बहिः प्राप्तेषु इतिहासस्रोतस्सु अस्य अशोकतनयस्य नामापि न प्राप्यते। राजतरंगिण्यां वर्णितं तच्चरित्रमपि जनश्रुतिमात्रं विद्यते। इतिहास-विचारेण तु तेन स्थापितानां वारवालादीनामग्रहाराणां, तत्पत्न्या ईशानदेव्या च कृतानां मातृचक्राणामुल्लेखः एव केवलं महत्वपूर्णः वर्तते[8]।

**दामोदर-द्वितीयः**—दामोदर-द्वितीयस्योल्लेखेन समं वयं परम्परागत-कथासु प्रविशामः। स वै छविल्लाकरात् गृहीतः अस्ति। अनेन राज्ञा कृतानाम्, चित्रकार्याणां कथाः, तस्य च सर्परूपे परिवर्तनं, तत्रोल्लिखितं "दामोदर सूद" इति स्थानम् "दामोदर का उडर" इति रूपे वर्तते। इतिहासज्ञानां मते दामोदर द्वितीयस्योत्पत्ति-स्थानं दन्तकथा एव सन्ति। न च वास्तविकं किंचित् इतिहासस्रोतः। वस्तुतः कल्हणसमीपे दामोदरद्वितीयविषये नासीत् वास्तविकं किंचित् वृत्तम्[9]।

**तुरुष्कनृपाः**—दामोदर-द्वितीयानन्तरं तुरुष्कवंशीयाः हुष्क-जुष्क-कनिष्काख्यास्त्रयो राजानो बभूवुः। तन्नामोल्लेखेन समं वयं पुनरपि यथार्थेतिहासे प्रविशामः। उत्तरपश्चिमभारतस्य कुषाणशासनेव सह कनिष्कस्याभेदः, बौद्धपरम्पराभिः, लेखैः, मुद्राभिश्च प्रमाणितः अस्ति। हुष्कस्य नामापि हुविष्करूपे प्राप्तमस्ति, मथुराया एकेनाभिलेखेनापि तत् प्राप्यते। हुष्कः कनिष्कस्यैवोत्तराधिकारी अभूत्। जुष्कविषये साम्प्रतं यावत् किंचित् बाह्यस्रोतसः प्रमाणं न लब्धमस्ति। एतैस्त्रिभिः राजभिः हुष्कपुरं जुष्कपुरं कनिष्कपुरञ्चेति नगरत्रयं विनिर्मितम्। **एतेषु च हुष्कपुरस्यैव विकृतरूपं "उष्करा" इति स्थानं विद्यते, बारामूलातः क्रोशं दूरे तस्य अवशेषाः मया कश्मीर यात्रायां दृष्टाः।** जुष्कः जयस्वामिपुरे एकं विहारमकार्षीत्[10]। पुण्याश्रयैस्तैः शुष्कलेत्रादिषु मठ-चैत्यादयः विनिर्मिताः। यद्यप्येतेषां तुरुष्कनरपतीनां वर्णनमतिसंक्षिप्तं वर्वर्ति तथापि तद्धि ऐतिहासिकसत्यतां धत्ते वैदेशिकैः तुरुष्कैः बौद्धधर्माय चिरमाश्रयः प्रदत्तः। उल्लिखितस्य पुरत्रयस्य अवशेषाः सम्प्रत्यपि स्वनिर्मातॄणां स्मृतिं कारयन्ति। परन्तु इतिहासे एतेषां राज्ञां क्रमः भिन्नो वर्तते। स च कनिष्कः ततः हुष्कः ततश्च जुष्कः इत्येवमस्ति[11]।

**कुषाणशासने-कश्मीरमंडलम्**—कनिष्क-हुविष्क-विषये बौद्धानां लेखाः, मुद्राः, ताम्रपत्राणि, च सम्प्रत्यपि प्रमाणीकुर्वन्ति यत् कदाचित् कश्मीरेषु कुषाणवंशस्य

---

(8) 1-112 से 149, 121 टि., 122 टि। **वारवालस्थानं मया दृष्टमासीत् कश्मीरभ्रमणे।**

(9) 1·157 से 167, 157 टि.।

(10) 168 टि., 169, 170

(11) 1-168, टि. 169, 170

राज्यं बभूव। बौद्धानां ग्रन्थैः परम्पराभिश्च ज्ञायते यत् तृतीया बौद्धसंगीतिः कनिष्केन स्वराज्यकाले कश्मीरेष्वायोजिताभूत्। चीनयात्री ह्वेनसांगः स्वयात्राकाले कनिष्कविषये प्रचलिताः परम्पराः जीविता एव दृष्ट्वान्। अत एव तुरुष्कवंशीयानां राज्ञां समये बौद्धप्रभावं प्रदर्शयन् कल्हणः ऐतिहासिक-सत्यतां वहत्येवात्र न संशयावकाशः[12], तिब्बतस्य स्रोतभ्यः ज्ञायते यत् बौद्धधर्मरक्षकः बोधिसत्वो नागार्जुनः कनिष्ककाले जनिं लेभे, इदं च नागार्जुन-विषये कल्हणस्यापि लेखं संपुष्टं करोति। कनिष्ककालः बुद्धनिर्वाणसमये मन्यते। एतेषां त्रयाणां नृपाणां वर्णनं, कल्हणं बौद्धपरम्पराणामध्येतारं साधयति[13]।

**अभिमन्युः प्रथमः**—तुरुष्कवंश्यानां बौद्धसंरक्षक-राज्ञां विरोधे बौद्धधर्मविरोधिनः अभिमन्युप्रथमस्य वर्णनं दृश्यते। तद्राज्ये सततं बौद्धधर्मविरुद्धं वातावरणं विलोक्यते। छविल्लाकरात् गृहीतस्यास्य राज्ञः नामान्यत्र नोपलभ्यते। तस्य राज्यकाले लब्धप्रभावैः बौद्धैः वेदपुराणप्रतिपादिताः क्रियाः विच्छिन्नाः। अथ च विप्लुताचारे काश्मीरमंडले बलिकमविधायिभिः प्रभूतहिमवर्षिभिः जनक्षयश्चक्रे। येन च राजा षण्मासेभ्यः शीतलदार्वाभिसारादौ उषितुं बाध्यो बभूव। अथ काश्यपः चन्द्रदेवाख्यो द्विजस्तपस्तप्त्वा नीलात् पुराणविधिं संप्राप्य, नागानां बौद्धानां च विप्लवं शमितवान्। नीलपुराणोक्ताचार-विधिं च पुनः स्थापितवान्।

अस्यां कथायां न वर्तते कश्चिदितिहासः किन्तु नीलमतपुराणे वर्णिता दन्तकथैवात्र प्रस्तुता। नीलमतपुराणं पिशाचेभ्यः कश्मीरमुक्तं वर्णनं विदधाति।

अभिमन्यु-राज्ये महाभाष्य-प्रवर्तनस्य, अभिमन्युपुरस्थापनायाः, मन्दिरनिर्माणस्य चोल्लेखस्तं किंचित् इतिहासप्रकाशे नयति, यद्यपि तन्निर्मितीनामन्यत्र वर्णनं न प्राप्यते[14]।

**गोनन्द-तृतीयः**—गोनन्द-तृतीयः अभिमन्युमनुचकार। स खलु नीलपुराणोक्तां विधिं यज्ञादीन् विविधयात्राश्च पूर्ववत् प्रावर्तयत्। अस्य राज्ञः वर्णनात् एव सततं राज्यकर्तॄणां कश्मीरपार्थिवानां नामावलिः प्रारभ्यते। यान्च संभवतः कविः पूर्ववर्तिनां लेखकानां ग्रन्थेभ्यो जग्राह। रघुवंशिषु रघुरिव गोनन्दतृतीयः गोनन्दवंश्यानामाद्यो निगदितः। तदनन्तरं तद्वंशीयैः प्रवरसेनप्रभृतिभिः चिरं मही भुक्तेति कविर्लिखति, राज्ञा प्रवर्तित-पुराणादि विधिं व्यतिरिच्य नान्यदैतिहासिकं वृत्तं कल्हणस्तद्विषये ददौ। गोनन्दवंशस्य स प्रवर्तक आसीदित्येव सर्वाधिकं महत्वपूर्णं तत्वं कविवर्णने वर्तते। इदं च गोनन्दतृतीयवर्णनं नीलमतपुराणे वर्णिते प्रथमे गोनन्दद्वये किं प्रभावं जनायामास इति पूर्वमेव प्रतिपादितमस्ति। गोनन्दतृतीयस्य संक्षिप्तवर्णनेन वयं इति-

(12) 168 टि. 177
(13) 173 टि.
(14) 1-177, 79, 80, 82, 83, 18, 184 टि, 176, 175

ह्रासप्रसिद्धं वृत्तं प्राप्नुमः[15] ।

**विभीषण-प्रथमः-इन्द्रजित्-रावणः-विभीषणद्वितीयश्च**—गोनन्द-तृतीयस्योत्तराधिकारिषु, विभीषणप्रथमः इन्द्रजित्, रावणः, विभीषणद्वितीयश्च इत्येतेषां केवलं नाममात्रमेव लभ्यते राजतरंगिण्याम् । तन्न तेषामैतिहासिकताविषये विचारस्यावश्यकता प्रतिभाति । रावणः वटेश्वराख्यं लिङ्गं निर्ममे । चतुःशालामठस्यान्तः कृताय तस्मै, समस्तं कश्मीरमंडलं रावणः समर्पितवान्, इत्येव केवलं रावणविषये उल्लिखितम्[16] ।

**नरः**—विभीषणद्वितीयस्य पुत्रः तदनन्तरं नरपतिः समजनि । तद्विषये अशीतिः पद्येषु एका कथा कविना लिखिता, न सा इतिहासदृष्ट्या सत्यतामावहति, परम्पराप्रवर्तिता एव सा केवलं दृश्यते । कथानुसारं राजा स्वीयैः दुष्कर्मभिरेव समूलम् विनाशं प्राप । कथायामुल्लिखितस्य नरपुरस्य विषये स्टीनप्रभृतीनां मतमस्ति यत् तद्वर्णनं जनश्रुतिमात्रमस्ति न यथार्थम् । सुश्रुवस-नागस्य, तत्कन्ययोः, नगरज्वालस्य, हिमवृष्टेः, सरसः मध्ये नागब्राह्मणयोः निवासस्य च वृत्तं पौराणिकं वर्तते । अद्यापि अमरनाथयात्रा-समये दृश्यमानं शेषनाग इति सरः, उक्त-नागस्य वसतिरिति जनश्रुतिरस्ति । मयापि तत्सरः दृष्टम् । संभवतः विस्तृतेन नरपुरवर्णनेन कल्हणः काव्यसौन्दर्यं प्रदर्शयितुकामो वर्वर्ति ।

कल्हणेन कृतं नरपुरस्यावशेषाणां, प्राचीनमुद्राणां च वर्णनं प्रदर्शयति यत् वितस्तायास्तटे चक्रधरसमीपे कंचिदासीत् नगरं किन्तु अद्यावधि तद्विषये सुप्रमाणं न पुरतः समागतम् । 'चक्रधर' एव सम्प्रति चकधर इति प्रसिद्धं बिजबिहारानगर-समीपे । तच्च मया दृष्टमासीत् कश्मीरयात्रायाम्[17] ।

**सिद्धः**—दुर्वृत्तस्य नरस्यानन्तरं साधुचरितः सिद्धो नाम नृपः सिंहासनमारुरोह । धर्मप्रियः सः शिवस्य अर्चयामेव समयं निनाय । प्राणान्ते च सदेहः असौ शिवलोकं जगाम[18] ।

**उत्पलाक्ष-हिरण्याक्ष-हिरण्यकुल-वसुकुलाः**—एतेषां चतुर्णाम् पितृपुत्राणां राज्यकालः, सिद्धे दिवंगते दृष्टिपथमायाति । उत्पलाक्षवसुकुलयोस्तु नाममात्रं दृश्यते । किन्तु कविः हिरण्याक्षस्य नगरस्य, हिरण्यकुलस्य हिरण्योत्साग्रहारस्य च उल्लेखं करोति । एतेषां राज्यकालस्यावधिमपि स सूचितवान् । नान्यत्र तेषामैतिहासिकं वृत्तं प्राप्यते ।

**मिहिरकुलः**—वसुकुलतनयस्य मिहिरकुलस्य वर्णनेन वयं पुनरपि यथार्थेतिहासे प्रविशामः । भारतीयैः पाश्चात्यैश्चेतिहासकारैः सम्यक् साधितमस्ति यत् कल्हणेन

---

(15) 1-185, 191, 190
(16) 1-192 से 196
(17) 1-198 से 275, 201 टि., 263 टि.
(18) 1-279 से 282

वर्णितः मिहिरकुलः श्वेतहूणानां शासकात् मिहिरकुलात् अभिन्न एव । फ्लीटमहोदयेन संगृहीतैः शिलालेखैः, अन्याभिः साक्षिभिश्च ज्ञायते यत् पूर्वैः श्वेतहूणैः काबुलघाटेः मध्यभारतस्य च मध्ये स्थापितस्य विजितस्य विस्तृतराज्यस्य शासितुः, तोरमाणस्य तनयः तद्राज्योत्तराधिकारी, मिहिरकुलः 515 खीष्टाब्दे राज्यसिंहासनमारुरोह । प्रायेण 530 खीष्टाब्दे च तस्य विस्तृतप्रदेशस्य वीरजातिभिः निष्कासितः स कश्मीरेष्वाजगाम । यत्र च स्थित्वासौ, छिन्नस्य राज्यस्य पुनरपि प्राप्त्यै सततं प्रयत्नमकार्षीत् । 540–550 मध्ये तस्य शासनमभवत्[19] ।

**मिहिरकुल-विषये प्रवर्तिताः परम्पराः**—कल्हणेन कृतं मिहिरकुलवर्णनं रोचक-लोककथा-परिपूर्णमस्ति । तासां कथानामपि च वर्तते महत्वम् । यतस्ताः मिहिरकुलस्य मृत्योरनन्तरं, शतवर्षेषु विकसितानां तद्विषये प्रचलितानां जनश्रुतीनां परम्पराणां च चित्रं स्पष्टीकुर्वन्ति । तस्य चरिते क्रूरता, हिंसावृत्तिश्च प्रायेण समस्तलोकान् प्रभावितान् चकार । अस्य च गुणद्वयस्य व्याख्याने कविना लिखिताः कथाः, ह्यूनसांगस्य वर्णनेनापि पुष्टा भवन्ति । पूर्ववर्ती चीनयात्री सुंगयुनः अपि भारते आगत्य तं क्रूरं हिंसारतं च भूभृतं ददर्श । वार्तामपि च तेन सममकार्षीत् । तद्विषये प्रचलिताः कथाः श्रुतवान् । ततश्च स अपि तस्य वर्णनं तथैव चकार यथा अन्यैः कृतम् । एकस्यां कथायां तु कल्हणः "**त्रिकोटिहा मिहिरकुलः**" इत्यभिधाय कोटित्रयजनानां हिंसायाः सूचनामदात् । इदं चापि ह्यूनसांगस्य वर्णनेन पुष्टं जायते[20]। एकस्यामपरस्यां कथायां कश्मीरद्वारे (पीरपन्तसाल दर्रा इति स्थाने), मिहिरकुलेन कृतः शतं करिणां घातः (**शतमन्यत् गजेन्द्राणां हठेन निरलोठयत्** 1-303) आकर्षको वरीवर्ति । यतः साम्प्रतमपि कश्मीराणां जनश्रुतिषु तस्य स्मृतिरवशिष्टा विद्यते । नरपतेरस्य अनेकेषां भीषणसंग्रामाणामैतिहासिकतथ्यस्य स्मृतिचिन्हं कविवर्णितायां सिंहलेषु विजययात्रायां, चोल-कर्णाट-लाट-सिन्धु-नरेशेषु विजयप्रसंगे अवशिष्टं ननु । एकस्मिन् पद्ये कल्हणः कथयति यत् कदाचित् मिहिरकुलः सिंहलनृपस्य पादांकितं पटं वक्षसि धारयन्तीं स्वभार्यामपश्यत् । क्रोधाच्च सिंहलेषु आक्रमणमकार्षीत् । इयं च कथा कल्हणसमये अपि जनश्रुत्यां प्रचलितासीत् । तस्याश्च पुष्टिः कस्यचित् काश्मीरराज्ञः वर्णनप्रसंगे "मुजमबुट-टवारीख" इति ग्रन्थेनापि जायते । अपि च फ्लीटमहोदयः अपि तत्पुष्टिं कृतवान् ।

अन्यच्च (**'अग्रहारान् जगृहिरे गान्धारा ब्राह्मणास्ततः** 1-30') **वः परिहारदः 1-312** इति वर्णनमपि ऐतिहासिकतत्वं धत्ते । यच्च मिहिरकुलस्य गान्धारैः सह निकटसम्बन्धमपि द्योतयति, स च सम्बन्धः ह्यूनसांगस्य सुंगयुनस्य च लेखैरपि पुष्टं भवति[21] ।

(19) 1-286, 287, 288, 289 टि.
(20) 1-310, 322, 322 टि
(21) 1-294 से 300, 294 टि.

अपि च (**विनष्टदेशे पुण्याचार-प्रवर्तनम्**) इति पदेनं ज्ञायते यत्, क्रूरस्यापि भूपस्य कथंचित् धर्मकार्ये अपि रुचिरुत्पन्ना, स खलु श्रीनगर्यां मिहिरेश्वरं, होलडायां मिहिरपुरं च निर्ममे । गान्धारदेशजातेभ्यः ब्राह्मणेभ्यः अग्रहारदानं, अकार्षीत् । यच्च तेन पापमाचरितं तत्कृते प्रायश्चितं चापि चकार । इयं च धर्मकर्मणि रुचिः पूर्वेषां लेखकानां लेखेष्वपि पुष्टा भवति । किंच ह्यून्सांगस्य वर्णनैरप्यवगम्यते यत् जीवनस्योत्तरे भागे स्वपुण्यकर्मभिः मिहिरकुलः सम्मानं प्राप्तवान् । स हि उत्तरजीवने ब्राह्मणानामपि उदारमनाः संरक्षकः अभवत् ।

अयं निष्कर्षः कविना उल्लिखितात् भूभृतः आत्महत्याप्रसंगादपि निर्गच्छति । स एव प्रथमः नृपतिरासीत् यः जीवनस्य पूर्वार्धे क्रौर्यकर्माणि कृत्वा उत्तरार्धे, धर्मस्थापनाय महत्प्रयासं चकार । स्वीयेन, म्लेच्छैश्च विच्छिन्नं धर्मं पुनः स्थापितवान् । अन्ते च पापेभ्यः प्रायश्चित्तमाचरन् देहत्यागमकार्षीत्[22] । मिहिरकुलस्य मुद्राः स्पष्टमेव तस्य शैवत्वं प्रतिपादयन्ति । यच्च प्रवर्तितायाः परम्परायाः एव द्योतकं ननु ।

स्टीनप्रभृतीनां विदुषां मते मिहिरकुलस्य राज्यकालः तस्य यथार्थकालात् द्वादशशतं वर्षपूर्वं निर्धारितः कल्हणेन । निर्धारितकालस्य कारणमपि च नैव प्रदत्तं तेन । संभवतस्तत्कारणं, इदं स्यात् यत् कल्हणः मिहिरकुल काश्मीर-राज्ञां गणनायां स्थानं दातुमैच्छत्, तस्यामेव च तं स्वीचकार[23] ।

**बकः**—मिहिरकुले दिवंगते तत्सुतः सदाचारो बकः पौरैः राज्येऽभ्यषिच्यत । पुण्यकर्मभिः सः जनाल्हादको बभूव । लोकस्तमवतरितं धर्ममन्यत । पुण्यकर्मासौ बकश्वभ्रो बकेशमन्दिरं बकवत्यापगां, लवणोत्साख्यं नगरं च व्यदधात् । बक-विषये वर्णितमिदं निर्मितित्रयमेव केवलं महत्वपूर्णमस्ति । अन्यत्तु किंचित् तस्मिन् विषये इतिहासदृष्ट्या वर्णनीयं नास्ति । कविर्लिखति यत् एकदा काचित् कान्ताकृतिः योगेश्वरी बकस्य समीपमाजगाम । मधुरवचोभिः ग्लपितस्मृतिं तं च यागोत्सव-माहात्म्यं द्रष्टुं निमन्त्रितं चकार । अथासौ पुत्रपौत्रशतोपेतस्तत्र गतो राजा देवीचक्रोपहारतां ययौ । कविः सूचयति यत् तत्समये अपि इयं कथा प्रचलितासीत्[24] ।

**क्षितिनन्दः-वसुनन्दः-द्वितीयनरः-अक्षः**—इमे नरपतयो नाम्नैव केवलं स्मृताः सन्ति । न चास्ते तेषां ऐतिहासिक-सत्ता । कवेरुल्लेखानुसारं वसुनन्दः कामशास्त्रं चकार, अक्षश्च अक्षवलाख्यं ग्राममकारयत् । अक्षवलेति नाम संभवतः प्रचलितपारिभाषिक शब्दावलीतः गृहीतः स्यात्[25] ।

---

(22) 1-305 से 315

(23) स्टी. भाग 1–पृ 79

(24) 1-325, 327, 329, 331 से 335

(25) 1-337, 338 संभवतः इदानीं **अच्छाबल इति मयादृष्टं स्थलं अक्षवलस्य वर्तमानरूपमस्ति कश्मीरेषु।**

**गोपादित्यः**—राज्ञां सरण्यां गोपादित्यः तदनन्तरं सिंहासनं प्राप। यो वै ऐतिहासिकयथार्थतां धत्ते। स खलु खोल-खागिक-आहाडिग्राम-स्कन्दपुर-शमांग-ग्रसमुख-प्रभृतीन् अग्रहारान् कृत्वा ब्राह्मणेभ्यः ददौ, गोपाद्रौ ज्येष्ठेश्वरं शिवं प्रतिष्ठाप्य आर्यदेशीयेभ्यो द्विजेभ्यश्च गोपाख्यानग्रहारान् अददात्। "**उत्तमो लोकपालोऽयमिति लक्ष्म प्रशस्तिषु** स प्राप। प्रशस्तिपत्रस्योल्लेखः संकेतयति यत् कल्हणः स्वयं, केनचित् विश्वस्तमाध्ययेन वा गोपादित्य-वृत्तं विलोकितवान्[26]।

**गोकर्णः**—गोपादित्यसूनुः गोकर्णस्ततः राज्यासनं लेभे। न तद्विषये अधिकं लिलेख कविः। केवलं तेन स्थापितस्य गोकर्णेश्वरशिवस्योल्लेखमकार्षीत्। अष्टपंचाशत-वर्षाणि स राज्यं चकार। उक्तस्थापनायाः विषये नान्यत्र कुत्रापि संकेतः प्राप्यते। जनरल-कनिंघममहोदयः एकां मुद्रामस्य राज्ञः प्रतिपादितवान् किन्तु स्टीन-महोदयस्तां सम्यक् निरीक्ष्य कनिंघममतमदूषयत्[27]।

**खिखिल-नरेन्द्रादित्यः**—गोकर्णस्योन्तराधिकारी तदात्मजः खिखिलापरनामधेयः नरेन्द्रादित्यः संवृत्तः। स्टीनमते खिखिल एव स्वमुद्रासु स्वात्मनं **देवशाहीखिखिल-**इत्यलेखीत्। नरेन्द्रादित्यः भूतेश्वर-शिवस्य प्रतिष्ठामकार्षीत्। बहूनि अन्नक्षेत्राणि च चालितवान्। तस्य गुरुः उग्रः उग्रेशं शिवं मातृचक्रं च व्यदधात्। इत्थं खिखि-लस्य खिखिलनाम्ना प्राप्ताः मुद्राः, तस्य निर्मितयश्च तस्य ऐतिहासिकसत्तामनुमाप-यन्ति। इदं तावदुल्लेखनीयमस्ति यत् कल्हणस्य नृपावल्याः लक्खणः अपि नरेन्द्रा-दित्य इति नाम धत्ते। उभे च खिखिल-लक्खणनाम्नी अभारतीये प्रतीयेते[28]।

**युधिष्ठिरः**—प्रथमतरंगस्य राजसु अन्तिमो युधिष्ठिरः अस्ति। सूक्ष्मनेत्रतया लोकैरसौ अन्धयुधिष्ठिर इति न्यगद्यत। स एव गोनन्दवंश-विध्वंसको मन्यते। पूर्वन्तु स पूर्वेषां पुण्यकर्तॄणां राज्ञां सरणीं जगाम, ततश्च श्रीमदक्षीवः सन् पापकर्मसु निरतः अभवत्। तस्य दुर्वृत्तैस्तन्मन्त्रिण एव तन्नाशोद्यता अभूवन्। ते अन्ये च सामन्ताः राज्यजिहीर्षवः संजाताः। अथ विद्रोहिभिः सामन्तैः मन्त्रिभिश्च बलादसौ राज्या-न्निष्कासितः। राज्ञः राज्यात् पतनं, पलायनं च वर्णयन् कल्हणः शान्तरसस्य रम्यं चित्रणमकार्षीत्[29]।

---

(26) 1–140 से 144
(27) 1–346
(28) 1–344 टि., 347, 348
(29) 1–350 से 373

## द्वितीय-तृतीय-तरंगयोः-राजानः

**प्रातापादित्यः प्रथमः**—द्वितीयतरंगे षण्णां राज्ञां सारिणी वर्तते । सर्वे अपि च ते गोनन्दवंशात् भिन्नवंशा अभूवन् । प्रथमश्च तेषु नरपतिषु, विक्रमादित्यस्य सम्बन्धी प्रतापादित्यः अभूत् । यो वै युधिष्ठिरस्य रुष्टसचिवैः दिगन्तरादानीय राज्ये अभ्यषिच्यत । स हि शक-विजेतुः शकारिविक्रमादित्यात् भिन्न एवाभूत्, इति लिखित्वापि कल्हणो नास्मान् सूचयति यत् बहुषु विक्रमादित्येषु कः असौ गृहीतव्य इति । किन्तु कियत्कालावधि कश्मीरेषु हर्षादीनां राज्यमासीदिति कविवचनेन उज्जयिन्या हर्ष-विक्रमादित्यः कवेरभिप्रेतः अस्तीत्यनुमीयते । यश्च षष्ठशताब्द्या प्रथमार्धे शशास । स च भूपतिः कवेः मातृगुप्तस्य सरक्षकः अवर्तत ।

इदमत्र वक्तुं शक्यते यत् भ्रमादेव कल्हणः भिन्नकालं नृपद्वयं, एकस्मिन्नेव काले अवर्णयत् । तथापि हर्षादीनां नृपतीनामुल्लेख इतिहासदृष्ट्या उल्लेखनीयो ननु । कश्मीरेषु तदागमनमेव गोनन्दवंशस्य शासनं समापितवान् । अत्र खलु शकारिविक्रमादित्यस्योल्लेखं कृत्वा कविः शकेषु विक्रमादित्यस्य विजयमुल्लिखितवान् । प्रतापादित्य-प्रथमः द्वात्रिंशत्-वर्षाणि राज्यं कृत्वा दिवं ययौ ।

**जलोकाः**—तस्मिन् दिवंगते तत्तनयः जलोकाः तद्वदेव द्वात्रिंशत् वत्सरान् शासनं सञ्चाल्य द्युलोकमगमत्[1] ।

**तुंजीनः प्रथमः**—अथ जलोकासुतः तुंजीनः प्रजा अरंजयत्, 'वाकपुष्टा" इत्याख्यया दिव्यप्रभावया भार्यया सार्धमसौ बहूनि पुण्यकर्माणि चकार । उभौ तौ महाभागौ भुवः आभरणरूपं तुंगेश्वरं शिवमन्दिरं कतिकाख्यं नगरं च चक्रतुः । दुर्दैवात् तयोः राज्यकाले अकस्मादेव भाद्रपदमासे तुहिनमपतत्, परिणामे च भयंकरो दुर्भिक्षविप्लवः समजनि । राजा तु सपत्नीकः निजैः कोशैः अन्नं क्रीत्वा प्राणिनः समजीवयत् । अन्ततश्च प्रजापुण्यात् नृपस्य, देव्याश्च प्रभावात् दुर्भिक्षः शशाम । अथ सा निष्कलमषा राज्ञी भूतिविभवोदग्रं कतोमुषं, रामुषं चाग्रहारं द्विजन्मभ्यः दाने ददौ । अथ तत्पत्यौ शान्ते सा साध्वी अपि तं विपन्नमन्वगात् । यत्र च सा प्राणान् तत्याज, कल्हण-समये अपि तत्स्थानं वाकपुष्टाटवी इति न्यगद्यत ।

तुंजीनराज्ये द्वैपायनमुनेरशः चन्दको नाम नाटककारो महाकविरभूत् । वर्णितः दुर्भिक्षः, निर्मितयः, चन्दकश्चेति सर्वे अपि ऐतिहासिकं तथ्यं दधति[2] ।

**विजयः**—तुंजीनानन्तरमन्यकुलजः विजयो नाम नृपः अष्टौ वर्षाणि राज्यमकार्षीत् । असौ पत्तनपरिवेष्टितं विजयेश्वरं मन्दिरमेकं चकार । अस्य पत्तनस्य विषये अन्यत्र प्रमाणं नोपलभ्यते ।[3क]

---

(1) 2–5, 6, 7, 9, 10

(2) 2–11, 12, 14, 18, 19, 20, 28, 54, 55, 56, 57, 16

**(3क)** 2–62 स्टी. राज, भाग 1 पृ. 81

**जयेन्द्रः**—विजयतनयस्य जयेन्द्रस्य वर्णनमवास्तविकं विचित्रं दन्तकथाश्रितं च वर्तते। किन्तु तत्प्रसंगे कविः अद्भुतचरितस्य मंत्रिणः, पश्चात् च शूले आरोपितस्य सन्धिमतेः विस्तृतकथां ददाति। मृतः असौ सन्धिमान् कामोन्मत्तानां योगीश्वरीणां प्रभावेण पुनरपि जीवितः अभूत्। जयेन्द्रे मृते च सिंहासनमारुरोह 'आर्यराज' इति ख्यातिं च प्राप। काश्मीराणां परम्परासु राजभक्तेषु आदर्शभूतः, प्रेमी चेति प्रसिद्धः असौ, सप्तमत्वारिंशत् वत्सरान् उर्वीम् प्रशास्य, प्रजानां विरागात् स्वेच्छया नृपासनं तत्याज। जीवनं चावशिष्टं भूतेशपूजने निनाय।

सन्धिमतेः आर्यराजस्य इमां विचित्र-कथां वीक्ष्य विशेषतश्च मृतस्य तस्य पुनरुज्जीवनं, अयथार्थमसम्भवं च मत्वा, तस्य सतायाः कल्पनापि वृथैव प्रतीयते। कल्हणकाले अपि प्रचलिताः लोकपरम्पराः कैश्चित् प्राचीनमन्दिरैः अन्यैश्चावशेषै, समं तदभिधानं संयोज्य तस्य स्मृतिं स्थरीचक्रुः। स्टीनमते अस्य धर्मात्मनः नरपतेः अतिशयोक्तिपूर्णम् वर्णनं चरितं च ऐतिहासिक-सत्यतां विलोपयति। अपि च वयं 'संधिमति' इति नाम्नः स्थाने सन्धिमत् इति परिवर्तितमभिधानं पश्यामः तत्कारणं सम्भवतः प्रचलितशब्दविज्ञानमेवासीत्, तच्च नाम कामपि लोककथामाश्रयत्।[3ख]

**मेघवाहनः**—आर्यराजस्य राज्यत्यागेन समं द्वितीयस्तरंगः समाप्तिं याति। ततश्च पुनरपि गोनन्दवंशस्य राज्यं प्रारब्धम्। तत्र च सर्वप्रथमं, अन्धयुधिष्ठिरस्य प्रपौत्रस्य तनयः मेघवाहनः नृपः बभूव। राज्यान्निर्वासितः अन्धयुधिष्ठिरः गान्धार-नृपतेः-सभायामुवास तत्प्रपौत्रं गोपादित्यं गान्धार-नृपः जुगोप। स च तत्रैव मेघवाहनं पुत्रं प्राप्तवान्। काश्मीरमहामात्यानामाग्रहेण[4] निमन्त्रणेन च मेघवाहनः स्वपूर्वेषां राज्यं स्वीचकार। असौ अतीव महिमाशाली, उदारचेताः, पूतात्मा च शासकः अभूत्। सर्वत्रैव तेन हिंसानिषेधस्याज्ञा उद्घोषिता। यज्ञे अपि पशुहिंसां स समापितवान्। तेन, तद्गुरुणा, तत्पत्नीभिश्च निर्मिताः विहाराः स्तूपाः मठाः च सम्यग् साधयन्ति यत् स भूभृत् बौद्धानां महान् संरक्षक आसीत् तेषां धर्मे चासीत् तस्य रुचिः। तस्य धवलचरित्रं प्रकाशयन्तीभिः विविधकथाभिः सह कल्हणः, तेन प्राणि-हिंसानिषेधाज्ञाप्रसाराय कृतां दिग्विजययात्रामपि उल्लिखितवान् **स दिग्जाय निर्व्याज धर्मचर्यो विनिर्ययौ**। किन्तु इदमत्राश्चर्यं यत् दिग्विजयप्रसंगे कविः लंकाधिपतेः विभीषणस्याप्युल्लेखमकार्षीत्, वस्तुतः विभीषणसमये मेघवाहनसमये च शतशो वर्षाणामन्तरमस्तीति। तस्मात् लंका-विजयप्रसंगः अयथार्थः प्रतिभाति। कल्हणकाले लोकश्रुतिः प्रचलितासीत् यत् पुरा दिग्विजयप्रसंगे लंकायां निर्मिताः ध्वजाः उपहारेषु राज्ञे दीयन्ते स्म, **'सनाथशिखरान् प्रादात्तस्मै रक्षः पतिर्ध्वजान्'** संभवतः उक्तां जनश्रुतिमाश्रित्यैव कल्हणः मेघवाहनस्य लंका-विजयं कल्पितवान्। कल्हणः स्वयमपि तस्य कासांचित् कथानां वर्णने 'जनाः विश्वासं न करिष्यन्तीत्यभिधाय त्रपामनुभवति।

---

(3-ख) 2-65 से 115।

(4) 2-145, 146।

किन्तु एतासु नैककथास्वपि किंचित् ऐतिहासिकं तत्वं प्राप्तुमशक्यत एव। मेघवाहनस्य गान्धारागमनं सत्यमेव प्रतिभाति। अन्येषां कुषाणानामागमनं प्रागेव मया लिखितम्। कल्हणेन वर्णितं मेघवाहन-पत्न्या अमृतप्रभया विनिर्मितं 'अमृतप्रभा-भवनविहारं' चीनयात्री ओन्उ-कोंग महोदयः अपि जज्ञौ। स्तुन्याख्यया मेघवाहन-भार्यया निर्मितः लोस्तोन्यास्तूपः वास्तविकः प्रतीयते।[5]

**श्रेष्ठसेनः**—चतुस्त्रिंशतं सामः पृथिवीं पालयित्वा मेघवाहने दिवं गते तस्य सूनुः प्रवरसेन इति द्वितीयनामा तुंजीन इति ख्यातश्च श्रेष्ठसेनः क्ष्मां ररक्ष। पुराणाधिष्ठाने समातृचक्रं परमेश्वरं विधाय अनेकाः प्रतिष्ठाः स व्यदधात्।[6]

**हिरण्यतोरमाणौ**—श्रेष्ठसेनस्य हिरण्यःतोरमणाख्यौ द्वौ सुतावास्ताम्। अग्रजः हिरण्यः, पितुरुत्तराधिकारं प्राप। अनुजश्च तोरमाणः युवराजत्वमभजत। तोरमाणे स्वदीन्नारे प्रवर्तिते (तोरमाणेन दीन्नाराः स्वाहताः संप्रवर्तिताः) सति, तदग्रजः तं बन्धने व्यदधौ। चिरं कारागारे निक्षिप्तस्य तस्य भार्या अंजनाभिधा एकस्य कुलालस्य निलये सुतमेकं प्रासोष्ट। तत्रैव पालितः स शिशुः प्रवसेनेति संज्ञां प्राप। स च पश्चात् प्रवरसेनद्वितीयः इति ख्यातः राजसिंहासनं प्राप्तवान्।[7]

**तोरमाण-मुद्राः**—हिरण्स्य ऐतिहासिक-सत्यतायां नावाप्यते बहिः प्रमाणम्, किन्तु तोरमाणस्य नाम सम्प्रत्यपि सुरक्षितासु काश्मीर-ताम्रमुद्रासु सुरक्षितो वर्तते। कल्हणस्यैतासां मुद्राणामुल्लेखेन सह प्राप्तानां मुद्राणां च सम्बन्धे न वर्तते संशयावकाशः किन्तु इतिहास–विचारेण उत्पन्नानि स्टीनप्रमृतिभिः प्रदर्शितानि प्रश्नानि न समाधानं ददति।[8] तोरमाणांकितानां मुद्राणां सत्ता, प्रवर्तनं च पंचमषष्ठशताब्द्योरवश्यमभूत्। पूर्वन्तु हिन्दुशासनकाले प्राप्तासु मुद्रासु तोरमाणस्य नूतनाकृतयो मुद्राः सर्वाधिकं पुरातनाः प्रतिभान्ति। आकृतिः, प्राचुर्येण प्रवर्तनं चानुमापयति यत् केनचित् शक्तिशालिना, जयशीलेन राज्ञा ता उल्लिखिताः प्रवर्तिताश्चासन्। स्टीनप्रभृतीनां मते प्राप्तमुद्रासु विद्यमानः तोरमाणः मिहिरकुलस्य पित्रा तोरमाणेन अभिन्नो वर्तते। यः खलु पंचमशताब्द्याः अवसाने पंचनद-प्रदेशे, संभवतः कश्मीरेष्वपि शासनमकार्षीत्। सत्यं चेदिमनुमानं स्वीक्रियते तर्हि प्रश्नः अय समुदेति यत् कविः पितर पुत्रात् सप्तशत वर्षाण्यनन्तरं कथं निदधाति। इदं चापि स्मर्तव्यम् यत् कश्मीरेषु अपरः अपि पश्चात्वर्ती कश्चित् शासकः तोरमाणः अभूत्। यद्यपि एतन्नामतुरुष्कदेशीयं (टर्कीति प्रसिद्धं) प्रतीयते, तथापीदं कल्हणस्येतिहासे दशम-शताब्द्याश्चरमभागे गान्धाराणाम् एकस्य शाहिवंशीयस्य राजकुमारस्यापि दृश्यते। अस्तु तोरमाण–

---

(5) 3–2 से 14, 27, 72, 77, 94, 9 टि०, 10 टि०।

(6) 3–96, 97, 99।

(7) 3–102, 109, 107 से 120।

(8) 3–103 टि०, 4–495 टि०।

नामांकितानां मुद्राणां को नाम प्रवर्तक: अस्तीति न निर्णीतमस्ति विद्वद्भि:, नेदं वक्तुं शक्यते यत् कल्हणस्येतिहासे तोरमाण: कथं निहतभाग्य: निगदित: ।[9]

**मातृगुप्त:** —कल्हणस्य कथानुसारं तोरमाण: कारागारे एव मृत्युं प्राप्नोत् । तस्य पुत्र: प्रवरसेनश्च तीर्थयात्राप्रसंगेन कश्मीरान् तत्याज कतिपयदिवसापगमे हिरण्य: अपि एकत्रिंशतवत्सरान् राज्यं कृत्वा नि:संतति: स्वर्गम् जगाम । तस्य मृत्यो: प्रवरसेनस्य च राज्यारोहणस्य मध्यकाले कवे: मातृगुप्तस्य शासनं कविना वर्णितम् । एतस्य वर्णनमितिहासस्य यथार्थतां धत्ते । व विना विस्तरेण वर्णिता कथा मातृगुप्तं निर्धनं कविं प्रतिपादयति । स वै उज्जयिन्या नृपते: हर्षविक्रमादित्यस्य राज्य-सभायां सम्मानं प्राप्तुमियेष । तत्र गत्वा राज्ञ: परितोषाय तद्गुणसूचिका: कविता-श्चकार । पूर्वन्तु नासौ साफल्यं लेभे । किन्तु अन्ततश्च राज्ञ: स्नेहं सम्मानं चाकस्मादेव प्राप । राजा काश्मीरसचिवानुद्दिश्य आज्ञा-पत्रमेकं मातृगुप्तस्य तत्राभिषेकाय, तस्यैव हस्तेन प्रेषितवान् । दलोदन्तानभिज्ञ: मातृगुप्त: काश्मीर-सीमां प्राप्य तत्र काश्मीरिकमहामात्यान् प्रतीक्षमाणान् ददर्श । तैश्च, पत्रं वाचयित्वा स सम्मानं राज्ये अभ्यषिच्यत । प्रायेण पंचवर्षाणि राज्यं कृत्वा पुण्यात्मा कवि: राजा मातृगुप्त: स्वसंरक्षकस्य मृत्युमाकर्ण्य प्रवरसेनाय राज्यमत्याक्षीत् ।[10]

**विक्रमादित्य-हर्ष:** —मातृगुप्तविषये लिखितेयं कथा तत्संरक्षकं इतिहास-प्रसिद्धं हर्षविक्रमादित्यमुल्लिख्य इतिहासकाराणां कृते, कानिचित् यथार्थ-तत्त्वानि प्रकाशयति । उज्जयिनी-नगर्या: विक्रमादित्य-हर्ष: कल्हणेन शैलादित्य प्रतापशीलस्य पिता भणित: । अयं च शैलादित्य स एवास्ते, यो हि ह्यून्सांगमते 580 ख्रीष्टाब्दे मालवदेशे शासनं चकार । अयमुल्लेख: कल्हणेन वर्णितस्य विक्रमादित्य-हर्षस्य विख्यातेन विक्रमादित्येन सहाभिन्नत्वं साधयति । स हि शैलादित्यात् पूर्वम् पदासीनो निगदित: ह्यून्सांगेन । स्टीनमते विक्रमादित्य-हर्षस्य राज्यं षष्ठशताब्द्या: प्रथमार्धे आसीत्[11] । इदं प्रतीयते यत् इफ्थेलिट (Ephthelite) शासनस्य पातने विक्रमादित्य: साहाय्यमकरोत् । यद्वा तत्पतनेन स अवश्यं लाभान्वित: अभूत् । तत्कारणादेव कश्मीरशासने अपि तस्य प्रभाव: अभवत् । यद्यपि मातृगुप्त-विषये वर्णितानां घटनानां प्राप्तै: तथ्यै: सह अनुकूलता वर्तते तथापि तस्य राज्यं वस्तुत: आसीन्नवेति न निश्चयप्रचं वक्तुं शक्यते ।

क्षेमेन्द्रेणान्यैश्च काश्मीरलेखकै: उदाहृतानि पद्यानि वीक्ष्य मातृगुप्तकवे: सत्तायास्तु पुष्टिर्भवति, किन्तु काश्मीरेषु तस्य राज्य-शासनविषये, राजतरंगिणीं व्यतिरिच्य प्रमाणानि न प्राप्यन्ते । कल्हण-प्रतिपादिता कथा चेत् सत्यतामावहति तर्हि वयमेतन्निष्कर्षं प्राप्तुमर्हामो यत् षष्ठशताब्द्या: मध्यकाले, कश्मीरेष्वेकस्य शासकस्याल्प-

(9) स्टी० राज० भाग 1–पृ० 82, 83, 3–104, 105, 122 ।
(10) 4–123, 124, 125 से 323 ।
(11) स्टी० राज० 3-125, 330 दि० ।

कालीनं शासनमासीत् यो वै उज्जयिन्या विक्रमादित्यस्य साम्राज्यं स्वीचकार यद्वा तत्सहायतां लब्धवान् ।

कविः, मातृगुप्तनिर्मितं मातृगुप्तस्वामि-मंदिरमपि उल्लिलेख[12] तत्संरक्षकत्वे एव मेण्ठः हयग्रीववधं लिखितवान् "**हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम्**" 3–260।

**प्रवरसेन–द्वितीयः**—राजतरंगिणी प्रदर्शयति यत् प्रवरसेन-द्वितीयः त्रिगर्तानां भुवं विजित्य स्वपितॄणां विलुप्तराज्यमधिकर्तुम् कश्मीरान् प्रस्थितः। विक्रमादित्य-मृत्योः मातृगुप्तस्य राज्यत्यागवृत्तं चासौ शुश्राव। स्वेदेशवासिने कवये मातृगुप्ताय कल्हणस्य पक्षपातं वीक्ष्य, अस्मिन् वृतान्ते वस्तुतः अस्य पुष्टिर्जायते यत् कस्यचित् वंशजस्याक्रमणेन स राज्यसिंहासनं लोपितवान्।

प्रवरसेन-द्वितीयस्य राज्यवर्णनं विशेषं महत्वं धत्ते। कविः तस्य विजययात्राया विस्तरशो वर्णनं व्यधात्, यस्यामसौ सौराष्ट्रानुत्पाट्य राष्ट्रकूटदेशविपाटनं चकार। सपत्नेननिर्वासितं विक्रमादित्य-तनयं शैलादित्यापरनामानं प्रतापशीलं पुनरपि, पित्र्ये राज्ये चकार[13]। अस्माभिः दृष्टमस्ति यत् ह्यून्सांगवृत्तेन सम्यग् ज्ञायते यदयं मालव-नृपतिः विक्रमादित्यहर्षमनुचकार राज्यसिंहासने तदुत्तराधिकारित्वेन। ह्यून्सांगस्य कल्हणस्य च वर्णने सामंजस्यं वीक्ष्य पुष्टं जायते यत् प्रवरसेनः शैलादित्यस्य समकालीन आसीदिति, कवेः संकेतः यथार्थतामावहति। ह्यून्सांगः प्रत्यपादयत् यत् शैलादित्यः स्वकालात् षष्ठिवर्षाणि पूर्वमभूत्। स च समयः षष्ठशताब्द्या द्वितीयार्धे 580 ख्रीष्टाब्दे प्रतिभाति।

**प्रवरपुर–स्थापना**—उक्ता तिथिः राज्ञा स्वराजधान्यां, प्रवरपुरे प्रवरसेनपुरे वा कृतानां निर्मितीनां कविकृतेन, विस्तृतवर्णनेनापि पुष्टा जायते। इदं हि प्रवरपुरं स्टीनमते श्रीनगरस्य क्षेत्रे निर्मितमभूत्। यद्धि साम्प्रतमपि कश्मीराणां राजधानी अस्ति। पंडितैश्च तत्कृते साम्प्रतमपि क्वचित्प्रवरपुरमिति[14]। चीनदेशस्य तेगवंशस्य इतिहासालोचनेन ज्ञायते यत् अष्टमशताब्द्याः पूर्वभागे श्रीप्रवरपुरं श्रीनगरस्यैव कृते प्रायुज्यत। ह्यून्सांगः काश्मीराणां राजधान्या नामोल्लेखं नाकार्षीत्। किन्तु या स्थितिः क्षेत्रं च तेन वर्णितं तत् तु वर्तमान-श्रीनगरमेव सूचयति। नूतननगरमित्यभिधाय च पुरातननगरात् (पुराणाधिष्ठानात्) तत्, भिन्नं करोति, प्रसिद्धः असौ चीनयात्री। तदिदं स्फुटमस्ति यत् ह्यून्सांगस्य यात्रासमये 631 ख्रीष्टाब्दे प्रवरसेननिर्मिता राज-धानी विद्यमानाभूत्। अनेन च ह्यून्सांगस्य यात्रातिथौ प्रवरसेनस्य च तिथौ सामंजस्यं कर्तुम् शक्यते।

**प्रवरसेनस्य मुद्राः**—प्रवरसेन नामांकिताभिः मुद्राभिरपि उक्तं तथ्यं संपुष्यते। स्वर्णरजत-निर्मितासु तासु काश्चन सम्प्रत्यपि श्रीनगरसंग्रहालये सन्ति मया च काश्मी-

---

(12) 3–263

(13) 3–285, 287, 328, 330

(14) 3–339 से 349 टि.

-स्यात्राप्रसंगे ता दृष्टाः[15]। तासां मुद्राणामाकृतिः एकतस्तु तोरमाणस्य मुद्राभिः सह, अपरतश्च किदारकुषाणानां मुद्राभिः सह सम्बन्धं सूचयति। किदार-(छोटी)-कुषाणाः खलु पंचमशताब्द्यां तदनन्तरं गान्धारेषु सिन्धोश्च पूर्वभागेषु महत्कुषाणानामुत्तराधिकारिणः आसन्। प्रवरसेनस्य मुद्राः काश्मीराणामन्येषां राज्ञां च मुद्राभ्यः असंशययेव प्राचीना वर्तन्ते। तासां नामानि वय कार्कोटवंशप्रसंगे प्राप्स्यामः। प्रवरसेनमुद्रासु कार्कोटराज्ञां च मुद्रासु उल्लिखितः किदारशब्दस्तत्र लघुकुषाणानां मुद्राभ्यः समागतो ननु। अयं च लघुकुषाणवंशस्य संस्थापकेन सम सम्बध्यते। यश्च संस्थापकः चीन-देशस्येतिहासे 'किटोलो' इति निगदितः। अयं सम्बन्धश्चेत् स्वीक्रियते तर्हि प्रवरसेनः, अन्ये च पूर्ववर्तिनः काश्मीर-राजानः, येषां मुद्रासु किदार-शब्दः प्राप्यते, अवश्यमेव लघुकुषाणानां शासकपरिवारेण सह प्राक् सम्बद्धा भविष्यन्तीति निष्कर्षो निर्गच्छति।[16क]

प्रवरपुरस्थापनायाः कल्हणेन कृतं विस्तृतं वर्णनं तत्र चित्रितानि यथार्थ-तथ्यानि च प्रतिपादयन्ति यत् प्रवरसेनस्य राज्यविषये विश्वस्य ऐतिहासिकपरम्पराः कविना संगृहीताः स्वीकृताश्चासन्। नूतनराजधान्या प्रवरेश्वरशिवस्य मन्दिरं कल्हण-काले अपि विद्यमानमभवत् इति कवेः **प्रासादे प्रवरेशस्य सिद्धिक्षेत्रे क्षमापतेः स्वर्गद्वारं प्रतिभटं द्वारमद्यापि लक्ष्यते** । 3-308। इति शब्दैः ज्ञायते। बिल्हणमते प्रवरसेनः तस्मिन्नेव नगरे प्राणान् तत्याज।

**युधिष्ठिरः द्वितीयः**–प्रवरसेनस्य महिष्यां रत्नप्रभादेव्यां जातः युधिष्ठिरः एकोनचत्वारिंशत् समाः मासत्रयं च क्षमां पालयाम्बूभव। सर्वरत्नजयस्कन्दगुप्तप्रभृतिभिः तन्मन्त्रिभिः स्वनामांकिताः विहारचैत्याः विनिर्मिताः। जयेन्द्रतनयः वज्रेन्द्रो नाम तस्य सचिवः चैत्यादिसमलंकृतं भवच्छेदाभिधं ग्रामं व्यदधात्। स्कन्दगुप्तेन निर्मितस्य स्कन्दभवनविहारस्य नामाद्यापि खंडभवन-नाम्ना श्रीनगरे अवशिष्टमस्ति। तदन्तिकमेव प्रवरगुप्तः प्रवरपुरेश्वरं मन्दिरमकार्षीत्।[16ख]

**लखण-नरेन्द्रादित्यः**—युधिष्ठिरस्य भार्यायां पद्मावत्यामुत्पन्नः लखणापर-नामा नरेन्द्रादित्यः नृपतिरभूत्। यो हि नरेन्द्रस्वामिनं विदधौ। अस्य पार्थिवस्य विषये नाधिकं वृत्तं वयं प्राप्नुमः राजतरंगिण्यामन्यत्र वा। किन्तु तस्यैवापरं नाम 'लखण' इति इतिहासदृष्ट्या रुचिकरम्। अभारतीयमिदं नाम एकस्यां एस्थेलाईट-प्रकारायां मुद्रायां प्राप्यते, यत्र राजा लक्खण-उदयादित्य इति उल्लिखितः ननु। सा मुद्रा खिंखिलस्य मुद्रया सह साम्यत्वात् कश्मीरदेशेन सम्बद्धाभविष्यत्। स्टीन-

---

(15) कनिंघमकोइन्स आफ मिडीवियल इण्डिया पृ. 43 तथा टि. एच (4–455)

(16-क) तदेव पृ 27 एवं स्टी. भा. 1 पृ. 85 टि. 30

(16-ख) 3–379 से 381, 6–313 टि.

महोदयस्य मते राजतरंगिण्यामुल्लिखितः लखरण-नरेन्द्रादित्य एवात्मानं "लखरण-उदयादित्य" इत्याह स्वमुद्रायाम् । किन्तु सम्प्रति नास्माकं समंपे नामपरिवर्तनविषये दृढप्रमाणमस्ति । न चेद वक्तुं शक्यते यत् कथमयं एस्थेलाइट-कुमारः राजतरंगिण्याः राजावल्यां खिखिलात् मिहिरकुलात् चातिदूरं स्थानमवाप्तवान् । याभ्यां सममिदं नाम सम्बद्धं प्रतीयते । एतदुल्लेखनीयं यत् कल्हणः खिखिलस्यापि द्वितीयं नाम 'नरेन्द्रादित्य' इति ददाति[17] ।

**रणादित्यः**—नरेन्द्रादित्ये दिवंगते तस्यानुजः रणादित्यः पृथिवीं पुपोष स एव जनैः तुंजीन इत्यभिधीयते स्म । कल्हणेन कृतं तस्य वर्णनमपि विविधाभिरद्भुताभिर्दन्तकथाभिः पूर्णमस्ति । दन्तकथानां नायकवत तच्चरित्रं चित्रितम् । कविः प्राह-शतत्रयवर्षाणिः असौ नृपतिः राज्यमकार्षीत् "एवं स भूपतिर्भुक्त्वा भुव वर्षशतत्रयम्" 3–470 । अस्मिन् दीर्घकाले च घटना विस्मयोत्पादिकाः सन्ति । तस्य राज्ञी रणारम्भा देवी अभिहितास्ति । तस्याः कान्ताकृतिः चरितं च विचित्रोदन्तपूर्णम् विस्तरेणावर्ण्यत । किंच रणादित्यस्य पातालगमनं, विविधमन्दिराणां निर्माणकाले तत्पत्न्या कृतानि अद्भुतकर्माणि चापि विस्तरेण वर्णितानि । किन्तु न तत्रैतिहासिकसत्यता संलक्ष्यते । केषांचित् मन्दिराणामुल्लेखप्रसंगे तु वयं काश्चित् ऐतिहासिकपरम्पराः प्राप्नुमः । रणादित्येन तत्पत्न्या च रणारम्भस्वामि-मन्दिरं, पाशुपतानां निवासाय मठश्च (3–460) कारितम् । अन्यान्यपि भवनानि ताभ्यां कारितानि । आसां निर्मितीनां पृष्ठभूमौ इतिहास-परम्परा काचित् दृश्यते । अन्यत् वर्णनन्तु वृथैव वर्तते इतिहासदृष्ट्या न च तन्महत्वं धत्ते[18] ।

**विक्रमादित्यः**—रणादित्यस्य उत्तराधिकारी तस्य पुत्रः विक्रमादित्यः निगदितः द्वाचत्वारिंशत् वत्सरान् स भुवमपालयत् । तस्य मन्त्री ब्रह्मा ब्रह्ममठं, गलूनश्च स्वपत्न्या नाम्ना विहारमेकं निर्ममे । किन्तु अनयोः मठविहारयोः सत्ता-विषये नान्यत् बाह्यं किंचित् प्रमाणं प्राप्यते । एतन्मात्रमेव विक्रमादित्यविषये कविरलिखत्[19] ।

**बालादित्यः**—अथ तस्य भ्राता बालादित्यः नृपः अभवत् । स हि गोनन्दवंशवंशस्यान्तिमो राजा आसीत् । तस्य च अनंलेखा नाम्नी कन्याभूत् । तां च वीक्ष्य कश्चित् दैवज्ञः राजानुमुवाच त्वमेवान्तिमो राजासि गोनन्दवंशस्य, त्वयि गते ते जामाता नृपति र्भविष्यति । भीतो नृपस्तां कन्यां कस्मैचित् राज्ञे अदत्वा कायस्थाय दुर्लभवर्धनाय ददौ । स तु एतन्न जज्ञौ यत् दुर्लभवर्धनः कार्कोटनागेन सुस्नातायां तन्मातारि जनित इति । स्वसच्चरितैः स राज्ञः स्नेहं सम्मानं चावाप्नोत् । मंत्री खंखः अपि तं प्रति आकर्षितः अभवत् । यं च पश्चात् दुर्लभवर्धनः स्वभार्यया अनंगलेखया समं रहः संगतं ज्ञातवान् ।

---

(17) 3–383 टि., स्टी. भाग 1 पृ. 85, 86

(18) 3–385 से 473

(19) 3–474, 475, 476

बालादित्ये चतुर्भिर्मासैः न्यूनान् सप्तत्रिंशतिमद्वान् राज्यं कृत्वा दिवं प्रयाते खंखः दुर्लभवर्धनं भूपतिं चकार। इत्थं च केन प्रकारेण कश्मीरशासनं गोनन्दान्वयात् कार्कोटवंशे ययौ इति वर्णनमतिरोचकं रोमांचकं चास्ते[20]। दुर्लभवर्धन-विषये लिखिता विस्तृताः कथाः संकेतयन्ति यत् काश्मीरपरम्पराः, इतिहासप्रसिद्धस्य कार्कोटवंशस्य संस्थापकं जग्नुः। दुर्लभवर्धनस्याद्भुतकर्माणि उल्लिख्य कविः तस्योत्थाने तद् विघ्नान् दूरीकर्तुमिच्छति। कार्कोटवंशस्य राज्ञां राज्यं चतुर्थतरंगे विस्तृतं खलु। स्टीनमते अस्य वंशस्य वास्तविकं नाम (काम) इत्यासीत्। यच्च कश्मीरब्राह्मणैः साम्प्रत्यपि प्रयुज्यते[21]। दुर्लभवर्धनस्य राज्यारोहणं गोनन्दवंशस्य अन्तिमराज्ञः पुरुषसन्तत्यभावे बभूव, अन्यैः वा कारणैरिति प्रश्नस्तु न सुकरः समाधातुम्। वस्तुतस्तु बालादित्यस्यापि ऐतिहासिकसत्तायाः प्रमाणाय न क्वापि कापि, मुद्रा लभ्यते, किन्तु तेन तन्मंत्रिभिः, तस्य पत्न्या च निर्मितानि भवनानि धर्मस्थानानि, मन्दिरादीनि च यथार्थपरम्परास्वेवाधृतानि प्रतीयन्ते। कल्हणेन प्रदर्शिता कार्कोट-राज्ञां वशावली ऐतिहासिकमहत्वं दधात्येव[22]।

## चतुर्थतरंगस्य राजानः

**कार्कोटवंशः**—कल्हणस्य कथायां कार्कोटवंशस्य राज्यारोहणं महत्वपूर्णम् स्थानं धत्ते। यतः अस्मात् वंशात् अग्रे वर्णितानां राज्ञां समुदायस्य नामानि मुद्रासु प्राप्यन्ते। यद्वा विदेशीतिहासकाराणां दुर्लभवर्धन-वर्णनैरपि तेषां पुष्टिर्जायते। कार्कोटवंशस्य प्रथमो भूपः दुर्लभवर्धनः खलु, तन्मुद्राः विद्वद्भिरधिगताः[23]। चीनदेशस्येतिहासे अपि तस्योल्लेखो दृश्यते। एकस्मिन् स्थाने तत्र तु-लो-पा इति नामा कश्चिन्नृपः निगदितः अस्ति। यः खलु 627-649 ख्रीष्टाशब्दमध्ये चीनदेशात् काबुलपर्यन्तं मार्गम् वशीचकार। तुलोपा च विदुषां मते दुर्लभवर्धन एवास्ति[24]। इदं प्रतीयते यत् दुर्लभवर्धनस्य षट्विंशत् वर्षाणां राज्यकाले एव ह्यून्सांगस्य यात्रा (631-633) सम्पन्ना। असौ च स्वानुभवान् वर्णयन्नभिदधाति 'लाईफ' इति ग्रन्थे यत् कश्मीरराज्ञा स सम्मानमवाप्तवान्। वर्णनानुसारं अयं पार्थिवः बौद्धभिक्षूणां कृते सम्मानं दधौ[25]।

---

(20) 3-484 से 530

(21) स्टी० रा० भाग 1 पृ० 86

(22) 3-481, 482, 483

(23) 4–8 टि०

(24) कनिंघम कोइंस आफ इंडिया पृ० 38 तथा 4–8 टि०

(25) 4–3

किन्तु कश्मीराणां पवित्रस्थानानि परम्पराश्च वर्णयन्नपि तद्राजनीतिक-दशां न क्वापि वर्णयति यात्री। तस्य वर्णनेन सम्यगनुमीयते यत्तदा अस्माकं देशः शान्तिपूर्णः समृद्धिशाली च आसीत्। ह्यूनसांगः पश्चिमस्य दक्षिणस्य च प्रायेण सर्वानपि प्रदेशान् कश्मीरशासने अपश्यत्। स खलु सिन्धुनदात् पूर्व-दिशि स्थितां तक्षशिलां, उरशाम्, सिंहपुरञ्च लघुभ्यां पर्वतराज्याभ्याम् राजपुरीपर्णोत्साभ्यां समं वर्णयति। उभे अपि राज्ये कश्मीराणां सीम्नि अभूताम्। नासन् तत्र स्वतंत्राः शासकाः[26]। इदं सर्वं वर्णयन्नपि चीनयात्री दुर्लभवर्धनस्य नाम न ददाति[27]।

**प्रतापादित्यः द्वितीयः**—तदनन्तरं दुर्लभवर्धनस्य, अनंगदेव्यां संभूतः दुर्लभको, नाम सुतः वसुमतीं शशास। असावेव कियत् कालानन्तरं 'प्रतापादित्य' इत्याख्यां प्राप। तन्नामापि कश्मीरमुद्रासु लभ्यते, मया चेमाः मुद्राः कश्मीरयात्रायां दृष्टाः। तत्रायं **श्रीप्रताप** इत्युल्लिखितः खलु। तस्य राज्यकालः पंचाशत्वर्षाणामभूत्। किन्तु तस्मिन् दीर्घसमये, प्रतापपुरस्थापनं व्यतिरिच्य, अवशिष्टे कथाभागे तस्य नरेन्द्रप्रभया समं प्रेमकथां विवाह-प्रसंगमेव च कविः विस्तरेण वर्णयति। या हि दैशिकस्य एकस्य वणिजः भार्या अभूत्। तया सह राज्ञः विवाहानन्तरं, सा पुत्रत्रयं प्रासोष्ट। ते च वज्रादित्य-उदयादित्य-ललितादित्य-संज्ञां प्रापुः। उपरि उल्लिखितं प्रतापपुरं सम्प्रति श्रीनगरात् कियत् दूरं '**तापर**' इति नाम्ना ख्यातमस्ति तस्य चावशेषा मया कश्मीरयात्रासमये दृष्टा आसन्[28]।

**चन्द्रापीडः**—दुर्लभके दिवंगते तत्तनयः चन्द्रापीडः सिंहासनमारुरोह। चीनदेशेतिहासे तेहेन-तो-लो-पी-ली इत्याख्येन राज्ञा सह तदभिन्नत्वं साधितं कोविदैः। चन्द्रापीडः 713 ख्रीष्टाब्दे पुनश्च 720 ख्रीष्टाब्दे कश्मीरेषु शासनमकार्षीत्। अप्रतिमा आसीत् तस्य न्यायबुद्धिः, तद्विषये प्रचलिते द्वे कथे अपि प्रचलितपरम्परातः कविना गृहीते। कविः तस्य राज्यकाले त्रिभुवनस्वामिकेशवस्य, प्रकाशिका-विहारस्य, गम्भीरस्वामि-नाम्नः विधायकस्य मूर्तेः, छलितस्वामिनश्चेति मंदिराणां निर्माणस्योल्लेखमपि चकार। नववत्सरान् भुवं प्रशास्य असौ भ्रात्रा तारापीडेनैव अभिचारक्रियया निहतः[29]।

**तारापीडः**—तारापीडः चन्द्रापीडमनुचकार शासने। सः हि चतुर्वर्षाणां क्रूरतापूर्णम् शासनं विधाय ब्राह्मणानामभिचारक्रियया मृत्युं प्राप। अभिचारेण तस्य तत्भ्रातुश्च मृत्युः संभवतः कश्मीरलोकश्रुतौ प्रचलित आसीत् तत एव च कविर्जग्राह।

---

(26) विलोक्यतां सी० यु० की० 136, 143, 147, 163

(27) तुलना क्रियतां 'लाईफ' पृ० 78

(28) 4–7, 8 टि०, 17 से 43

(29) 4–45 टि०, 55, 82, 78, 79 80, 81

अनेन च अभिचारादिषु जनानां विश्वासं तच्चरितं च ज्ञातुं वयमर्हामः[30]।

**ललितादित्यः मुक्तापीडः**—ललितादित्यः तारपीडस्योत्तराधिकारं लेभे। तस्य वर्णनमतीव विस्तृतं विद्यते राजतरंगिण्याम्। इतिहास दृष्ट्या अपि तत् महत्त्वपूर्णं रुचिकरं चास्ते। स खलु महान् वीरशासकः इव उदेति। निजपराक्रमं च कश्मीरेभ्यो बहिः प्रकाशयन् स्वसाम्राज्यं प्रसारयन् दृश्यते। दुर्दैवात् तस्य न कापि मुद्रा प्राप्यते। किन्तु दैवात् दैशिकानां वर्णनानां साक्षिभिः, भवनानां चावशेषैः सर्वातिशायिनः अस्य राज्ञः विषये यथार्थ-तथ्यानि प्राप्यन्ते। कल्हणस्य वर्णनमपि तेषां पुष्टिं करोति[31]।

चीन-देशस्य सम्राजो ह्यूनसांगस्य राज्यकाले(713-775 ख्रीष्टाब्दे) बालिस्तान-स्योपरि च चीनस्य 736–747 ख्रीष्टाब्द-मध्ये कृतस्य प्रथमाक्रमणस्य पश्चात् ललि-तादित्यमुक्तापीडः चीनदेशे स्वदूतं प्रेषितवान्। तंगवंशस्येतिहासे मुक्तापीडः, मु-नो-पी इति नाम्ना कश्मीरनृपो निगदितो ननु। किन्तु तत्र दूतावास-स्थापनायाः निश्चित-तिथेरभावात् कल्हणेन प्रदत्तो 699–713 ख्रीष्टमध्ये ललितादित्यस्य राज्यकाले नहि परिवर्तनं कर्तुं शक्यते। तथापि दूतावासस्थापना, अस्य सम्राजः दैशिकैः सह सम्बन्धे महत्त्वपूर्णम् प्रकाशं पातयति।

**यशोवर्मणः विरोधे प्रस्थानम्**—कविः ललितादित्यं सर्वदा जयशीलरूपे प्रस्तौति। दिग्विजयं चिकीर्षोस्तस्य वयः प्रायेण यात्रास्वेव ययौ। '**जिगीषोः प्रायश-स्तस्य यात्रास्वेव वयो ययौ** 4–131। तत्र च प्रथमं साहसपूर्णम् प्रस्थानं कान्यकुब्ज-नरेशस्य यशोवर्मणः विरोधेऽभूत्। युद्धे प्रवर्तिते यशोवर्मा रणविमुखः सन् सन्धिम-कार्षीत्। सन्धिपत्रे च '**सोऽभूत् सन्धिर्यशोवर्मललितादित्ययोरिति**'4–138। लिखित्वा ललितादित्यस्य गौणत्वं प्रादर्शयत्। ललितादित्यस्य सान्धिविग्रहिकः मित्रवर्मा अनेन लेखेन स्वभर्तुरवमानममंस्त। तेन चोद्वेजितः भूपतिः यशोवर्मनृपं समूलमुदपाटयत्।

अस्मिन् प्रसंगे यशोवर्मणः सभायां भवभूतिः वाक्पतिराजश्चेति कविद्वयस्यो-ल्लेखः[32] महत्त्वपूर्णः अस्ति। वाक्पतिः गौडवाहो-काव्यमलिखत् यत्र स गौडनृपतेः यशोवर्मणः विजयं प्रदर्शितवान्। काव्यं सम्प्रत्यपि प्राप्यते अनेन काव्येन यशोवर्मणः शासनस्य कालस्य च न खलु सूचना प्राप्यते। चीनेतिहासानुसारं, यशोवर्मा **ईचा फोन मो** इत्याख्यात् मध्यभारतस्य शासकादभिन्नः खलु, यः 731 ख्रीष्टाब्दे चीनदेशे दूतं प्रेषितवान्। इदमपि संभाव्यते यत् तंगवृत्तान्तानुसारं ललितादित्यस्य दूतः तिब्बतेन सह युद्धप्रसंगे निजस्वामिनः मित्रत्वेन यस्य मध्यभारतस्य राज्ञः उल्लेखमकार्षीत् स यशोवर्मा अभविष्यत्। इदमनुमानं चेदंगीक्रियेत तर्हि, यशोवर्मणः चीन-देशे दूतावास-

---

(30) 4–124, 94

(31) 4–126 से 131, 132, 4–126 टि०

(32) 4–133, 135, 137 से 140, कविर्वाक्पतिराजश्च भवभूत्यादिसे-वितः 4–144, 134 टि०

स्थापनायाः तिथिं वीक्ष्य, यशोवर्मणा सह ललितादित्यस्य युद्धं तेन च तस्य राज्यापहरणं 736 ख्रीष्टाब्दादनन्तरमजायतेति संभाव्यते[33]।

**ललितादित्यस्य प्रताप-प्रसारः**—अष्टमशताब्द्यां उत्तरपश्चिमभारतस्य अज्ञाता दशा अनुमापयन्ति यत् अस्मिन् समये कश्मीराणां शासकेषु कान्यकुब्जस्य च विस्तृत-प्रदेशेषु कलहा अजायन्त। कान्यकुब्जे ललितादित्यः आक्रमणं चकार तं च विजिग्ये, एतेन च दक्षिणे दक्षिणपूर्वभागे च सम्राजः अधिकारस्य प्रतापप्रसारस्य च कविःसंकेतं ददाति। राज्ञा कृताभिरन्याभिः यात्राभिः सह जालन्धरलोहरयोरुल्लेखः अपि इतिहास-दृष्ट्या महत्त्वपूर्णो विद्यते। तथैव च महत्त्वपूर्णोऽस्ति अकस्मादेव उल्लिखितानां ललितादित्य-राज्य-सभायामुच्चपदासीनानां शाहिराजकुमाराणामुल्लेखः। शाही इत्युपाधिः संभवतः तुरुष्कवंशस्य कस्याश्चित् जातेः आसीत्। या किल काबुल-उपत्यकायां (घाटी इति भाषा) गान्धारेषु च नवमशताब्द्या अवसाने राज्यं चकार। यस्याश्च शाखाः संभवतः सिन्धु-उपत्यकायाम् तत्पूर्वभागस्य च लघुक्षेत्रेषु कृताधिकारा अभूवन्। इतिहासेन ज्ञायते यत् अष्टमशताब्द्याः प्रारम्भात् अरब-जनानामाक्रमणं काबुलदेशं भयभीतं चकार। तस्मिन्नेव काले सिन्धुदेशे यवनानां शक्तिरपि उत्तरदिशां प्रति सततं प्रावर्धत। यद्यपि काबुलगान्धारयोः शाहिशासनमिमान्याक्रमणानि निरस्तानि चकार, तथापि ललितादित्यः सिन्धुदिशि स्वशक्तेः प्रवर्धनायावसरं लेभे[34]। इमे संकेताः प्रतिपादयन्ति यत् ललितादित्यः पंजाबस्य उत्तरभागे पर्वतभागेषु च स्वाधिकारं प्रसारितवान्। ह्यूनसांगस्य यात्रासमये अपि सिन्धोः चिनावनदीं यावत् पर्वतक्षेत्राणि कश्मीराधिकारे एवाभूवन्। यमुनायाः पूर्वभागे प्रसृतं ललितादित्यस्य शासनमेव तस्मै कान्यकुब्जनरेशे साफल्येन विजयं ददौ। तेन च यमुनायाः उत्तरतटात्, कालिकातटं यावत् समस्तः अपि कान्यकुब्ज-प्रदेशः ललितादित्यस्य प्रांगणमिव संजातः[35]।

**ललितादित्यस्य दिग्विजयः**—यशोवर्माणं पराजित्य ललितादित्यः भारतविजयाय प्रतस्थे। **"यशोवर्माणमुल्लंघ्य हिमाद्रिमिव जाह्नवी। सुखेन प्राविशत्तस्य वाहिनी पूर्वसागरम्"**। यशोवर्मणः विजयानन्तरं वर्णिता दिग्विजय-यात्रा कथात्मिका वर्तते। सा च द्वीपात् द्वीपान्तरं यावद्ययौ। पूर्व-दिशि गौडमंडलात् कलिंगाच्च गृहीत्वा पश्चिम-दिशि काठियावाड़कम्बोजौ यावत् सा प्रसृताभूत्। ऐतिहासिक-तथ्यैः रहितायामस्यां यात्रायां वयं परम्परागत-भारतीय-वीराणां दिग्विजय-यात्राणामिव विस्तृतं काव्यात्मकं वर्णनं विलोकयामः। तत्प्रसंगे च उल्लिखितानां प्रदेशानां नगराणां च

---

(33) स्टी॰ भा॰ 1 पृ॰ 89

(34) 4–177, 140 से 146 टि॰, कनिंघम लैटर इण्डिया साईथेनियन पृ॰ 57

(35) स्टी॰ भा॰ 1 पृ॰ 87, 4–145

वर्णनं यथाक्रमं नास्ति। किन्तु यदा नृपतिः सर्वदिशः पराजित्य पुनरपि पूर्वदिशि समायाति तदा कृतं वर्णनं वयं, ऐतिहासिक-पृष्टभूमावावृतमनुभवामः।[36]

**तुःखारश्चंकुणः**—अस्मिन् प्रसंगे वयमुत्तरापथे तुःखाराणां देशं प्राप्नुमः। ललितापराजिताः तुःखाराः स्वतुरङ्गमान् परित्यज्य पर्वतश्रेणिषु पलायितवन्तः। ललितादित्यः तन्नृपं मुम्मुनिं त्रिवारं पराजितवान्।[37] तुःखाराणां देशो मुगलकाले लेखकैः बहुश उल्लिखितः तुःखारिस्तान इत्यस्ति। स एव च बदखशानं इत्यपि अवबोध्यत। अष्टमशताब्द्यां स प्रदेशः तुरुष्कजातेरधिकारे अवर्तत। अस्मादेव प्रदेशात् चंकुणः कश्मीरसभायामाययौ। स चैकं विहारमप्कार्षीत्, परिहासपुरे, यस्यावशेषा मया कश्मीरयात्रायां दृष्टाः। इदं चानुमातुं शक्यते यत् तुःखारश्चंकुणः जन्मना तुरुष्कोऽभविष्यत्। इतिहासदृष्ट्या चंकुणस्य सत्ता नैकप्रमाणैः पुष्टा जायते। कल्हणः तन्निर्मितेनैकेन स्तूपेन समं, वै तस्य विहारद्वयस्यापि स्थापनाया उल्लेमकार्षीत्। एकस्तु विहारः चीनयात्रिणा आ-खोंग (ou-kung) महोदयेनापि दृष्ट आसीत् यो वै 759–763 ख्रीष्टाब्दानां स्वभारत-भ्रमणकाले कश्मीरानपि ददर्श। चंकुणस्य विहारः तन्नामापि च उल्लिखितमभूत्। आ-खोंग (ou-kang) महोदयस्योल्लेखेन ज्ञायते यत् चंकुण इति नाम वस्तुतः चीनस्य (चंकुण) इत्युपाधिरासीत्। चङ्कुण इति संज्ञा च तेन तुःखारमन्त्रिणा स्वदेशे लब्धासीत्। कश्मीरेषु च तदैव तन्नाम स्वीकृतं कोविदैः, कल्हणेनापि।[38]

**तुरुष्केषु विजयः**—इदं प्रतीयते यत् तुरुष्केषु ललितादित्यस्य विजयकथा चिराय कश्मीर-परम्परासु प्रचलितातिष्ठत्। अल्बेरूनी–महोदयस्य लेखानुसारम्, कश्मीर-निवासिनः प्रतिवर्षं निश्चिते दिवसे तुरुष्केषु प्राप्तविजयस्य मुतइ (Mut. E) इत्याख्यस्य राज्ञः स्मृतौ विजयोत्सवमकार्षिषुः। ते हि तं राजानं जगतः सम्राजमाहुः। प्रो. बूल्हर–महोदयः, अल्बेरूनी-महोदयस्य मुत्तई इति नाम मुक्तापीडस्य अपभ्रंशरूपं प्रत्यपादयत्। अल्बेरूनी खलु ललितादित्यस्य दिग्विजय-यात्रां, अनैतिहासिकीममन्यत। किन्तु कल्हणेन प्रतिपादितं वर्णनं, नैकस्थलेषु सर्वथा यथार्थम् प्रतिभाति। स्टीनमते कल्हणेन वर्णिता तुःखार-विजय-यात्रा, तत्र च त्रिवारं पराजितः मुम्मुनिः कस्याश्चित् जातेः नायकः अवर्तत। तस्य च जातिमात्रमेव कल्हणेनोल्लिखितम् **त्रिवारं जित्वा जितं मेने स मुम्मुनिम्**।[39]

**भौट्टैः सह समरः**–तुःखाराणां तुरुष्काणाञ्च विजयानन्तरं ललितादित्यं कविः भौट्टैः सह युध्यन्तं वर्णयति तत्रापि स विजयश्रियं लेभे। किन्तु भौट्टानां निसर्गतः कपिलेषु प्रकृतिपांडुरेषु मुखेषु चिन्ता न स्पष्टं दृष्टिगोचराभवत्। "**चिन्ता न दृष्टा**

(36) 4–146, 147, 148।
(37) 4–166, 167।
(38) 4–211 टि० 215, 8–2411।
(39) 7–126 टि० 4–242 टि० 1–167, 3–332।

**भौट्टानां वक्त्रे प्रकृति-पांडुरे"** । भौट्टेषु ललितादित्यस्य विजयवर्णनमसंशयमेव, ऐतिहासिक-तथ्येषु-आधृतं खलु । तंग-इतिहासे वयं पठामः यत् मु-तो-पी (मुक्तापीडेन) चीनसभायां प्रेषितः मु-ली-रो इति राजदूतः तत्र चीनसभायां, तिब्बत-निवासिषु, भौट्टेषु स्वस्वामिनः विजयस्य बहुशः चर्चां चकार । तिब्बत-वासिनश्च भौट्टा एवाभूवन्, ये खलु सम्प्रति "भूटानीति" कथ्यन्ते । भूटान-राज्ये च ते निवसन्ति । तस्मिन् समये भौट्टाः सशक्तं स्वराज्यं स्थापितवन्तः इत्यत्रापि वर्तन्ते प्रमाणानि । पश्चिमदिशि च आक्रमण-समर्थास्ते समभूवन् अत एव संभवतः मुक्तापीडः भौट्टानां, आगामिनंभयमनुभूय तत्पराजये चीनस्य साहाय्मकार्षीत् । भौट्टानां राज्य-विस्तारेण, चीनस्योत्तरभागा भीता अभवन् ।[40]

**दरदैः सह सम्बन्धः**—ललितादित्यस्य राज्यकाले कश्मीरेषु भौट्टानामाक्रमणस्य चर्चा क्वापि न दृश्यते, किन्तु तेषु अस्य सम्राजः विजय-वर्णनं कल्हणस्योल्लेखेन चीनस्य चेतिहासेनापि यथार्थमेव प्रतिभाति । भौट्टान् पराजित्य ललितादित्यः मधुपायिनः दरदान् दारदान् वा पराजितवान्, तत्पराजयस्य वर्णनं विस्तरशः प्रतिपादितं कल्हणेन । **तस्य प्रतापो दरदां न सेहे** ऽनारतं **मधु** 4–169 । दरदजातिः पूर्वकालादेव कश्मीराणामुत्तरे उत्तरपश्चिमे च स्थितेषु पर्वतीयक्षेत्रेषु न्यवसत् । कश्मीरोपत्यकायाः (घाटी) रक्षायै बहुभिः राजभिरेतेषां दरदां शक्तिभगः कृतः । भौट्टानां दारदानां च विजयानन्तरं यानि राज्यानि कल्हणेन वर्णितानि तानि पौराणिकानि वर्तन्ते, न च तत्र दृश्यते यथार्थता । उत्तरकुरूणां, स्त्रीराज्यं चेत्यादीनामुल्लेखः केवलं कश्मीरिकाणां दन्तकथासु रुचिं प्रदर्शयति । अस्मिन् प्रसंगे काव्य-सौन्दर्यम् सम्यक् दृश्यते ।[11]

**ललितादित्यस्य-भवनानि**:—अथ जयार्जितधनः ललितादित्यः स्वमडलं प्रविवेश । जालन्धरं लोहरं अन्यानि च बहूनि मंडलानि स निजानुजीविभ्यो ददौ । इत्थं तस्य सार्वभौमस्य भूपतेः दिग्विजय-यात्रां वर्णयित्वा कल्हणः तन्निर्मितानि भवनानि वर्णयति । भवनेषु च मन्दिर-प्रासाद-लिंग-मूर्ति-विहार-चैत्यप्रभृतयः आसन् । ये हि राज्ञा स्मृतिचिन्हा इव निर्मिताः । कवेर्लेखानुसारं नासीत् तत्पुरं, ग्रामः सिन्धुः अर्णवः द्वीपो वा कश्चित् यत्र ललितादित्येन काचित् प्रतिष्ठा न कृता । किन्तु कविना वर्णितानां सर्वविध-प्रतिष्ठानां न विद्यन्ते प्रमाणानि । बहूनि च तत्र तथाविधानि भवनानि सन्ति येषां भग्नावशेषाः कोविदैः दृष्टाः, तत्प्रमाण्ये च न संशयः अवशिष्यते, मार्तण्डतीर्थे मार्तण्डमंदिरस्य भव्या अवशेषा अद्यापि सुरक्षिताः सन्ति, सौन्दर्ये कलायां च ते प्रशंसार्हा ननु । ते चावशेषा मयापि कश्मीर-यात्रायां 21-8-67 दिनांके दृष्टाः[42] ते च प्राचीनभारतस्य स्थापत्यकालायाश्चरमोत्कर्षम् द्योतयन्ति ।

---

(40) स्टी० राज० भा० 1 पृ० 91 ।

(41) 1–132 टि० 4–175 ।

(42) 4-176, 177, 181 से 216, 192 टि०

परिहासपुरं स नृपतिः निर्माय तत्र विशाल-मन्दिरादीनां प्रतिष्ठामकार्षीत् । तत्र राजतः परिहासकेशवस्तेन स्थापितः, तत्रैव कांचन-निर्मितः श्रीमुक्ताकेशवः हरिः विरेजे । स्वर्णमयः महावराहस्तत्र शुशुभे । तथा च गोवर्धनधरो देवः, महाशिलायां निर्मितः गरुडः, चतुः शालैः, वृहज्जिनैर्युक्तः राजविहारः, वृहत्बुद्धः, चैत्यः इत्यादयः, समासतः पंच निर्मितयस्तत्रासन् विख्याताः । एतेपु **चैत्यस्य राजविहारस्यावशेषा मया अपि विलोकिताः** । वयं जानीमो यत् कवेः कल्हणस्य जन्मस्थलं परिहासपुरमेवाभवत् अतः एव स सर्व-भवनानि सम्यक् विलोक्य तत्सूक्ष्मचित्रणं चकार । अतस्तेषां मूर्तीनां, भवनानां च सत्तायां न सशय उत्पद्यते । परिहासपुरस्य क्षेत्रं विलोक्य तत्र पदे-पदे प्रसृतान् प्रस्तरान् भवनानामवशेषान् च विलोक्य, भव्यनगरस्य कल्पना स्वत एव संजायते चेतसि । किंच हुष्कपुरस्य उष्करा इति स्थाने ये अवशेषाः सन्ति ते, ललितादित्य-निर्मितस्य विहारस्यैव विद्यन्ते यस्य केवलं आधारमित्तिरेव दृष्टि-पथमायाति । सा च मया दृष्टास्ति[13] ।

**ललितादित्य-समये बौद्धधर्मः**—कल्हणेन वर्णितानि असंख्य-मंदिराणि प्रतिमाश्च ललितादित्य-काले भारतस्य धार्मिकदशां प्रकाशयन्ति । चीन-यात्री आ-खोंग (Ou Kaung) महोदयः (759–773) खीष्टाब्द-मध्ये भारतभ्रमणे कश्मीरानपि ययौ, ललितादित्यमृत्योः कतिपय-वर्षापगमे च तत्र बौद्ध-धर्म-प्रचारं प्राप । बहून् विहारान्, स्तूपान्, चेत्यांश्च स अद्राक्षीत् । कल्हणः अपि विष्णोः प्रतिमाभिः मन्दिरैः समं च ललितादित्य-निर्मितानां विहाराणां स्तूपानां चाप्युल्लेखमकार्षीत् । परिहासपुरे एको महान् विहारः अभवत् यत्र विशाला बुद्धप्रतिमाप्यभूत् । सा च कल्हण-समये अपि व्यराजत। हुष्कपुरे अपि ललितादित्यो विहारमेकमकारयत् । अयं द्वितीयो विहारः एव संभवतः ओ-खोंग-महोदयस्य प्रथमं विश्राम-स्थलमभवत् । ललितादित्यस्यान्यैरप्युच्चाधिकारिभिः बौद्धानां कृते केचिन्नर्माणाः कृताः । लाटः कय्याभिधः कय्यविहारं, चंकुणः चंकुण-विहारं, वृहत्स्तूपमयान् जिनांश्च, ईशानचन्द्राख्यः चंकुणश्यालः, अपि-विहारमेकं विनिर्ममे । चंकुणः स्वयमपि अधिष्ठानान्तरे एकमन्यं सचैत्यं विहारं चकार । इदमखिलं प्रतिपादयति यत् ललितादित्यकाले भारते बौद्धधर्मस्य प्रचार आसीत्[14] ।

**लोककथासु ललितादित्यः**—भारतेतिहासे लब्धगौरवः ललितादित्यः लोककथास्वपि स्थानं प्राप, तस्मिन् विषये प्रचलितासु कथासु कासांचिदुल्लेखः कविनापि कृतः । ताश्च तस्य सम्राजः अलौकिकत्वं प्रतिपादयन्ति । कश्मीराणामनेका दन्तकथा अनेन सह सम्बद्धा आसन् । एका कथा राज्ञः दिग्विजय-यात्रां बालुकासमुद्रेण समं सम्बद्धां करोति । एका अद्भुत-प्रकारेण जलोत्पत्तेः कथापि कल्हणेन तत्सम्बद्धा

---

(43) 4-194 से 208 स्ठी० भा० 1 पृ० 92

(44) स्टी० भा० 1 पृ० 91, 92, 4-200, 203, 188, 210 से 216

प्रदर्शिता। सिकतासिन्धोरियं कथा अल्बेरूनी-महोदयेन कनिष्कप्रसंगे उल्लिखितया कथया सह साम्यतां घत्ते, इदं च मध्य-एशिया-द्वीपस्य मरुस्थलमिंगितयति। ललितादित्येन, प्राचीन-राजधान्याः प्रवरपुरस्य अग्निसात्करणस्य, गौडदेशीयैश्च परिहासपुरे रामस्वामि-प्रतिमायाः भेदनस्य कथादयः संभवतः नाविकं प्रचलिताभ्यो लोककथाभ्यो एव गृहीताः सन्ति।[45]

**ललितादित्यस्य स्वर्गारोहणम्**— ललितादित्यस्य मृत्यु-विषये अपि नैकाः कथाः प्रचलिता आसन्। केचित्, अकांडनिपातिभिः तुषारवर्षैः आर्याणदेशे तं विपन्नमाहुः। अपरे तु चिरसंचितां राजप्रतिष्ठां रक्षितुं संकटापन्नः स दहनं प्राविशत् इत्यूचुः। इतरे तु उत्तरापथे सिकतासिन्धौ सकटकः स शान्तिं लेभे इत्यवदन्। इत्थं राज्ञः मृत्यु-विषये अपि जनानां कथानां च मतभेदा वर्तन्ते। अत्र विषये प्रायेण विदुषामेकमत-मस्ति यत् उत्तरापथे यात्राप्रसंगे क्वचिन्नृपतिरसौ मृत्युं प्राप।[46], [47] तस्यावसानात् पूर्वम् कविः तन्मुखेन कांश्चित् बहुमूल्यान् राजनीतिक-विचारनुच्चारयति। अनेन व्याजेन च कल्हणः स्वीये समये प्रचलितां राजनीतिं प्रदर्शयितुकामः अवर्तत, ललितादित्यस्य निजोत्तराधिकारिणां मार्गदर्शनाय प्रकाशिता विचाराश्चिरं भारत-राजनीतौ प्रचलिता अतिष्ठन्।

**कुवलयापीडः**— ललितादित्ये स्वर्गं गते तस्य ज्येष्ठस्तनयः कुवलयापीडः कुवलयेशतां भेजे। किन्तु स्वभ्रातरं सचिवांश्च शासनोल्लंघनतत्परान् वीक्ष्य, पूर्वन्तु तान् हन्तुमुद्यतः बभूव, ततश्च राज्यं विहाय विरक्तो भूत्वा वनं ययौ सिद्धिं च प्राप।[48]

**वज्रादित्यः वप्पियो वा**–अथ तदनुजः वज्रादित्यः सिंहासनमारुरोह। निसर्गतः स दुराचारः क्रोधी, प्रजापीडकश्चाभूत् जनाल्हादकारिणः भ्रातुश्च विसदृशः अभवत्। सप्ताब्दान् वसुधां भुक्त्वासौ पार्थिवः अतिसंभोग-जन्मना क्षयरोगेण पीडितः क्षयं ययौ।[49]

**पृथिव्यापीडः, संग्रामपीडः प्रथमः**—तदनन्तरं राज्यशासने पूर्वम् पृथिव्यापीडः ततश्च संग्रामपीडः वज्रादित्यमनुचकार। प्रजानामन्तकः प्रथमस्तु समासं चतुरः समाः राज्यं कृत्वा दिवं ययौ। अथ संग्रामपीडः केवलं सप्तवासरान् राज्यं चकार।[50] कुवलयादित्य-प्रभृतीनां राज्ञां, बाह्यसाक्षिभिः सत्ता न प्रमाणिता भवति नापि कस्यचित् मुद्रा प्राप्यते। तेषां च अल्पशासनं वर्णयित्वा कल्हणः वज्रादित्यसूनोः विस्तृतं शक्तिशालि च शासनं वर्णयति। असावपि स्वपितामह-ललितादित्यवत् नैकदन्तकथानां नायकः अभवत्। तद्विषये प्रचलिताः लघुकथास्तथा विचित्राः सन्ति यत् स अपि मेघवाहन-रणादित्य-प्रभृतिवत् पौराणिकः नृपः कल्पयितुं शक्यते। किन्तु दैवात् कोविदैः प्राप्तास्तन्मुद्राः तदैतिहासिक-सत्तां संपोषयन्ति। जयापीडस्यापरं नाम विनया-

---

(45) 4-219 से 309, स्टी. भा. 1 पृ. 93।

(46) 4-366 से 369। (47) 4-344 से 353।

(48) 4-372, 387, 392। (49) 4-393 से 398।

(50) 4-399-400।

दित्य इत्यभवत् तच्च-कार्कोट-प्रकारस्य मिश्रित-धातूनां मुद्रासु प्राप्नुमः। राज्ञो मुद्रा अद्यापि कश्मीरप्रदेशे श्रीनगर-संग्रहालये सुरक्षिताः सन्ति।[51]

**जयापीडस्य यात्राः**—नृपासनमारुह्य पितामहतुल्यां कीर्तिम् प्राप्तुकामो जिगीषुः नृपतिः संभृतबलः दिग्जयाय प्रतस्थे। कश्मीर-द्वारेषु निर्गच्छतस्तस्य सैन्ये, वृद्धैः कर्णीरथानां (पालकी इति भाषा) अशीतिः सहस्राणि गणितानि। ससैन्यं दूरप्रयातस्य तस्य जज्जामिधः श्यालः द्रोहेणाक्रम्य कश्मीरसिंहासनं वशीचकार। **द्रोहेणाक्रम्य कश्मीरान् स्वयं भेजे नृपासनम्**। 4–410।

स्वामिभक्तिपराङ्मुखाः राजसैनिकाः मध्ये एव जयापीडं विसृज्य कश्मीरेष्वा-ययुः तच्चावलोक्यापि, अभंगुरोत्साहः स परिमेयैः बलैः समं प्रयागमगमत्। ब्राह्म-णेभ्यः अश्वानामेकोनलक्षं दक्षिणायां ददौ। एकस्यां निशि केनचिदाप्तमुखेन सैन्ये-भ्यः स्वदेशगमनानुज्ञां दत्त्वा प्रच्छन्नरूपे एकाकी कटकान्तरान्निर्ययौ। अथ क्रमेण गौडदेशस्य पौण्ड्रवर्धनं नाम नगरं (राजधानीं) प्रविवेश। तत्र चैकं नरघातकं सिंहं हत्वा स गौडनृपतेः ध्यानमाकर्षितमकार्षीत्। राजा स्वतनयां कल्याणदेवीं च तस्मै ददौ। अथ जयापीडस्तत्र पंचगौडनृपान् पराजिग्ये। अथ प्रभुत्ययतं सैन्यमादाय, राजभक्तो देवशर्मापि तदन्तिकमाययौ तदनुकृतश्च जयापीडः कश्मीरान् प्रतस्थे। मार्गे स कान्यकुब्जेश्वरं पराजित्य तस्य राज्य-ककुदं जहार। कश्मीरोपत्यकां प्रविश्य च, शुष्कलेत्राभिधे ग्रामे विद्रोहिणं जज्जं, विजित्य निहत्य च विलुप्तां राजश्रियमा-लिलिंग।[52]

प्रयाग-निवास-प्रसंगे कविः जयापीडस्य नर्तक्याश्च रोमांचिकां कथामेकामलि-खत्। किन्तु अन्येषां स्रोतसामभावे तस्याः प्रामाण्ये संशयो वर्तते। इदं तावत् विद्वत्सु इतिहासे च प्रसिद्धं यत् राज्यस्य पूर्वभागे जयापीडः विदेशेषु आक्रमणोद्यतः कियत्का-लाय स्वशासनं विलुप्तवान्।[53]

**जयापीड राज्यस्यैतिहासिक-तथ्यानि**—कवेः वक्तव्यानुसारं जयापीडस्योत्तर-कालीनं राज्यं 751–782 वर्षाणां मध्ये स्थिरीभवति। किन्तु तद्धि विदुषां मते अष्टमशताब्द्या अवसान-कालस्याधिकमन्तिकमस्ति। राज्ञः राज्य-प्रसंगे बहूनि इतिहास-तत्त्वानि संगृहीतानि कविना, साहित्यस्य इतिहास-दृष्ट्या अतिशय-महत्त्वपूर्णम् विद्यते तद्राज्यं, जयापीड-सभायां विद्यमानानां क्षीर-भट्टोभ्दट्ट-प्रमुखानां विदुषाम्, कवीनां लेखकानां विविध-विद्यानां चोल्लेखाः सन्ति क्षीराभिधः शब्द-विद्या-पंडितः, साहित्य-शास्त्रस्याचार्यः भट्टोद्भट्टः भूपतेः सभापतिः अभूत्। कुट्टिनीमतकारिणं दामोदरगुप्तं भूपः धीसचिवं चकार। मनोरथ-शंखदत्त-चटक-संधिमान-प्रभृतयः कवयः, रीति-सम्प्रदायस्य प्रवर्तकः वामनश्च तस्य मन्त्रिणः अभूवन्। नरपतेस्तस्य निर्मितिषु जयपुर-

---

(51) 4–402, 517। (52) 4–403 से 481।
(53) 4–482, 4–422 से 467।

नगरस्य स्थापना अत्यन्तं महत्त्वपूर्णा ननु। पञ्चासौ अगाधमेकं सरः संपूर्य समस्थापयत्। जयपुरमेव तस्य राजधानी अभूत्। तस्य प्रतिष्ठायां यथार्थतायां सत्यामपि, तत्स्थापनायाः कथा पौराणिक-कथाभिरिव संयुक्ता प्रतीयते। संभवतः कल्हणः प्रत्यक्षमप्रत्यक्षं वा प्रचलित-परम्पराभ्य एव जयपुरस्थापनोदन्तं जग्राह।[54]

**जयापीडस्य जययात्राः**—अथ भूयः अपि राज्यं नवीकृत्य जयापीडः दिग्विजयाय प्रतस्थे (दिग्जयाय विनिर्ययौ) अस्मिन् विजयोद्यमे पूर्वदिक्पतेः भीमसेनस्य-कारायां ततश्च नेपालनरेशस्य आरमुडि इत्यस्य कारागारे असौ निपतितः। अत्र विषये च लिखिताः कथाः, राज्ञः मुक्ति-विषय-प्रसंगश्च कथात्मकः दृश्यते। न तत्रैतिहासिकं वृत्तमस्ति। उभावपि भीमसेन-अरमुडि-नृपौ भारतेहिासे अज्ञातौ स्तः। ताभ्यां च जयापीडस्य छलेन मुक्तेः कथा स्टीनमते दन्तकथाभ्य एव गृहीता। प्रसंगवशाच्च तेन विजितं स्त्री-राज्यं, वर्णितं कविना। पद्मनाम्नो नागेन्द्रस्य कथा चापि दन्तकथाश्रितास्ति। राज्ञः कृपया मन्त्रिकात् संरक्षितेन नागेन्द्रेण प्रदर्शितस्य ताम्रगिरेः उल्लेखः जोनराजस्य काले क्रमराज्ये प्राप्यते।[55]

**जयापीडस्यावसानम्**—राज्यशासनस्य उत्तरकाले जयापीडः पैतामहीं सरणिं परित्यज्य पितृवत् क्रूरचरितः सन् कायस्थैः प्रेरितश्च स्वमंडलमदण्डयत् क्रूराचारैः। लोभवशंवदस्य कौर्यमाचरतस्तस्य वर्षत्रयं ययौ। विशेषतस्तु स ब्राह्मणवर्गे स्वात्याचार-प्रकर्षम् प्रसारयामास। अत एव तद्विषये लिखितेषु स्तुतिकाव्येषु चापि परिवर्तनं संजातम्। सा च परिवर्तन-सूचना संभवतः कल्हणेन जनश्रुतेः गृहीता। राज्ञः अत्याचारत्रस्ताः द्विजाः प्रायोपवेशोद्यता अजायन्त। भूपेन तर्जितेषु द्विजेष्वेकेन कुपितेन ब्रह्मतेजोनिधिना ब्रह्मदंडस्तस्मिन् निपातितः। राजा च मृत्युमालिलिंग। अस्मिन् प्रसंगे कृतं वर्णनमतीव हृदयावर्जकं नाटकीयं चास्ते। कवेः शैली भाषा च संकेतयति यत् राज्ञः निपातस्योक्ता कथा जनश्रुतावाश्रिता अवर्तत।[56]

**ललितापीडः**—जयापीडस्य देव्यां दुर्गायामुत्पन्नः ललितापीडस्ततो वसुमतीपतिरभवत्। स वै रागान्धः, वेश्यागामी, दुर्नयः, दुर्वृत्तश्च वर्णितः। दोषपूर्णमासीत्तस्य जीवनम्। द्वादशाब्दान् स भुवं शशास। अस्य राज्ञः, अग्रे च वर्ण्यमानस्य कार्कोटराज्ञः मुद्रा वयं न प्राप्नुमः।[57]

**संग्रामीड द्वितीयः**—ललितापीडः स्वभ्रात्रा पृथिव्यापीड-इत्यपरनाम्ना संग्रामपीडेन राज्यासने अनुकृतः। सप्तभिः, वर्षैस्तद्राज्यकालः समाप्तिं ययौ।[58]

---

(54) स्टी. भा. 1 पृ. 94, 4–386 से 511–506 से 511 टि.।

(55) 4–514 स्टी. भा. 1 पृ. 94, 95, 4–519, 31, 44, 87, 88, 92, 93, 615,16।

(56) 4–620, 21, 28 से 39, 4–640 से 656।

(57) 4–660 से 673। (58) 4–674, 675।

**चिप्पयमीडः**—अथ ललितापीडजः वृहस्यत्यपरनामा शिशुः चिप्पयपीडः राजासनं प्राप। तस्य च बाल्यत्वात् राज्यशक्तिः पद्मोत्पल-कल्याण-मम्म-धर्माणां-मातुलानां हस्ते अवर्तत। द्वादश-वर्षाणि राज्यं कुर्वन् चिप्पयपीडः 813 वर्षे स्वमातुलैर्निहतः। अस्य तिथि-विषये राजानक-रत्नाकरस्य काव्येन हरविजयेन ज्ञातुं शक्यते। स तत्रालिखत् यत् स्वकाव्यं तरुणभूभृतः वृहस्पतेः संरक्षकत्वे लिलेख। कल्हणालेखानुसारं च रत्नाकरः अवन्तिवर्मणः राज्ये (855–863) खीष्टाब्दमध्ये, यशः प्राप्तवान्। अतः हरविजयस्य वृहस्पतिरेव कल्हणस्य चिप्पयपीडः अस्ति। प्रो० बूल्हर महोदयः वृहस्पतेः तिथौ संशोधनं चिकीर्षति। तन्मते वृहस्पतेः राज्यकालः 801। 2–813। 4 खीष्टाब्दे. अवन्तिवर्मणः राज्यकालात् पंचाशतवर्षाणि पूर्वम् संतिष्ठते। एवञ्च रत्नाकरः वृहस्पतेः अवन्तिवर्मणो वा राज्ये न भवितुमर्हति। अत्र समाधानं कर्तुम् शक्यते, यदि वयं वृहस्पतेः राज्यकाले पंचविंशतिवत्सराणां संशोधनम् स्वीकुर्याम। तत् संशोधनं चीनस्येतिवृत्तेन प्रमाणीभवति। तदनुसारं तत्कालश्च 826–828 खीष्टाब्देः सिद्ध्यति। तदा च वृहस्पतेः राज्ये रत्नाकरस्थितिः स्पष्टा जायते।[59]

**अजितपीडः**—कल्हणः नूतनस्य राज्ञः बप्पियभूपतेः ज्येष्ठतनयस्य अजितपीडस्य, राज्यकालमुल्लिखन् वृहस्पतेः, उक्तं राज्यकालं पुष्टीकुर्वन्निव प्रतिभाति। सैन्य-बलेन सिंहासनं प्राप्यापि, नाम्ना एवासौ राजाभूत्। 850।1 खीष्टाब्दं यावत् स राज्यमकार्षीत्, एतस्मिन् काले वस्तुतः सत्ता वृहस्पतेः मातुलानां करे एव अवर्तत। अजितपीडस्य सप्तत्रिंशत् वर्षाणां दीर्घः राज्यकालः, वास्तविकशासकानां पद्मस्य तत्भ्रातृणां च द्वेषस्य कारणात् समजायत। अजितपीडस्य राज्यावसान-समये वयं मम्ममुत्पलं च परस्परं युध्यन्तं प्राप्नुमः। अथ मम्मोत्पलयोरुदभूद्दारुणो रणः 4–704। तस्मिन् युद्धे च मम्मः विजयी बभूव। अजितपीडश्च राज्याद् पातितः, स्टीनमहोदयः अत्राभिदधाति यदन्येषां नृपाणां अल्पं राज्यं, अल्पमायुष्यं च वीक्ष्येदं संभवं न प्रतिभाति यत् वृहस्पतेः राज्य अपि 801।2 खीष्टाब्दे कृताधिकाराः मम्मोत्पलप्रभृतयः पंचाशत-वर्षानन्तरं परस्परं भीष्णमाहवं कर्तुम् समर्था अभविष्यन्। इदं प्रतीयते यत् वृहस्पतेः राज्यं वस्तुतः नवमशताब्द्याः मध्यकालान्तिके निपतितम्। येन च कार्कोटवंशपतनस्य, उत्पल-वंशोद्‌वस्य च घटनाः दृष्टाः। कविः अजितपीडकाले उत्पलादीनां शक्तिं वैभवं च तत्कृताभिः स्थापनाभिः प्रदर्शयति। उत्पलः उत्पलस्वामिनं, उत्पलपुरं च, पद्मः पद्मस्वामिनं मन्दिरं, पद्मपुरं च, धर्मः धर्मस्वामिनं, कल्याणश्च कल्याणस्वामिकेशवं, मम्मस्तु मम्मस्वामिनं मन्दिरं निर्ममे। एतासु निर्मितिषु पद्मोत्पलयोः निर्मितयोः नगरयोश्च चिन्हानि विद्वद्भिः प्राप्तानि सन्ति। पद्मपुरमेव सम्प्रति श्रीनगरसमीपे पाम्पुर इति ग्रामः विद्यते स च मया दृष्टः आसीत् कश्मीरयात्रा-प्रसंगे।[60]

---

(59) 4–676, 679 से 687 स्टी. भा. 1 पृ. 96।

(60) 4–69, 90, 703, 4, 6 स्टी. भा. 1 पृ. 96, 4–695, 97, 98, 99, 96।

**अनंगापीडः–उत्पलापीडश्च**— अजितपीड-राज्यस्यावसानं मम्मोत्पलयोः युद्धेनाजायत । यत्र विजयं प्राप्य मम्मः संग्रामपीडसंभवमनंगापीडं नृपतिं चकार । तस्मिन् च वर्षत्रयान्तरं प्रलयंगते तत्तनयः मम्मोत्कर्षासहिष्णुः सुखवर्मा अजितापीडतनयं उत्पलापीडं नृपमकरोत् । शनैः शनैः कार्कोटवंश्यानां क्षीणप्रायमभवत् कुलं, वंशश्चोत्पलकुलानां त्वरया वृद्धिमाययौ । अथ सामर्थ्यातिशयात् पार्थिवत्वं प्राप्तः सुखवर्मापि, स्वबन्धुना शुष्केन 855।6 खीष्टाब्दे व्यापाद्यत । मृते च तस्मिन् शूराभिधः मन्त्री उत्पलापीडमुत्पाट्य सुखवर्मात्मजाय अवन्तिवर्मणे राज्यभारं ददौ ।[61]

## पंचम–षष्ठ–तरंगस्य नृपतयः

**अवन्तिवर्मा**—855/7-883 अवन्तिवर्मणः राज्याभिषेकेन समं वयं भारतेतिहासस्य तस्मिन् काले प्रविशामः यत्कृते कल्हणकृतिः यथार्थानि इतिहासवृत्तानि ददाति । पंचमतरंगस्यारम्भात्, अष्टम-तरंगपर्यन्तं समकालीन-घटनानां प्रयोगः स्पष्टं दृष्टिपथमायाति । तत्र च वर्णितमितिवृत्तं न केवलं राजतरंगिण्याः वर्णन-प्रकारेण सत्यं प्रतिभाति किन्तु बाह्यसाक्षिभिरपि तद्यथार्थता सिद्ध्यति । अवन्तिवर्मा प्रारब्धायाः राज्ञां नूतनवंशाल्याः प्रथमो नायको वर्तते यस्य मृत्योः वत्सरो मासो दिवसश्च प्रदर्शितो ननु कविना । इदन्तावत् प्रतीयते यत् उत्पलवंशस्य उद्भवानन्तरं कल्हणस्य स्रोतस्सु समकालीनेतिहासस्य तथ्यानि अन्तः प्रविष्टान्यासन् । अवन्तिवर्मणः राज्यकाले पूर्वराज्ञां दुष्कृतैः, विद्रोहिणां चोपद्रवैः ग्रस्त, त्रस्तः, अवनतिपथं गतः अशान्तो देशः राजनीतिक-आर्थिक-सामाजिक-दृष्ट्या पुनः समृद्धिं प्राप । सम्पूर्णे अपि कश्मीरप्रदेशे अवन्तिवर्मा शशासेति वयमसंशयमेव न ज्ञातुं. नापि वक्तुं पारयामः । किन्तु तस्य विजययात्रा-प्रसंगे संकेतं प्राप्नुमो यत् दार्वाभिसार-प्रभृतयः पर्वतीय-भागाः पूर्वराज्ञां दुर्बलशासनात्, कश्मीरेभ्यः स्वतन्त्रा अभूवन् । अवन्तिवर्मसमये ते स्वतंत्रसत्तां दधुः । तथाप्यस्मिन् काले वयं आन्तरिकस्थितेः सुदृढतया सुधारस्य च बहूनि प्रमाणानि प्राप्नुमः । अनेकेषां मन्दिराणां, भवनानां, निर्मितीनां, राज्ञः आधिपत्ये निर्माणं वीक्ष्य सम्यक् तत् स्फुटीभवति । एतासु निर्मितिषु अवन्तिपुरं इदानीमपि राज्ञः नाम धत्ते, तत्र च राज्ञा निर्मितानि, मन्दिराणि उल्लेखनीयानि वर्तन्ते । तेषां भव्यावशेषाः, प्राचीनभारस्य कलायाः अद्यापि द्योतकाः सन्ति । इदं नगरं मया विलोकितं कश्मीर-यात्रायाम्[1] ।

**मन्त्री शूरः**—अवन्तिवर्मणः परमभक्तः मन्त्री शूरः तद्राज्ये अतिशय-प्रतिष्ठां प्राप । सः अपि स्वस्वामिवत् नैकप्रतिष्ठाः चकार । स हि शूरपुरं नगरं स्थापितवान् यद्धि अद्य हुरपोर इति नाम्ना ख्यातमस्ति । लोहर-प्रदेशस्य भूतेश्वरतीर्थे धन्याख्यस्य डामरस्य शूरेण घोषितः मृत्युदण्डः यथार्थो वर्तते । एतेन च अमात्यस्य तस्य प्रभावातिशयः अपि ज्ञायते । कल्हण-समये च प्राप्त-प्रभावाणां डामराणापि प्रथमदर्शनं

---

(61) 4-704, 7, 9, 13, 14, 15 ।

(1) 4-712 स्टी. भा. 1 पृ. 99, 100, 5-23 से 31, 37 से 46 ।

भवति । अवन्तिवर्मणः उपद्रवहीने शान्ते राज्ये अनेकेषां विद्वत्प्रवराणामुल्लेखः कल्हणेन कृतः । तेषु च कविः रत्नाकरः आचार्यः आनन्दवर्धनश्चोल्लेखनीयो ननु । रत्नाकर-निर्मितं हरविजयमहाकाव्यं संस्कृतसाहित्ये प्रसिद्धमेव । आनन्दवर्धनस्य च ध्वन्यालोकः साहित्यशास्त्रे मूर्धन्यो नाम, स हि देवीशतकं काव्यमपि लिलेख । उभयोरपि कृतयः संस्कृत-साहित्ये महत्त्वपूर्णस्थानं दधते ।[2]

**आर्थिकोन्नतिः** –अवन्तिवर्मणो राज्यकाले वयं समृद्धं भारतं पश्यामः । पूर्वन्तु कल्हणः राज्ञः शासने कश्मीरोपत्यकायाः सिंचन-व्यवस्थायै कृतानि यन्त्र-कार्याणि (इंजीनियरिंग) उल्लेख । तानि कार्याणि राज्ञः, कुशलस्य सुय्य इति यन्त्र-कारस्य नाम्ना सम्बद्धानि वर्तन्ते । यो हि स्वप्रज्ञया नूतनाविष्कारान् चकार । कार्याणां प्रसगे एव प्रदत्तं मानचित्र-सम्बन्धिवर्णनम् अतीव रोचकं विद्यते । सुय्यकृताः-नामद्भुतकार्याणामुल्लेखो महत्त्वपूर्णो वरीवर्ति । चतुरेण यन्त्रकारेण अत्यन्त-विस्तृतस्य वितस्ताप्रवाह-मार्गस्य संकोचं विधाय, तस्याः, प्रवाहदिशि परिवर्तनं च विधाय कृषिनाशकस्य जालौघस्य भयं निवारितम् । जलौघभयोत्पादकेषु स्थानेषु नदीतलस्य निर्माणं सर्वाधिकमुल्लेखयोग्यमस्ति। इत्थमेव च सुय्येन बुद्धिबलेन-वितस्तायाः सिन्धोश्च संगमस्थले अपि परिवर्तनं विहितम् । सर्वकाले भूमि-सिंचनं सुकरं विधातुं सुय्यः शैलमयं सेतुं बबन्ध । येन च वितस्तायाः जल नियन्त्रितम्, ततश्च अनेका कुल्यास्तेन निष्कासिताः । सुय्यस्य यन्त्रकार्याणां परिणामेन, अधिका कृषि-योग्या भूमिरवाप्यत अन्नोत्पादने चापि महती वृद्धिः समजनि । दुर्भिक्षाणां जलप्रलयानां च भयमपि निर्ययौ । सिंचन-साधनानां वृद्ध्या धान्योत्पादने अतिवृद्धिरभूत् । येन धान्यमूल्यं न्यूनतामलभत । सुय्यस्य निर्माणेभ्यः पूर्वम् धान्यखारेः मूल्यं शतद्वयं दीन्नारा अभवत्, तच्च केवलं षट्त्रिंशत् दीन्ननारा अजायत । इत्थं च देशवैभवे समृद्धिः समजायत। परिणामे च प्रजानां जीवनं सुखमयं बभूव। यद्यपि सुय्यविषये लिखिता दीर्घकथा बाह्यस्रोतभ्यः प्रमाणिता न भवति तथापि तत्सत्यातायां संशयो न वर्तते । कल्हणस्य स्वाभाविकं वर्णन कस्याश्चित् विख्यातपरम्परायाः स्रोतसः सकेतं करोति। वितस्तासिन्धुसंगमे कृतं परिवर्तनं वितस्तायाः प्रवाहस्य च परिवर्तनं विद्वद्भिः दृष्टम् । सुय्यः नगरमप्येकं निर्ममे सुय्यपुर इति तदेव सम्प्रति सोपुर इति ख्यातं ननु। महापद्म–सरोवरस्य (सम्प्रति बूलर लेक) तटे तन्नगरं निर्मितमासीत् । इदं नगरं, परिहासपुर-समीपे च वितस्तायाः प्रवाहे परिवर्तनं मयापि दृष्टम् कश्मीर-यात्रायाम् ।[3]

**शंकरवर्मा** :—(883–902 ख्री०) जीवनस्य चरमे भागे रोगग्रस्तः अवन्तिवर्मा प्राण-परित्यागाय त्रिपुरेश्वरक्षेत्रं ययौ स्ववैष्णवत्वं च प्रकटीकृत्य आषाढशुक्लपक्षस्य तृतीयायां स एकोनषष्ठे वर्षे प्राणान् तत्याज । अथ तस्मिन् प्रशान्ते अनेकेषां चेतसि राज्येच्छा समजनि । अथ कर्णपो नाम महामात्यः सुखवर्मणस्तनूजं यौवराज्ये

---

(2) 5–32 से 36 ।

(3) 5-68 से 121-109 से 112 टि० भा० 1 पृ. 98 ।

अभ्यषेचयत् । अतः तस्य, राज्यस्य उत्तराधिकारिणः शंकरवर्मणश्च वैरं प्रावर्धत । शंकरवर्मा कथंचित् तं युवराजं सुखवर्माणं निर्जित्य सिंहासनमारुरोह । अथ दायादान् पराजित्य, लक्ष्मीं च लब्ध्वा जिष्णुः क्षितीशः शंकरवर्मा दिग्जयाय प्रतस्थे । तस्मिन् समये देशः जन-धन-दृष्ट्या क्षीण आसीत् तथापि तत्सैन्ये पत्तीनां नवलक्षं कश्मीर-द्वारान्निष्क्रान्तं तस्य विजयोद्यमः, कश्मीराणां दक्षिणभागस्य पर्वतप्रदेशेष्वेव सीमितो नासीत् । तस्य विजय-प्रसंगे दार्वाभिसारस्य विजयः उल्लेखनीयो ननु । अयं प्रदेशः पश्चात् वर्तिनां कार्कोट-वंश्यानां राज्यकाले कश्मीरेभ्यः पृथक् अजायत । शंकरवर्मा पुनस्तं विजितवान् । विजयव्यग्रं तमायान्तमाकर्ण्य त्रिगर्तनरेशः पृथ्वीचन्द्रः प्रणतिं विधातुं तदभ्यर्णमगमत् । किन्तु बन्धनभीतः पलायांचक्रे । सिन्धु-मार्गेण गच्छन् नरपतिः शंकरवर्मा, रावीनद्याः पूर्वस्य पर्वतेभ्यः धनादि-संचयमपि कृतवानिति संभावना न दृश्यते । अपि च त्रिगर्तै (सम्प्रति कांगडा-प्रदेशे) यैः राजभिः राज्यं कृतं तन्नामावल्यां पृथ्वीचन्द्रस्य नाम न दृश्यते । शंकरवर्मणः प्रधानं भीषणं च युद्धं गुर्जरनरेशेन अलखानेन सममभूत् । दार्वाभिसारस्य दक्षिणभागे गुर्जरस्य स्थितिरासीत् । अलखानः टक्कदेशं शंकरवर्मणे दत्त्वा स्व-मंडलं ररक्ष । गुर्जरनरेशं पराजित्य अवन्तिवर्मसुतः भोजं पराजितवानिति सूचना कल्हणेन दत्ता किन्तु अस्मिन् विषये विदुषां चेतस्सु संशयो वर्तते । अनेन भोजेन सह कान्यकुब्जस्य भोजस्य, कृता तुलना साम्प्रतं यावन्न प्रमाणितास्ति ।[4]

**उद्भाण्डस्य शाहिः लल्लिय** :—राज्ञः अलखानस्य संरक्षकस्य वीरस्य शाहिलल्लियस्य विषये अधिकं प्रमाणं प्राप्यते । राजतरंगिण्या उल्लेखानुसारं दरद-तुरुष्क-देशयोर्मध्ये तस्य राज्यमभूत् । उद्भाण्डपुरं तस्य राजधानी आसीत् यत्र राजानः आश्रयं प्रापुः उत्तरापथस्य भूपेषु विपुला तस्य ख्यातिरासीत् । विदुषां मते अयं लल्लियः शाहिः एव हिन्दुशाहिवंशस्य संस्थापक अवर्तत । अल्बेरूनीमते च यो वंशः काबुलोपत्यकायाः गान्धारस्य च शासने काबुलस्य तुर्कशाहीनामनन्तरमधिकारमकरोत् । उद्भाण्डपुरं यवनानां राज्यकाले गान्धारस्य प्रसिद्ध-राजधान्याः **वैयहंड सम्प्रति अण्ड इत्यनेन अभिन्नमस्ति स्टीनमते** । शंकरवर्मा लल्लियं तस्य साम्राज्यान्निराकरिष्णुरासीत् अत एव तस्य आतिशयसेवां नांगीचकार । किन्तु लल्लियः अपि तच्छरणं नाययौ । इत्थं च सिन्धुं प्रति कश्मीरराज्यं नाधिकं विस्तृतमभवत् । अस्य च सूचना शंकरवर्मणः मृत्युसमये कश्मीर-द्वाराणां स्थितिं वीक्ष्यापि प्राप्यते ।[5]

**शंकरवर्मणः राज्ये शासन-प्रबन्ध** :—शंकरवर्मा अनुचितयाचनाभिः, शरीरकष्टप्रदानैः रूढ-भारोढि-प्रथाभिश्च स्वकोषस्य धनमवर्धयत् । शनैः शनैः लोभाभ्यासेन स प्रजापीडनपंडितो बभूव । विविधव्यसनैः क्षीणकोषः असौ देवगृहाणां, धर्मसंस्थानां च धनापहरणं कर्तुमारेभे । नगर-ग्राम-गृहेभ्यश्च वित्तापहरणाय अट्टपति-गृहकृत्याभिधे

---

(4) 5–123–से 126, 127, 29, 30, 34, 36, 37, 41 टि० 143 से 147, 50, 51 स्टी० भा० 1 पृ. 99 गुर्जर एव इदानीं गुजरावाला अस्ति ।

(5) 5–15 से 155 स्टी० भा० 1 पृ. 99, 100 ।

द्वे कर्मस्थाने स्थापितवान् । तन्माध्यमेन मन्दिरेभ्यः क्रयमूल्यकला-छलेन धूपचन्दन-तैलादि-विक्रयोत्पन्नं द्रविणं समाददे । नूतनाधिकारिणो नियुज्य चतुश्षष्ठिमन्दिराणि वशीचकार । तेषां ग्रामाणां धनमपि जहार । राज्यकर्मचारिणां वेतने अपि न्यूनं धनं दत्त्वा धनसंचयमकार्षीत् । स हि सर्वप्रथमं रूढ़-भारोढि-प्रथां प्रचाल्य भारहाराणां पीडनं चक्रे । अन्यच्च ग्रामकायस्थानां मासिक-वेतने करं निधाय ग्रामान् निर्धनान-कार्षीत् । ग्रामदंडादीन् नूतनान् करान् च प्रजासु आरोप्य गृहकृत्याविभागे धनसचयस्तेन विहितः । अस्मिन् विभागे पंचदिविराः (कायस्थाः) षष्ठः लवटाभिधः शकश्च कोषाध्यक्षत्वेन नियुक्तिं प्रापुः । इत्थं च विविधोपायैः प्रजा निपीड्य शंकरवर्मा स्वकोष-वृद्धिमकार्षीत् तेन प्रचालिता नूतनाः कराः चिराय राज्ञां शासनेषु विद्यमाना अभूवन् । देवमन्दिरेभ्यः धनसंचयप्रकारः अपि पश्चात् प्रवर्तितः अभवत् । रूढ-भारोढिः (बेगार प्रथा) तु अद्यापि च क्वचित् प्रवर्तते ।

कल्हणः शंकरवर्मणः काले विदुषामनादरं कायस्थानां च प्रभावं रोषेण वर्णयति । संभवतः तिरस्कृतानां विदुषां तिरस्कारस्य तैः सह कृतस्यान्यायस्य च सूचनां कविः तद्वंशजेभ्य लब्धवान् । कल्हणः शंकरवर्मणा निर्मितस्य शंकरपुरस्यापि उल्लेखम-कार्षीत् । तत्र स स्वपत्न्या समं शंकरगौरीश-सुगन्धेशौ, शिवमंदिरे स्थापितवान् । तत्र च नायकाख्यः चतुर्विद्य द्विजस्तेन आख्यातृपदे कृतः । निजनगरगौरववर्धनाय स परिहा-सपुरात् सर्वं महार्घम् सारमपजहार । परिहासपुरे प्रवर्तितं वस्त्रनिर्माणकार्यम्, पशूनां विक्रयश्चेति कार्यद्वयं स्वनगरे अपि प्रावर्तयत् । तत्पुरं च तेन पश्चात् पत्तनम् इति ख्यापितम् । तदेव सम्प्रति पट्टन इत्यस्ति तच्च मया दृष्टं कश्मीर-यात्रायाम् ।[6]

**सिन्धुं प्रति प्रस्थानम्** - शंकरवर्मणः जीवनस्य राज्यस्य च दुःखदमवसानं संजातम् । स्वद्वाराधिपस्य वीरानकाभिधे स्थाने वधमाकर्ण्य कुपितः असौ प्रतिकर्तुम् वीरानकं समुन्मीलितवान् । मदोर्जितनयश्च उत्तरापथं प्रविवेश । सिन्धुकूलाश्रयान् देशांश्च विजित्य नृपतिभिः कृतानतिः स स्वदेशमाजगाम । अथ उरशां प्रविशतस्तस्य औरशैः समं, सैन्यानां निकेतहतोः कलहः अजायत । कश्चित् श्वपाकश्च गिरिश्रृंग-मारुह्य वेगवाहिना शरेण तस्य गले प्राहरत् । मुमूर्षुर्नृपः कटकप्रत्यावर्तनादेशं दत्त्वा, कर्णीरथमारूढः तस्मात् स्थानात् विनिर्ययौ । मार्गे एव च सप्तसप्ततितमे वत्सरे, फाल्गुने मासे कृष्णसप्तम्यां दिवमगमत् । सैन्यं रक्षन्तः सुखराजादयः तन्मृत्युवृत्तं गोपयन्तः स्वमंडलं प्रति प्रतस्थिरे । षड्भिर्दिनैश्च वोल्यासकाभिधं स्थानं प्राप्य तस्य अन्त्येष्टि-क्रियां चक्रिरे। शंकरवर्मणः ताम्रमुद्राः सम्प्रत्यपि प्राप्यन्ते कश्मीरेषु,। श्रीनगरसंग्रहालये मया शंकरवर्मनिर्मितमेकं धातुमयमद्भुतं शंकरचक्रमपि दृष्टम् यत्र दशावताराणां, मूर्तयः वर्तन्ते । अस्य नरपतेः, तदनन्तरं च, कृतशासनानां राज्ञां राज्यं मुद्राभिः प्रमाणितमस्ति । संभवतः कल्हणः अपि सर्वेषां मुद्रा अपश्यत्, मयाप्यनेकेषां मुद्रा श्रीनगर-संग्रहालये विलोकिताः ।[7]

---

(6) 5–165 से 213 ।
(7) 5–214 से 225 ।

**गोपालवर्मा**—(902–904 खी०) अथ मात्रा सुगन्धया पाल्यमानः गोपालवर्मा वत्सरद्वयं यावत् वसुन्धरां जुगोप। सुगन्धाया उपपतिः प्रभाकरदेव इत्याख्यः मंत्री राज्ये प्रभावातिशयं प्राप। तेन मन्त्रिणा उदभाण्डपुरे शाहिराज्यं व्यजीयत। शासनोल्लंघन-कारिणः शाहेः राज्यं, लल्लियसूनवे तोरमाणाय ददौ, तस्य च कमलुक इत्यभिधां चकार, इदं खलु अपूर्णम् संक्षिप्तं चापि वर्णनमैतिहासिक-दृष्ट्या महत्त्वपूर्णमस्ति। हिन्दुशहिषु कमलू इति अल्बेरूनी-महोदयेन वर्णितः पुरुषः तोरमाण-कमलुक एव विद्यते। स एव जामी उ-ल- हिक्यात् इत्यस्य कथायामुल्लिखितस्य खोरसानराज्यपालस्य (878-901 ई०) अमरूबिनलैस इत्यस्य समकालीनेन कमलू (राय आफ हिन्दुस्तान) इत्यनेन अभिन्नः साधयितुं शक्यते। कविः विद्रोहिणः शाहेः नाम नोल्लिखितवान्। यस्मिन् च पराजिते कमलुकस्योदयः अभूत्। चेत् स्टीनमहोदयेन प्रतिपादितस्य मतस्य सत्यता स्वीक्रियेत तर्हि वयं एतस्य विलुप्तनाम्नः शाहेः नाम, अल्बेरूनी महोदस्य कल्लट-लल्लिय-कमलू इत्येतेषां नामावल्यां प्राप्तुं शक्नुमः। वर्षद्वयं पृथिवीं पालयित्वा गोपालवर्म-नृपतिः अभिचारक्रियया व्यापाद्यत तस्य भ्राता संकटश्च राज्ये अभिषिक्तः स चापि दशभिः दिवसैरेव प्राणान् तत्याज।[8]

**सुगन्धा** - इत्थं शंकरवर्मणः वंशे क्षयं गते सुगन्धा स्वयं राज्यं शशास। सा वै शंकरवर्मणः अन्तर्वत्न्या पत्न्याः सन्ततौ आशामकरोत्। किन्तु तस्यामुत्पन्नः शिशुः प्रसवानन्तरमेव मृत्युं प्राप। तेन च तन्त्रिणां पदातीनां चोपद्रवकारणात् शासनकार्यम् कठिनं संवृत्तम्। दुर्बला सुगन्धा कथंचित् वर्षद्वयं शासनं कृतवती। अथ सा शूरवर्मणः नप्तारं निर्जितवर्माणं राज्यासने कर्तुमैच्छत्। किन्तु मन्त्रिपरिषदि लब्धप्रभावाः तन्त्रिणस्तस्य दोषानाविष्कृत्य तत्पुत्रं दशवर्षीयं पार्थम् (906 खीष्टाब्दे) नृपं चक्रुः।[9]

**पार्थः**—पार्थस्य पंचदशवर्षाणां राज्यकाले, देशे तन्त्रिणां प्रभावः सततमवर्धत। पार्थ-संरक्षकः निर्जितवर्मा तेभ्यः उत्कोचरूपे भूरि धनं दत्वा स्वस्थितिं दधौ। राज्याधिकारिणः, अपि तेभ्य उत्कोचं प्रदाय तेषां दुष्कृत्येषु साहाय्यं ददुः। तन्त्रिणां प्रभावादेव भुभुजः तदधिकारिणां च जीविका प्राचलत्। तन्त्रिसहायकेषु मन्त्रिषु शंकरवर्धन-शम्भुवर्धनौ प्रमुखावास्ताम्।[10] अथ राज्यान्निष्कासिता सुगन्धा एकांगसैनिकानां साहाय्येन पुनरपि 914 खीष्टाब्दे राज्ये प्रत्याजगाम राज्येच्छया, किन्तु पार्थानुग्राहकैः एकांगसपत्नैः तन्त्रिभिः सा व्यापाद्यत। अथ च वर्षत्रयानन्तरं भीषणेन दुर्भिक्षेण देशे महान् जनक्षयः अजायत। प्रथमैव खलु इयं दुर्भिक्षघटना विद्यते यत्कृते कल्हणः यथार्थाम् तिथिं ददौ[11]। (वर्ष त्रिनवते)

---

(8) 5-229, 30, 32, 33 स्टी० भा० 1 पृ० 101, 5-240, 242।
(9) 5-243, 46, 47, 48, 49, 51, 52, 53।
(10) 5-264, 65, 66।
(11) 5-257, 259, 262, 271।

**निर्जितवर्मा—चक्रवर्मा च**—(921–923 खी०) 921 खीष्टाब्दे पार्थः जनकपक्षपातिभिः तन्त्रिभिः नृपासनात् च्यावितः। निर्जितवर्मा च (923-33) राज्यं प्राप। असावपि अष्टानवते वत्सरे स्वशिशुं सुतं चक्रवर्माभिधं राज्ये अभ्यषिच्य क्षीणपुण्यो दिवं ययौ। कंचित्कालं मात्रा बप्पटदेव्या ततश्च मातामह्या क्षिल्लिकया पालितः शिशुनृपः चक्रवर्मा दशसमाः शासनमकार्षीत्। अथ नवमे अब्दे 933/4 वर्षे, तन्त्रिसाहाय्येन चक्रवर्माणमुत्पाट्य शूरवर्मा नृपः कृतः। अदुर्वृत्तः अप्यसौ पार्थिवः भूरिधनार्पणं बिना नाभूत् तन्त्रिणां प्रियः। अतः तं राज्यात् च्यावयित्वा तन्त्रिणः पुनरपि पार्थम् नृपासनं प्रापयामासुः। कियत्कालमेव स राज्यं बुभुजे। ततश्च कालापेक्षी चक्रवर्मा प्रभूतधनार्पणस्य वचनं दत्त्वा तन्त्रिणां कृपया पुनः राज्यासनं प्राप (939 खीष्टाब्दे)। किन्तु तस्मिन्नेव वर्षे-धनाभावतया तन्त्रिभ्यो देयं धनमदत्त्वा भयाकुलः पलायांचक्रे। शम्भुवर्धनश्च नृपतिर्बभूव।[12]

**शम्भुवर्धनः**—(935–936) शम्भुवर्धनः सिंहासनन्तु आरुरोह किन्तु मंडले अशान्तिरवर्धत एव, यतः राज्यात् च्यावितः चक्रवर्मा डामराणां साहाय्यं लब्धुं तन्नायकस्य गृहं प्रविवेश सहायतां च ययाचे। शक्तिशाली डामरप्रमुखः संग्रामः ससैन्यः नृपतिमनुकुर्वन् क्षीरनगरं प्रति प्रतस्थे। 936 खीष्टाब्दे च पद्मपुरे प्रवर्तिते भीषणे संग्रामे तन्त्रिसेनां पराजितवान्। चक्रवर्मास्मिन् रणे स्वपराक्रमं प्रदर्शयामास। सपत्नान् च भूयो भूयः पराजित्य भेरीरवैः पौराणमालोकशब्दैश्च पुनः स्वनगरं प्राविशत्।

अथैकां काम्यां कान्ताकृतिं डोम्बकन्यामसौ स्वान्तः पुरे आनिनाय। तत्सम्बन्धिनस्तेन उच्चपदेषु नियोजिताः। डोम्बरंगस्यानीता कन्या हंसी महादेवीपदे प्रतिष्ठापिता। ततश्च अहर्निशं रतिकर्मणि निरतस्य, डोम्बेभ्यः पददायकस्य दुश्चरितस्य तस्य पार्थिवस्य नैके डामरा शत्रवः अजायन्त। एकस्यां निशि च, 937 वर्षस्य-ग्रीष्मे, चक्रवर्मा स्वशौचालये तैः डामरैर्निहतः।[13]

**उन्मत्तावन्तिः**—(937-939) चक्रवर्मणि शुलोकं गते शर्वटादिभिः सचिवैः पार्थसूनुः उन्मत्तावन्तिः नृपासने अभ्यषिच्यत। प्रजानां पाप्मना, असौ पापात् पापतरो बभूव, स्वकीयैः क्रौर्यद्योतकैः कर्मभिः व्यभिचारातिशयैश्च स्वपूर्वानप्यतिचक्राम। दुर्नृपरक्षसस्तस्य पितृकुलमेव भक्ष्यमभवत्। राज्य-लाभाय कृतोद्यमः पर्वतगुप्तो नाम धूर्तः तन्मंत्री, तं राजानं पितृकुलक्षयाय प्रेरितवान्। अथ लुण्ठित-सर्वस्वः तत्पिता पार्थः सकलत्रःश्रीनगरे श्रीजयेन्द्र-विहारे श्रमणैः दत्तभोजनः उवास, उन्मत्तावन्तिः शंकरवर्मादीन् शिशून् अन्यान् भ्रातॄंश्च जनकात् दूरं नीत्वा कारागारे चकार। तत्र च बुभुक्षया तान् हन्तुमैच्छत्। एतदन्तरे एव पार्थः अपि राज्ञा आदिष्टैः मन्त्रि-

---

(12) 5-271, 287 से 304।

(13) 5-306, 308, 327, 330 से 340, 347, 348, 387, 389, 390, 411, 413।

सामन्ततन्त्रि-कायस्थैः परिवेष्टितः, विहितनग्नविग्रहश्च क्रौर्येण निहतः। तदन्तरम् क्रूरपापानुकूलेन क्षयरोगेण ग्रस्तः उन्मत्तावन्तिरपि प्रजापुण्यैः सत्वरमेव क्षयं ययौ[14]।

**शूरवर्मा:**—(939 ख्री०) अथ दासिभिः कुतश्चिदानीतः नृपात् प्रजातः अयमिति प्रख्यापितश्च शूरवर्माख्यः शिशुः नृपासने विनिवेशितः, कतिचित् दिनानि यावत् सः राजाभवत्। अत्रान्तरे राज्यं प्राप्तुकामः ससैन्यः सेनापतिः कमलवर्धनः मडवराज्यात् प्रस्थितः। अनायासेनैव च राजसेनां पराजितवान्। शिशुभूपतिश्च पलायांचक्रे। किन्तु मूढः असौ न स्वयं सिंहासनमारुरोह, अपितु द्विजपर्षदमाहूय तां कस्यचित् शूरवीरस्य नृपपदे निर्वाचनं क्रियतामित्यादिदेश। चिरं तत्र विवादः समुपस्थितः, परस्परं च द्विजानां वैमत्येन कश्चिदपि तैः सिंहासने नाभिषिक्तः, कमलवर्धनस्तु तैः सर्वथा तिरस्कृतः प्रताडितश्च। अत्रान्तरे बहवो द्विजाः गोकुले एकत्रा अभवन्। राज्ञः निर्णयं कारयितुं च प्रायोप्रवेशं प्रारेभिरे। अन्ततश्च गोपालवर्मणः कोषाध्यक्षस्य प्रभाकरदेवस्य तनयः यशस्करः द्विजपर्षदा राजा निर्वाचितः।[15]

**यशस्करः**—(939–948 ख्री.) यशस्करस्य नववर्षाणां राज्यकाले, क्रमेणाचिराच्च नैकराज्ञां परिवर्तनेन समुत्पन्नाः बहुला आपदः निर्गताः। कल्हणः यशस्करस्य प्रतिभया क्रियमाणं शासनं भूरि-भूरि प्रशशंस। तत्प्रसंगे भूपस्य न्यायबुद्धि घटनाद्वयेन कविः प्रशंसते। प्रथम-घटनायां अविक्रीतं सोपानकूपं पुनः वणिजे दापयित्वा नृपः सुन्दरं न्यायं चकार। द्वितीयायां च द्विजादेकस्मात् केनचित् तरुणेन वाक्छलेन अपहृताः अष्टनवतिः मुद्राः पुनः तस्मै ब्राह्मणाय दापयित्वा, द्वे च युवकाय दत्त्वा न्यायमकार्षीत्।[16] दानशौण्डः स नृपतिः आर्यदेशानां छात्राणां कृते मठमेकं विनिर्ममे। किन्तु पूर्वन्तु प्रजामतोषयत् पश्चात् कुपथि प्रावर्तत। अथ उदरव्याधिना ग्रस्तः यशस्करः संग्रामदेवाख्यं स्वात्मजं, नायं मम पुत्र इति उद्घोष्य स्वपितृव्यजं रामदेवात्मजं वर्णाटं राज्ये अभ्यषेच्यत्। किन्तु वर्णाटः राज्यदायिनः रोगग्रस्तस्य राज्ञः कुशलं प्रष्टुमपि नागात्। अस्मिन्नेव समये पर्वगुप्तादयः राज्य-जिहीर्षवो बभूवुः। अतः एकदा वर्णाटो निशि कारायां तैः निबद्धः, प्रातःकाले च राज्यात् निरवस्यत। अथ संग्रामदेवमभिषिच्य तीव्रव्यथो नृपतिः प्राणान् त्यक्तुं निजं मठं ययौ। तत्र च राज्यजिहीर्षुभिः स्वीयैरेव सुहृत्बन्धुभृत्यादिभिः विषं दत्त्वा व्यापादितः। लोक-परम्परानुसारं राज्ञः मृत्युः ब्राह्मणैः प्रयुक्तया अभिचारक्रियया भूत् किन्तु कल्हणः तया सह निजसम्मतिं न ददाति। इत्थं नवसमाः राज्यं भुक्त्वा यशस्करः चतुर्विंशे हायने, भाद्रपदमासि कृष्णतृतीयायां प्राणान् मुमोच।[17]

---

(14) 5-414, 15, 17, 21 से 31, 34, 43, 48।
(15) 5-445, 46, 51 से 58 63, 64, 65, 77।
(16) 6-14 से 67।
(17) 6-68 से 84, 91, 94, 95, 96, 99. 106 से 114।

संग्रामदेवः – संग्रामदेवः कतिपयमासानेव नृपासनमलंकृतवान् । साम्राज्यं जिहीर्षुः मन्त्री पर्वगुप्तः, यशस्कर-मृत्योरन्तरं प्रबलो भूत्वा सर्वान् नृपपक्षान् व्यापाद्य प्रयुक्तायामभिचारक्रियायाप्यसफलः सन् हिमपातेन निःसंचारे एकस्मिन् दिवसे अकस्मादेव संभृतबलः राजधानीं निरुद्धवान् । प्रासादे च पार्थिवासनात् तं शिशुं निपात्य, जघान शिलाबद्धकण्ठं शवञ्च वितस्तायां क्षिप्तवान् ।[18]

पर्वगुप्तः—( 949–950 ख्री० ) अथ दिविरात् जातस्य संग्रामगुप्तस्य सूनुः पर्वगुप्तः छलबलेन प्राप्तं राज्यासनं नाधिककालमुपभवतवान् । दुष्कर्मभिः प्रजास्तापयन् दुश्चरितः सः राज्यारोहणात् सार्धैकवर्षानन्तरमेव द्रोहार्जितेन सिंहासनेन व्ययुज्यत ।[19]

क्षेमगुप्तः—(950–958 ख्री०) तदनन्तरं तत्तनयः क्षेमगुप्तः नृपासनं प्राप, अधिकमद्यपानेनासौ दुःश्चरितो बभूव । दुराचारा एवाभूवन् तस्य सेवकाः । तैश्च स सततं दुष्कर्मभ्यः एव प्रेरितः । क्षेमगौरीश्वरस्य निर्माणमेव तस्य केवलं कार्यमासीत् । यदर्थम् च स श्रीजयेन्द्रविहार निरदाहयत् । महत्त्वशून्यः अपि स नृपतिः लोहरादीनां शासितुः सिंहराजस्य कन्यया दिद्दया सह विवाहं कृत्वा, आर्थिकदृष्टया कश्मीरेतिहासं प्रभावितं चकार ।[20]

अभिमन्युः द्वितीयः—( 958-972 ख्री० ) लूतारोगेण क्लान्तकलेवरः क्षेमगुप्तः 958 ख्रीष्टाब्दे मृत्युं प्राप । ततश्च तस्यात्मजः अभिमन्युः भूपतिरभूत् । असौ शिशुनृपः दिद्दादेव्या एव अपाल्यत । सा एव शासनकार्यम् चक्रे । राज्ञः प्रतिनिधित्वं कुर्वत्यास्तस्याः शासनमापद्पूर्णम् उपद्रवसंकुलं चाभूत् । पूर्वन्तावत् सा क्षेमगुप्तकालादेव विद्वेषकारणात् फाल्गुन नाम मन्त्रिणं निर्वासनाय बाध्यं चकार । अत्रान्तरे राजप्रासादे पालितौ, दिद्दायाः प्रहारभयात् पलायितौ च महिम-पाटलाख्यौ हिम्मकादिभिः सह मिलित्वा विद्रोहं चक्रतुः । नीतिनिपुणा राज्ञी स्वर्णादिप्रदानेन शत्रूणां संघभेदनं कृत्वा कथंचित् पराजयं निवारितवती ।[21] शत्रुपक्षपातिने यशोधराय कम्पनाधीशपदं सा समर्पयत् । किन्तु एकदा बाह्यसाक्षिभिरज्ञातस्य थक्कनाख्यस्य शाहीशस्योपरि विजयं प्राप्य समागतं तं कम्पनाधीशं पिशुनैः खलैः प्रेरिता सा निर्वासयितुकामा याष्टीकान् विससर्ज । विदितवृत्तश्चासौ कम्पनाधिपतिः यशोधरः विद्रोहं कृत्वा राज्ञीं प्रासादे पर्यवेष्टयत् । अथ सहायतायै संप्राप्तैः नरवाहन-प्रभृतिभिः कथमपि संरक्षिता कोपाक्रान्ता सा यशोधरं मुकुलं अन्यांश्च सपत्नान् समूलं विच्छेद ।[22]

नन्दिगुप्तः—(972–973 ख्री०) अनया घटनया परितुष्टा दिद्दा कृतज्ञतावशात् नरवाहनं सभान्तरे राजानक इति आहूय तं प्रधानं सभासदं कृतवती । दुर्दैवात्

---

(18) 6-115 से 129 । (19) 6-136 से 145 ।
(20) 6-150 से 170, 173, 176, 177 ।
(21) 6-187, 188, 201 से 204, 211 से 220, 224, 225, 226 ।
(22) 6-228, 230 से 258 ।

दुष्टैरधिकारिभिः प्रेरिता राज्ञी तस्मिन्नपि आशंकामधत्त। तं च तिरस्कर्तुं हन्तुं च इयेष, उदन्तं तमाकर्ण्य विमाननोतप्तः नरवाहनः जीवितं तत्याज। एतदन्तरे एव अविश्रान्तानां क्रूराणां डामराणामुपद्रवाः प्रारब्धाः, तत्भीतया च दिद्दया भूयः अपि वीरः फाल्गुनः निजान्तिकमानीतः। तस्मिन् समये एव अभिमन्युरपि 972 ख्रीष्टाब्दे दिवं ययौ। तत्पुत्रः नन्दिगुप्तश्च नृपासनमारोहत्। ततश्च तनयविरहव्याकुला दिद्दा कियत्कालं धर्मप्रभृतिभिः कार्यैः लक्ष्मीं पवित्रामकार्षीत्। अत्र प्रसंगे कल्हणः दिद्दया तदधिकारिभिश्च निर्मितानां निर्मितीनां वर्णनं करोति। तत्र च दिद्दामठः उल्लेखनीयो ननु। यन्नाम च श्रीनगरे दिदमर इति रूपे सम्प्रत्यपि अवशिष्टमस्ति। धर्मकृत्यैरपि दिद्दाया शासनलिप्सा नैव शान्तिं प्रपेदे। अत एव तया अभिचारक्रियया नन्दिगुप्तः प्राणशून्यः कारितः।[23]

त्रिभुवनः—(973-975 ख्री०) अभिचारेणैव च नन्दिगुप्तस्योत्तराधिकारिणं त्रिभुवनमपि सा क्रूरा 975-980 ख्रीष्टाब्दे अहन्। अथ क्रूरया तया चरमः पौत्रो भीमगुप्तः राज्यासने निवेशितः।

भीमगुप्तः—तस्य पंचवर्षाणां राज्यकाले फाल्गुणः अपि व्यपद्यत। भीमगुप्ते राजनि सत्यपि वस्तुतः सत्ता दिद्दाया एव हस्ते अवर्तत। तदनन्तरं पर्णोत्सग्रामजन्मा महिषपालकः बाणस्य सूनुः तरयाः स्नेहं प्राप्य उदपति र्बभूव। शनैः शनैः राजकर्मसु प्राप्त-प्रभावः स गिरिवासी तुंगः शक्तिशाली भूत्वा सत्वरमेव प्रगतिं चकार।[24]

दिद्दा—(980–1003 ख्री०) तुंगस्य साहाय्ये विश्वस्ता दिद्दा 980।1 ख्रीष्टाब्दे भीमगुप्तं बध्वा स्वयमेव सिंहासनमारुह्य समस्तां शक्तिं स्वहस्ते अकार्षीत्। तस्याश्च द्वाविंशतिवर्षाणां राज्यकाले, अधरिताखिलमंत्रिमंडलः तुंगः सर्वाधिकारी बभूव। सभ्रातृकं तुंगं शासने प्राप्तप्रभावं वीक्ष्य पूर्वमन्त्रिणः विरागिणो भूत्वा विप्लवोद्यता अभूवन्। ते हि दिद्दाभ्रातुः सुतं क्रूरपौरुषं, उग्रं विग्रहराजं कश्मीरान् आनिन्युः। स च राज्यविप्लवं विधातुं प्रायोपवेशाय द्विजान् प्रावेशयत्। अथ विप्लुता लोका अपि तुंगजिघांसवः तदन्वेषणं चक्रुः। कूटनीतिकुशला दिद्दा सुमनोन्तकादिभ्यः ब्राह्मणेभ्यः प्रभूतं स्वर्णम् दत्त्वा तत्प्रायोपवेशान् प्रशान्तान् चकार। इत्थं च स्थैर्यम् प्राबल्यं च प्राप्ताः तुंगाद्याः शनैः विहितविप्लवान् कर्दमराजादीन् जघ्नुः। किंच फलगुणनाशेन दृप्तं उपद्रवोद्यतं-राजपुरीराजं पृथ्वीपालं पराजित्य, अधिकां शक्तिं च प्राप्य तुंगः अधिकाधिकं राज्ञाः स्नेहं प्राप। पृथ्वीपालः तुंगेन दग्धां राजपुरीं वीक्ष्य निर्बलं चात्मानं मन्यमानः तुंगाय करं ददौ। येन तस्य प्रतिष्ठा सततमवर्धत।[25]

दिद्दायाः राजनीतौ नैपुण्यं, तच्छासने शान्तिं च वीक्ष्यानुमीयते यत् जीवनान्ते सर्वा शक्तिस्तदन्तिकमासीत्। अत एव च सा लोहराधिपतेः, स्वभ्रातुः उदयराजस्य

---

(23) 6-261, 267, 277, 280 से 284, 292, 293, 295 से 311।

(24) 6-312, 313, 314, 318 से 321।

(25) 6-330 से 353।

सूनुं संग्रामराजं युवराजं चक्रे । अनेनैव हेतुना 1003 ख्रीष्टाब्दे तस्यां दिवं प्रयातायामनायासेनैवासौ युवराजः नृपास्पदं प्राप । ततः प्रभृति च कश्मीरेषु लोहरवंशस्य शासनमारब्धम्[26] ।

## सप्तम–अष्टम–तरंगयोः राजानः

### (प्रथमः लोहर–राजवंशः)

**संग्रामराजः**—(1003 से 1028 ख्री०) कल्हणस्य कृतिः दूरदर्शिनं बुद्धिमन्तमपि संग्रामराजं शासने दुर्बलं वर्णयति । तस्य भीरुत्वं पौनः पुन्येन कविना निन्दितं, तद्राज्यस्य पूर्वार्धे प्रबलशक्तिस्तुंगः सततमुदयं प्राप । तद्भंगाय च भूपतेः ब्राह्मणमन्त्रिणः प्रायोपवेशाय विप्रान् प्रेरयामासुः । अन्ये अपि जनाः तज्जिघांसवो बभूवुः । तथापि अप्रतिहतशक्तिरसौ निःशंकमतिष्ठत् । सर्वे च द्रोहकारिणः शनैः शनैः नीत्या तेन निहताः निबद्धाश्चेति । तद्विरोधं च समुत्थितो विप्लवः तच्छुभायैवाभूत् । तुंगस्य वर्धमानं वयः अपि नहि तं निर्बलमकार्षीत् । तथा च राजकृत्येषु स अलसो बभूव । अत एव अपकीर्तिहेतुरभूत् । कायस्थं भद्रेश्वरं स्वसहायकं विधाय स स्वयमेव स्वभाग्य-संक्षयमकार्षीत्[1] ।

संग्रामराजस्य राज्यकाले उत्तरभारतस्य राजनीतिक-दशायां महान् आरोहावरोहः समजनि । यश्च भारतेतिहासे परिवर्तनस्य मूलं, प्रधानं च कारणमभूत् । अस्मिन् प्रसंगे गजनीदेशवासिनः महमूदस्य नाम ग्रहीतुं शक्यते । एकादशशताब्देः पूर्वेषु दशाब्देषु, पारेसिन्धुं, पंचनदक्षेत्रे च यवनाक्रमणानां तीव्रः प्रवाहः प्रावहत् । महमूदस्य नेतृत्वे सम्पन्नैः बहुभिराक्रमणैः न खलु चिराय दुष्प्रभावः जनितः नापि भारतस्य कश्मीर-प्रदेशस्य स्वतन्त्रतायै भयदो बभूव । राजतरंगिण्यां चित्रिताः सीमिता घटना नाधिकं वृत्तं वर्णयन्ति तदाक्रमणविषयकम्[2] ।

**त्रिलोचनशाहेः साहाय्येन प्रस्थानम्**—यवनानामाक्रमण-विषयकं रुचिकरं वृत्तं कल्हणः शाहित्रिलोचनपालस्य सहायतायै तुंगनायकत्वे संग्रामराजेन प्रेषितस्य बलस्य प्रस्थानेन सूचयति । हिन्दुशाहिवंशस्यान्तिमः स्वतन्त्रः राजकुमारः त्रिलोचनपालः खलु अल्बेरूनी महोदयेन मुहम्मडन-इतिहासकारैश्च सम्यग्ज्ञातो वर्तते । स हि दीर्घम्, भीषणं च समरं कृत्वापि महमूदस्य वंशे अभवत् । तुरुष्कनृपतिः हम्मीरः महमूदादभिन्नः स्वीकृतो ननु इतिहासकारैः, स एव च त्रिलोचनपालस्य शत्रुरभिहितः । स्टीनमते हम्मीरः वस्तुतः गजनीदेशस्य सुल्तान-पदवाच्यानां राज्ञामुपाधिरवर्तत ।

कविः त्रिलोचनपाल-सहायतायै तुंगस्य नायकत्वे प्रस्थितस्य मदोद्धतस्य विशालबलस्य विशेषं वर्णनं विदधाति । तुंगः तुरुष्कयुद्धे लब्धानुभवस्य त्रिलोचनपालस्य युद्ध-विषयकमुपदेशं सम्पत्तिं च नागणयत् । हम्मीरेण तुंगबलजिज्ञासायै प्रेषितं सैन्यं, बलगर्वितः असौ तोषीपारे मितप्रायैः सैनिकैरवधीत् । तेन च सरल-

---

(26) 6-354, 355, 365 ।

(1) 7-2, 10; 4, 13 से 28, 37 से 47 ।

(2) स्टी० मा० 1 पृ० 106 ।

विजयेन आहितोत्सेक: रणोत्सुक: तुंग: पुनरपि त्रिलोचनपालस्य तुरुष्काहवाभ्यास-विषयकां सविदं न स्वीचकार। अन्येद्युश्च गर्वितस्तुंग: स्वात्मानं हम्मीरस्य सम्पूर्णबलेनाक्रमितमपश्यत्। अचिरादेव तत्सैन्यं भंगमाययौ केवलं शाहिसैन्यमेव रणे विचरत् ददृशे। कियत्कालं युध्वा शाहिबलमपि पराजयं प्राप। अस्मिन् प्रसंगे कल्हणेन केवलं त्रिलोचनपालस्य पराक्रम: रणकौशलं वीर्यम् च प्रशंसित-अस्ति। एकाकी एव स असंख्यान् द्विषो जघान। तस्मिन् चापि कौशलेन दूरं प्रयाते प्रचण्डा: तुरुष्कशलभा: (टिड्डीदल) देशं व्याप्नुवन्। राज्यात् च्युत: अपि त्रिलोचनपाल: निजां गजसेनां संश्रित्य जयश्रियं प्रत्याहर्तुं सयत्नो बभूव। न च तत्र साफल्यं लेभे, शाहिश्रियश्च नामापि निर्नष्टम्[3]।

**शाहिराज्यस्य पतनम्**—दुर्दैवात् कल्हण; तुंगस्य प्रस्थानवर्षम् न उल्ललेख। तदभावे च हम्मीरस्याक्रमणविषये, राजतंरगिण्या उल्लेखे संशय उत्पद्यते। महमूदस्य पश्चात्काले सजातानामाक्रमणानां विषये यवनैतिहासकाराणां वृत्तानि सम्प्रत्यपि विद्यन्ते। यानि तदाक्रमणस्य वर्षम् तिथिं स्थानं च प्रतिपादयन्ति। 1013 वत्सरे कृतानामाक्रमणानां तत्र वर्तन्ते बहव: उल्लेखा: यानधीत्य प्रतिभाति यत् महमूदस्य कश्मीरद्वारेषु प्रवेशकाल: स एव वत्सर आसीत्। तदैव च महमूदस्य सेनानां त्रिलोचनपालस्य सेनाभि; सह समर: समजनि। युद्धस्थलं च संभवत: झेलमनद्या: समीपे अवर्तत। अस्य च पुष्टि:, तोषीनद्या उल्लेखेनापि जायते। तोषी एव संभवत: झेलम-समीपे वितस्तां प्रति प्रवहन्ती तोही इत्यस्ति। युद्धान्तरं बहव: कश्मीरसीमानां सेनानायका: सामन्ताश्च महमूदाग्रे समर्पणं चक्रु:। मुहमडनस्रोतभ्य: अपि इदं ज्ञायते। अयं च अन्तिम एवावसर: अभूत् पंचनदक्षेत्रे-शाहिमुख्यानां आक्रमणै: सह युद्धस्य। कल्हण इव यवनैतिहासकारा अपि त्रिलोचन-पालस्य अमानुषं वीर्यम् प्रशंसन्ति। पुनरपि च तस्य राज्यप्राप्ते: प्रयत्न; अपि उल्लिखित: खलु यवनेतिहासे।

शाहिवंशस्य विनाशाय वर्णनं कुर्वन् कल्हण: ऐतिहासिक-आधारमाश्रयते। अकस्मादेव संजात: शाहिवंशनाश. समकालिकेषु महन्तं प्रभावमजनयत्। अति-कारुणिक-शब्देषु कवि: उन्नतवंशनाशमवर्णयत्। अल्बेरूनी-महोदय: विविध-घटनानां साक्षित्वं प्राप्य स्वग्रन्थे शाहिवंशविषये यान् भावान् लिलेख त एव कल्हणस्य चतुर्भि: श्लोकैरपि ज्ञायन्ते। अत एव शाहिवंशवर्णनमसंशयमेव ऐहिासिक-पृष्टभूमौ स्थितमस्ति[4]।

**तुंगस्य हत्या**—हम्मीरेण पराजित: हतोत्साहस्तुंग: स्वदेशामगत: राजकार्येषु च प्रमत्त: अभूत्। अत एव राज्ञ: अनुयायिनश्च तस्य नाशाय उद्यता अजायन्त। तुंगात। भीत: राजा संग्रामराज: च गूढं तत्साहाय्यं चकार। एकदा च तेनाहूतस्तुंग:

---

(3) 7-47, स्टी० भा० 1 पृ० 107, 7-48 से 58, 66।

(4) 7–53 तथा टि. स्टी. भा. 1 पृ. 107, 7–66 से 69 इण्डिया 2 पृ. 13।

प्रासादं प्रविशन् सपुत्रः नृपानुजीविभिः निर्दयं निहतः। तुंगे निहते के अपि खलप्रायाः प्राप्तप्रभावाः बभूवुः, 1028 ख्रीष्टाब्दे दुर्बलस्य संग्रामराजस्य मृत्युं यावत्तो प्रजाः पीडयामासुः।[5]

हरिराजः—संग्रामराजस्य पुत्रः हरिराजः द्वाविंशत्यहानि उर्वीम् पालयित्वा क्षयं ययौ, तन्मृत्युप्रसंगे कल्हणः जनश्रुतिमलिखत् यत् स्वभ्रातुः स्वैरिणीत्वेन कुपितः हरिराजः मात्रा एवाभिचारक्रियया निहतः। तं च निहत्य सा यावदेव स्वयं राज्याभिषेकं कारयितुमियेष तावदेव तस्या अल्पवयस्कः सुतः अनन्तदेवः हरिराजस्य धात्रेयेण एकांगैश्च राज्ये अभिषिक्तः। अत्रान्तरे संग्रामराजस्य भ्राता लोहराधिपः विग्रहराजः, अनन्तदेवं हत्वा राज्यं वशीकर्तुं, ससैन्यः प्रतस्थे किन्तु राजधान्यान्तिकं प्राप्तः स राजसेनाभिः निहतः।[6]

अनन्तः—अनन्तस्य राज्यस्य पूर्वभागे (1028–1063 ख्रीष्टाब्दे) शाहिवंश्यौ, कश्मीरेषु प्राप्तशरणौ रुद्रपालदिद्दापालौ, शक्तिमन्तौ, लब्धप्रभावौ च बभूवतुः। ताभ्यां प्रभूत-वेतनदानं सूचयित्वा कविः तयोरुच्चां स्थितिं प्रदर्शयति। रुद्रपालः जालन्धराधिपतेः कांगड़ाराज्ञां नामावल्यां इन्द्रचन्द्रेति वर्णितस्य इन्दुचन्द्रस्य आसमती इति कन्यामुपयेमे। इन्द्रचन्द्रः भूभुजे अनन्ताय स्वयवीयसीं स्वसारं सूर्यमतीं च ददौ।[7] अत्रान्तरे एव कम्पनाधिपतेः त्रिभुवनस्य नेतृत्वे डामराणां भीषणः उपद्रवः विद्रोहश्च प्रारब्धः किन्तु सत्वरमेव रुधिरप्रवाहिणा भीषणरणेन स शमितः, श्लाघ्यविक्रमः, अनन्तदेवः स्वयमेव त्रिभुवनं प्रजहार असिना। तथैव च राजा रुद्रपालशाहेः साहाय्येन दरन्नृपतिम् अचलमंगलं तत्सहायकान् म्लेच्छांश्च आहवे पराजितवान्। राज्ञः अनन्तदेवस्य समकालीनेन कविना बिल्हणेनापि अनन्तस्यायं विजयः स्वकाव्ये उल्लिखितो वर्तते म्लेच्छान् स शकानाह।[8]

शाहिकुमारेषु निहतेषु नृपतौ अनन्ते सुभटा इत्यपराभिधानायाः सूर्यमत्याः प्रभावः अवर्धत। असंख्य-अग्रहाराणां पवित्रभवनानां च वर्णनं तस्या उदारहृदयं कारुण्यं च सूचयति। तेष्वपि च सदाशिवस्य मन्दिरं विशेषेणोल्लेखनीयमस्ति। राजराजाख्ये। पुत्रे दिवंगते दम्पती राजप्रासादं परित्यज्य सदाशिवान्तिके एव स्थितिं चक्रतुः। अतः परमपि राज्ञः गर्भेश्वरतया न तद्व्ययप्रवृत्तिः न्यूनाभवत्। नर्मकोविदाः खलाः चपलवचनैस्तमलुण्ठयन्। परिणामस्वरूपे किंचित् काले एव राजा दैशिकेभ्यः वृहद्राशेः ऋणी बभूव। अत्रान्तरे कविः ताम्बूलिकस्य पद्मराजस्योल्लेखमकार्षीत्। यो हि काश्मीराणां पापसूदनतीर्थस्य जलं, विदुषामाश्रयदातारं मालवाधिपं भोजं

---

(5) 7–70, 74 से 89,99,100 से 127।

(6) 7–131 से 141।

(7) 7–144,150 से 152।

(8) 7–154 से 156,167 से 176 विक्रमांकदेव चरितम्–18·38;

संप्रेष्य कश्मीराणां प्रातिनिध्यं चकार। प्रियताम्बूलशीलस्य राज्ञः अनन्तस्य प्रियः स एव शनैः शनैः राज्ञो धनं जहार राजचिन्हं चापि बन्धाय (गिरवी इति भाषा) स्ववशे चकार। भोजेन कृतस्य कमटेश्वरे कुण्डयोजनस्य, पापसूदन-तीर्थस्य जलेन स्नानवृत्त-स्योल्लेखः असंशयमेव ऐतिहासिकतथ्येषु आधृतो विद्यते। कश्मीरेभ्यः जलप्रेषण-वृत्तं संकेतयति यत् कश्मीराणां राजनीतिकदशायां विच्छिन्नायां, दक्षिणक्षेत्रे च यवनैः विजिते सत्यपि कश्मीराणां भारतस्यान्यमार्गैः सह संसर्गः व्यवसायश्च सततमवर्तत एव। अयमेव निष्कर्षः चरमयोः तरंगयोः प्रसंगतः प्राप्तैरुल्लेखैरपि पुष्टिं लभते।[9]

अनन्तस्य जययात्राः—आर्थिक-कष्टेभ्यः अनन्तस्य मुक्तिस्तदैवाजायत यदा तस्य राज्ञी सूर्यमती शासनकार्यं स्वहस्ते जग्राह। गौरीश्वर मन्दिरस्य द्वारपालस्य भूते-स्तनयः हलधरः तस्या राज्ये सर्वाधिकारितां लब्ध्वा सुयोग्यो मंत्री शासकश्च सिद्धो बभूव। सत्कार्यैः सत्वरमेव राज्ये समृद्धिः शान्तिश्च वृद्धिमाययौ। अनन्तदेवस्तु जय-यात्राभिः अस्य समृद्धिकालस्य सदुपयोगं कर्तुमैच्छत्। समीपस्थानानि पर्वतीयराज्यानि च कश्मीरायत्तानि अचिकीर्षत्। बिल्हणः स्वविक्रमांकदेव-चरिते चम्पायां, दार्वाभिसारे अन्येषु च केषुचित् पर्वत-प्रदेशष्वस्यानन्तस्य प्रभुत्वमाह, किन्तु कल्हणः केवल नैकराज्ञां विजेतरि चम्पायाः सालनृपतौ अनन्तस्य विजयमलिखत् **चम्पायां सालभूपालमुन्मूल्या-नन्त-भूपतिः।** सालस्य सम्पूर्णम् नाम चम्पायाः ताम्रपत्रेषु सालवाहन इति ज्ञायते। अनन्तस्य उरशां बल्लपुरं प्रति च कृतं युद्धप्रस्थानमसफलं दुःखप्रदं हानिप्रदं चाभूत्।[10]

कलशाय अनन्तस्य राज्यत्यागः— (1063–89 खी०) राज्ञी सूर्यमती राज-कार्ये अनन्तं दुर्बलमयोग्य च शासकं मत्वा 1063 खीष्टाब्दे स्वपुत्राय कलशाय राज्यं याचितवती। तया प्रेरितः अनन्तः राज्यं परित्यज्य पुत्रस्याभिषेकं चकार। कश्मीरेषु सुदृढं शासनं शासकं चानेतुं स्वपरिवाराय उच्चस्थितिं चाधिगन्तुं राज्ञी तथाकारयत्। किन्तु कतिपय-दिवसापगमे उभावपि स्वकृतये पश्चातापं चक्रतुः। अथ मन्त्रिणा हलधरेण प्रेरितः अनन्तः त्वरयेव राज्यकार्यम् भूयः अपि स्वयमेव सम्पादयितुमुद्यतो बभूव। तत्तनयश्च नाम्नैव नृपदमलंचकार। अत्रान्तरे अनन्तस्य पितृव्यजः भ्राता लोहरशासकः क्षितिराजः वैराग्यं प्राप। निजात्मजाय च निहितद्वेषः कलशतनयाय उत्कर्षाय लोहरराज्यं दत्त्वा विबुधैः सार्धम् तीर्थसेवनं विदधे। उत्कर्षस्याभिषेकेण वस्तुतः कश्मीरलोहरप्रदेशयोः राजनीतिक-दृष्ट्या ऐक्यस्य कश्मीरेषु च उत्कर्ष-शासन-स्थापनायाः द्वारं किलोद्घाटितम्।[11]

---

(9) 7–178 से 196 तुलनांक्रियता 7–485, 897, 1001, 8-1600,1626, 2214 किंच कश्मीरसभायां दैशिक— राजदूतानां मखेन कृतः उल्लेखः स्टी. भा. 1 पृ. 125।

(10) 7–197,199, 200, 207, 208, 198, 218, 219, 220, 221 स्टी. भा. 2 पृ. 110।

(11) 7–231,32,33, 38,41 से 44,48,51 से 57।

**अनन्त-कलशयोर्मध्ये कलहः**—(1076 ख्री०) राज्यासने अभिषिक्तः अपि कलशः पितुः प्रभावातिशयेन न कानिचित् वर्षाणि यावत् वस्तुतः राज्यलक्ष्मीमवाप। अथ प्रकृत्या भावुकः तारुण्यमधिगतः कलशः अचिरादेव दुष्टसहचराणां दुर्मतिदातॄणां च प्रभावे निपतितः। कल्हणः सततं लम्पटतामाचरतां तेषां द्रोहवृत्तिमवर्णयत्।

एकदा तु वाक्कलहे पित्रा प्रताड़ितः भृशं तिरस्कृतश्च दुराचारी कलशः शनैः शनैः स्वपितृभ्यां द्वेषाग्निमवर्धयत् स्वचेतसि। तं च कारायां चिकीर्षुरपि दुर्बलः अनन्तः सुतवत्सलया महिष्या भर्त्सनां प्राप्तः, आत्मजवृत्तैः सन्तप्तश्च नगरं परित्यज्य विजयेश्वरं ययौ। स्वकोषमपि स तत्रैव निनाय। केवलं राजभक्ताः विश्वस्ताः केचित् सेवकाः सैनिकाश्च तमनुचक्रुः। कलशस्तु धनस्य सामग्रीणां चाभावेन पर्याकुलः अपि, खलैः प्रेरितः साहसं लब्ध्वा, पितुः प्रयाणेन स्वतन्त्रक्षेत्रं, प्राप्य, महतीं सेनां संयोजयामास स्वजनकं आक्रमितुम्। किन्तु सूर्यमत्याः प्रयासेन कियत्कालाय पितृपुत्रयोः साक्षात्समरः निवारितः। सा वै युद्धेन आत्मजं पराजित्य, राज्यासनात् तं निपातनोद्यतं स्वभर्तारं तदुद्यमात् न्यवारयत्। अथ अनन्तः कलशस्य ज्येष्ठसुतं हर्षम् विजयेश्वरे आहूय नृपासने अभिषेक्तुमैच्छत्।[12]

**अनन्तस्य-आत्मघातः**—(1081 ख्री) कतिचिद्दिनापगमे कलशः पितुः विरोधे, विद्रोहकर्माणि प्रारेभे, विजयेश्वरं चाग्निसात् विधायासौ तत्र सैनिकानामन्येषामनुजीविनां च कृते संरक्षितकोषेभ्यः नैकविधवैभववस्तुभ्यश्च हीनौ चकार स्वपितरौ। अत्र प्रसंगे नगरदाहात् पूर्वम् पश्चात् च कल्हणेन कृतः अनन्तस्य हेमराशेरुल्लेखः रोचको वर्तते। प्राचीन-कश्मीराणामार्थिकदशाया विषये अन्यत्रापि एतादृक्समृद्धेः सूचना प्राप्यते। अस्या घटनाया अनन्तरं अनन्तस्य स्थितिः सततमनिश्चिता अध्रुवा चाजायत। यदा कलशः पितरं देशत्यागाय बाध्यं कर्तुमियेष, तावदेकषष्ठिवर्षदेशीयः वृद्धः पार्थिवः कटुवचनैः प्रताड़ितः व्यथितश्च सन् क्षुरिकयात्मघातमकार्षीत्।[13]

**पर्वतीय-मुख्यानां पर्षत्**—कल्हणः अनन्तस्य अन्त्येष्टि-क्रियायाः अतिकरुणामयं हृदयावर्जकं च च वर्णनं विदधे, जातवेदसि ज्वलितायाश्च सतीभूतायाः सूर्यमत्याः मृत्युं प्रशशंस। तदनन्तरं पित्रोः स्वर्गगमनेन राज्ये सम्पूर्ण-प्रभुत्वेन च कलशस्य चरिते कार्येषु च महत्परिवर्तनं समुत्पादितम्। तरुणेन तनयेन हर्षेण सार्धम् कृत-सन्धिश्च नृपतिः सुन्दरया सुदृढया च शासनव्यवस्थया देशस्यार्थिकदशां समुद्धर्तुमनारतं प्रयासकरोत्। अथ जनकवत् सत्पथं प्रवर्तितः कलशः प्रजानां पुण्याय सुखाय च बहूनि निर्माण-दान-प्रभृतीनि, कार्याणि चकार। एतदन्तरे एव राजपुर्याम् सहज-पालाख्ये नृपे शांतिं प्रयाते, तदात्मजः संग्रामपालः अभ्यषिच्यत। किन्तु बालभूपतेस्तस्य पितृव्यः राज्यं जिहीर्षुरासीत्। अतः संग्रामपालस्य साहाय्याभिलाषिणी स्वसा, ठक्कुरः जस्यराजश्च भूभृतं कलशं प्रायात्। नृपतिरपि विज्जादिभिः शूरैः समं

---

(12) 7–273 से 277, 354 से 357, 390, 391।

(13) 7–407 से 414, 495 टि. 445, 446, 447।

जयानन्दं सहायतायै प्रेषयामास । अनेन च राजपुर्याम् कश्मीराणां राज्य-प्रसारणे द्वारं खलूद्घाटितम् कलशाय । अथ स्वयोग्यस्य सचिवस्य वामनस्य, कम्पनाधिपतेः कन्दर्पस्य च साहाय्येन कलशः लघुषु-पर्वतीय-प्रदेशेषु स्वप्रभावं प्रसारयितुं राज्य-विस्तारं च विधातुं सफलो बभूव। कलशस्येयं विदेश-नीतिः, उक्तसाफल्येन 1087-88 ख्रीष्टादस्य शीतकाले अतिशय-प्रभावमुत्पाद्य लाभदायिनी बभूव, यद्बलेन पश्चिमस्यां दिशि उरशातः पूर्वस्यामाशायां काष्टवाठं यावत् काश्मीरान् परितो विद्यमानानामष्ट-पर्वत-राज्यानां शासकाः कलशस्य राजधान्यामेकत्रा बभूवुः । तेषु च एकः आसटो नाम चम्पायाः अधीशः अपि अवर्तत, यस्य नाम उत्कीर्णलेखेषु, चम्पायाः राजसु उल्लिखितो वर्तते ।[14]

## कलशस्य मृत्युः

हर्षस्य षडयन्त्रः—कलशजीवनस्य चरमवत्सराः, हर्षेण समं प्रवर्धमाने द्वेषे संशये च ययुः । निसर्गतः प्रतिमावान् योग्यः, अतिव्ययप्रवृत्तश्च राजतनयः तरुणो हर्षः पित्रा प्रदत्तेन अल्पधनेन अल्पसम्मानेन च व्यथितः अभवत् । तस्य नैराश्येन लाभं प्राप्नुकामाः दुर्मतयस्तदाश्रिताः अनुजीविनः, तं जनकवधषड्यन्त्राय प्रेरयामासुः । कलशः कथंचिदिमं वृत्तं जज्ञौ पुत्रं च बद्धुमादिदेश । अयं वृत्तान्तः 1088 ख्रीष्टाब्दस्य समाप्तौ समजनि । तदनन्तरं हर्षस्य जीवनम् तस्यैवानुयायिभिः षडयन्त्र-कारिभिः शस्त्रिभिः संकटापन्नं विहितम् । हर्षस्य चरितेन व्यवहारेण भृशं रुष्टः, तथापि तस्मै राज्यं दित्सुरपि कलशः महामात्यानां दुराग्रहात् तं राज्योत्तराधिकारा-दपसारयितुं निर्णयमकार्षीत् । सत्वरमेव च हर्षस्य तरुणं तनयं उत्कर्षम् कश्मीर-सिंहासने अभिषेक्तुं लोहरादानिन्ये । तस्मै राज्यं दत्त्वा,आत्मानं च आसन्नमृत्युमनुभूय प्राणान् मोक्तुं मार्तण्डशरणं ययौ तत्र च बद्धस्य हर्षस्य दर्शनोत्सुकः अपि अफलः सन् मार्गशीर्षमासे 1089 ख्रीष्टाब्दे द्युलोकं जगाम ।[15]

उत्कर्षः—राज्ये अभिषिक्तः उत्कर्षः न खलु हर्षम् बन्धनात् मोक्तुं देशान्निर्वासयितुं वादिदेश । हर्षस्तु नीतिनैपुण्येन बन्धने पतितः अपि स्वानुजम् अर्धभ्रातरं विजयमल्लं स्वस्मिन् विश्वस्तमकार्षीत् । असावपि च उत्कर्षस्य दुर्व्यवहारेण कुपितः सन् बन्धनमुक्तो हर्षस्य सहायकः बभूव । निजप्रभावेन दुर्वृत्तेन अत्याचारेण च नूतनो नरपतिः उत्कर्षः स्वसचिवानां प्रजानां चापि विश्वासं सहानुभूतिं च लोपितवान् । अनेन च वर्धितोत्साहो विजयमल्लः विद्रोहं विधाय राजधान्यामेव नृपतिमाक्रमितवान् । भीरुः दुर्बलश्च उत्कर्षः हर्षम् कारायामेव हन्तुमियेष किन्तु तस्य प्रज्ञया नीत्या च हत्याप्रयत्नो नैव सफलो बभूव । कल्हणः विस्तरेण प्रतिपादयति यत् कथं हर्षः स्वनीतिचातुर्येण प्रहरिषु द्वारपालेषु च विजयं प्राप, कथं च कारागारान्मुक्तिं लेभे ।

---

(14) 7–461 से 481, 506 से 513, 523 से 536, 587 से 590 स्टी. भा. 2 पृ. 111 ।

(15) 7–617, 653 से 658, 703, 709, 713 से 723 ।

अथ शनैः शनैः हर्षदेवो नृपासनमधिचकार, कारायां निपातितः उत्कर्षस्तु तिरस्कृत-मात्मानं मन्यमानः स्वीयमात्मघातं चकार। तस्य राज्यकालः केवलं चतुर्विशति-दिवसपरिमितः अभवत्। चतुर्विशतिवर्षदेशीय एव चासौ दिवं ययौ।[16]

हर्षः (1089–1101 ख्री०)—यौवने एव अधिगतराज्यस्य हर्षदेवस्य पूर्व-जीवनं, आपद्ग्रस्तं व्यतीतम्। कश्मीराणां पश्चात्वर्तिषु हिन्दुनृपतिषु सर्वाधिकं महत्वपूर्णः स वर्तते। तस्य गुणाः विद्याः, चरित्रस्य विचित्राणि अन्योन्यविरुद्धानि च तत्वानि समकालीनं लोकं प्रभावितं चक्रुः। अस्मिन् विषये कवेः विस्तृतं वर्णनमसंशयमेव, हर्षामात्यात् पितुश्चम्पकात् प्राप्ते वृत्ते आधृतं यथार्थम् च प्रतिभाति।

हर्षस्य चरितम्—कल्हणेन हर्षः शूरप्रवरः, आकृत्या सुन्दरः, बलिष्ठः महोत्साहः नीतिनिपुणः, विविधविद्यापारंगतः, ललितकलाकुशलः, धृतसंगीतस्नेहश्च चित्रितो वर्तते। यानि बहूनि गीतानि स अलिखत् तानि कविकाले अपि समोदं गीयन्ते स्म। कविः पंचपद्येषु हर्षस्य परस्पर-विरुद्धानां गुणानां कार्याणां च वर्णनं व्यदधात्। स प्राह हर्षभूपतेः चर्चाकथा, सर्वविधोत्साहोदरक्षेत्रं, सर्वोल्लासदूतिका, सकलसुव्यवस्था-जननी, समग्रनीतिव्यपोहकृच्चासीत्। सा कथा उद्रिक्तशासनस्फूर्तिः, उद्रिक्ताज्ञाक्षयभूमिः, उद्रिक्तत्यागसंपत् उद्रिक्तहरणाग्रहा, कारुण्योत्सेकसुभगा, हिंसोत्सेकभयंकरी, सत्कार्योत्सेकललिता, पापोत्सेककलंकिता, चासीत। धीमतां कृते स्पृहणीया, वर्ज्या च सर्वतः वन्द्यापि निन्द्या च, निश्चोद्यापि उपहास्या, काम्यापि च शोच्या। आशास्यापि (वांछनीया) अपकीर्त्या, स्मार्यापि मानसात् परिहरणीया, खल्वभूत्। इत्थं च विविध-विरुद्ध-गुणसन्निवेशः हर्षचरिते अवर्ततेति सम्यक् प्रतिभाति। तस्मिन् क्रौर्यम् कारुण्यं च, त्यागलोभश्च, स्वार्थबुद्धिः परार्थभावना च, विचारचातुर्यम् विचारशून्यता चाभूत्। यैश्च हर्षेतिहासः हृदयावर्जकः अजायत विदुषां कृते। आधुनिको मनोवैज्ञानिकः कल्हणप्रतिपादितं हर्ष चरितमधीत्य अनायासेन नृपतेः, अस्थिरस्य मस्तिष्कस्य, अस्वस्थतायाः अस्थिरदशायाश्च कल्पनां कर्तुम् शक्नोति। मस्तिष्कस्य च सैवावस्था-तज्जीवनान्ते रोगरूपे प्रकटीबभूव।[17]

हर्ष-शासनस्य पूर्वभागः—नृपासनमलंकृत्य हर्षः शासनारम्भे पितृवत् धैर्यम् क्षमां च हृदि वहन् स्वसेवकान् नियम्य सुव्यवस्थाव्यतिक्रमं च रक्षन् पितुः मन्त्रिभ्य एवाधिकारान् समर्पयत्। अस्या एव नीतेः हेतुः हृदि अंकुरित-द्वेषेण खलप्रेरणा-रचितषडयन्त्रेण विजयमल्लेन विरोधे विद्रोहे प्रारब्धे अपि न काप्यापदुज्जगाम। पलायितः विजयमल्लः पर्वतानतिक्रम्य, दरददेशे लब्धाश्रयः तत्र, बलं प्राप्य पुनरपि हर्षमाक्रमितुं प्रस्थितः किन्तु अध्वन्येव हिमवृष्ट्या कालकवलितो बभूव।

(16) 7–737 से 764, 776 से 814, 861।

(17) स्टी. टा. भा 1 पृ. 26, 7–837 से 841, 941, 942, 869 से 873।

अनया घटनया च, ईराज्यशंकाचिन्तितस्य निरस्तकंटकस्य हर्षमहीभुजः स्थितिः सुदृढाजायत।

अथ निर्मत्सरः धीरो हर्षः सुशासनेन कश्मीरमंडलं तथैव रमणीयमकार्षीत् यथा वसन्तर्तुः उपवनम्। पूर्वराज्ञां काले निरुद्धं, प्रसाधनं, विविधालंकारप्रयोगं राजोचितवेषं पुनरपि स्वदेशे प्रावर्तयत्। वस्त्रालंकारादि-विषये स्वाधीना लोकास्तदास्थाने सततं रेजुः। सुकविबान्धव हर्षनृपतिमाकर्ण्य, कलशराज्ये कश्मीरेभ्यो विनिर्गतः चालुक्यनृपतेः पर्माडिभूभृतः सभाश्रितः, विद्यापतिरित्युपाधिविभूषितः, सम्मानितः अपि बिल्हणः हर्षस्य वैभवं श्रुत्वा स्वाश्रयदातुर्वैभवं वंचनामात्रं मेने। निजमातृभूमेः त्यागाय च पश्चातापं चकार।

प्रसाधनेषु दाक्षिणात्यभंगेः (पद्धतेः) कर्णाटटकस्य हर्षेण कृतस्यानुकरणस्य च उल्लेखः हर्षेण प्रवर्तितां कर्णाटटंकतुल्यां मुद्रां वीक्ष्यैव कल्हणेन कृतः। कविना कृतं हर्ष-राजसभायाः राजकार्याणां वर्णनं तन्महिमा च नैकतत्त्वेषु, अन्यकविभिः प्रवर्तितायां परम्परायामाश्रितमस्ति। किन्तु एतैः वर्णनैः स्वर्णरजतमुद्राणां प्रवर्तनेनायं निष्कर्षः अस्माभिरधिगन्तुं शक्यते यत् राज्यस्य पूर्वकाले प्रजासु देशे च असाधारणी ऋद्धिः समृद्धिश्चाभूत्।[18]

राजपुर्या विरोधे प्रस्थानम्:—अस्मिन् समृद्धिकाले हर्षः कश्मीरेभ्यो बहिरपि स्वप्रभुत्वस्थापने साफल्यं लेभे। पूर्वन्तु उत्कर्षेण कश्मीरेषु संयोजितस्य लोहरस्य मार्गेण राजा द्वाराधिपं कन्दर्पम् राजपुर्या अधीशं संग्रामपालं जेतुं ससैन्यं प्रेषयामास। भीषणे रणे काश्मीराणां सैनिकानां शतद्वयं खशानां च चत्वारिंशतानि उर्वीमशेरत, कन्दर्पश्चान्ते राजपुरीं विजित्य तस्या नृपं हर्षाय करदायकं विधाय स्वभुवमाययौ। तत्र च हर्षम् परितःस्थिताः पिशुनाः खलाः कन्दर्पस्यावमानाय नृपं भूयोभूयः प्रेरयामासुः।[19]

हर्षस्य विरोधे षडयन्त्रः—अथ समये व्यतिक्रामति, राज्येच्छुभिः हर्षस्य विरोधे षडयन्त्रा प्रारब्धाः। प्रथमस्तेषु राज्याकांक्षी तन्वंगतनयः घम्मटः पार्थिवं हन्तुमुद्यतः अभवत्, किन्तु राजद्रोहकलंकात् भीरुः स कलशात् कय्याभिधानायां वेश्यायां (रखेल इति भाव) समुत्पन्नं हर्षानुजं जयराजं, भूभुजं हन्तुं प्रेरितवान्। अनारतं स षडयन्त्रसर्जने तत्परो न्यवसत्। अस्मिन् समये विदितवृत्तान्तः भूपतिरपि सशंकः सावधानश्च तिष्ठन् तयोर्द्रोहकारिणोः निपाताय सततं चिन्तापरो बभूव। नीतिज्ञः नरपतिः घम्मटमेव जयराजबन्धनायादिदेश। असावपि मन्दधीः, राजा मां न द्रोहकारी मन्येत इति विचिन्त्य तं बबन्ध। अथ क्रौर्येण 109॰ ख्रीष्टाब्दे जयराजं निहत्य

---

(18) 7–886, 889 से 916, 919, 921 से 929, 935 से 937‘ 943 से 950।

(19) 7–967, 968, 799, 991।

भूभृत्, घम्मटं, तस्य वीरान् पंचपुत्रांश्चापि जघान। ततश्च गुप्तरीत्या पार्थिवः उत्कर्षस्य ज्येष्ठपुत्रं विजयमल्लस्य च तनयं परेतपतेः पथः पथिकमकार्षीत्।[20]

**हर्षेण-सुरसदनसंपदपहरणम्**—सेनासु, विविधविलासेषु च निर्मर्यादितव्ययः हर्षः शनैः-शनैः आर्थिककष्टान्याप्नोत्। तेभ्यश्चात्मानं मोक्तुकामः स सुरसदनानां सम्पदपहरणे धियं चकार। कल्हणः सम्यक् प्रतिपादयति यत् केन प्रकारेण केन दुर्बुद्धिना खलेन लोष्ठधरेण भीमशाहेः मन्दिरस्योल्लेखं कृत्वा राजा तद्धनं हर्तुं प्रेरितः तेन प्रेरितः नृपतिः सुरसदनस्य मणिस्वर्ण-निर्भरं कोषं जहार। महतीं धनराशिं ततः प्राप्य, अन्यमन्दिरेष्वपि अगणितं वित्तं भविष्यतीत्यनुमीय, अन्येषामपि देव-मन्दिराणां स्वर्णादिप्राप्तीच्छया प्रतिमापहरणे रत्नधनापहरणे च संलग्नो बभूव। उदयराजं च देवोत्पाटननायकं चकार। कल्हणः सूचयति यत् देवमूर्तीनां विनाशाय तदुपरि शकृत् मूत्राद्यपातयन्नृपः। स्वर्णरजतादिघटिताः मूर्तीः अध्वनि निपात्य थूत्कारछन्नाः गुल्फदामभिराकृष्टाः सत्यः नीयन्ते स्म। किन्तु द्वौ देवौ तस्याधृष्यौ आस्ताम्। राजधान्यां श्रीरणस्वामी अन्येषु पत्तनेषु च श्रीमार्तण्ड एव अस्पृष्टः अवशिष्यत। प्रायः प्रत्येकस्मिन् पुरे ग्रामे च स्थितः प्रासादस्तेन प्रतिमाशून्यः कृतः। कल्हणः राज्ञः एतादृशीं लुण्ठनप्रवृत्ति वीक्ष्य हर्षाय तुरुष्कसंज्ञां ददौ। तस्य सेनायां प्राप्तप्रभावाणां अधिगतनृपस्नेहानां तुरुष्काणामुल्लेखमप्यकार्षीत्।[21]

**हर्षस्य-दुश्शासनम्**—अनेन अधर्माचरणेन अनीत्या च स्वर्णरत्नादिसंचयं कृत्वापि अनारतं संवर्धितलोभः हर्षः नूतनानां राजस्वानां (महसूल इति भाषा) नगरशुल्कानां (चुंगी इति) चारोपणे कृतसंकल्पः अभवत्। यथा कथंचित् च प्रजा निपीड्य धनसंग्रहाय धीस्तस्मिन्नजायत। तत्कृते नूतना विभागाः अधिकारिणश्च नियुक्ता बभूवुः। जनधनहरणसक्तः स पुरीषस्यापि नायकं चकार करग्रहणाय। अनेन दुश्शासनेन प्रदेशे असंतोषः दुर्गतिश्च क्रमेणावर्धत, तथापि दैवोपहतस्य हर्षस्य मूर्खता-भरितानि कार्याणि निरन्तरं वृद्धिं ययुः। कविना उद्धृतानि विचारशून्यानि कृत्यानि हर्षे दुष्टानां निर्लज्जानां चाटुकाराणां पाखण्डानां जनानां प्रभुत्वं सूचयन्ति, तस्य चासीमकामवासनामपि च प्रदर्शयन्ति। अत्र प्रसंगे कर्णाटस्य पर्माडिभूपतेः राज्ञीं चन्दलां प्रति तदनुरागः विशेषमुल्लेखनीयो गर्हणीयश्च विद्यते। अपि च स्वस्वसाभिः पितृविधवाभिश्च सह कृतास्तस्य संभोगास्तत्कामुकताया निन्दनीयमुत्कर्षं तद्दुश्चरित्रं अधःपातं च द्योतयन्ति।[22]

**हर्षस्य प्रयाणानि**—स्वराज्यस्य मध्यकाले हर्षः कानिचित् युद्ध-प्रयाणानि चकार। प्रथमं प्रयाणं तस्यैव नेतृत्वे तत्सेनाः राजपुरीविजयाय चक्रुः, किन्तु राजा

---

(20) 7–1013, 1915, 1020, 1021, 1026, 1030 से 038, 1048, 1049, 1065 से 1069।

(21) 7–1089 से 1096, 1149।

(22) 7–1100 से 1107, 1115 से 1138, 1147, 1148।

पराजितो बभूव । ततश्च दरदसीमायां दुग्धघातदुर्गं जेतुं कृतमाक्रमणं पूर्वतः अप्यधिकं हृदयद्रावकं पराजयं ददौ। अथ दरदोपरि कृते आक्रमणे राजसेना हिमवृष्टिभिः प्रत्यावर्तनाय बाध्या कृता । अत्रान्तरे एव मल्लतनयौ उच्चल-सुस्सलावपि स्ववीर्यम् प्रदर्श्य पुरतः समागतौ प्रसिद्धौ च बभूवतुः ।[23]

**अन्तः आपदः**—1099 खीष्टाब्दे हर्षराज्ये नूतना आपदः अपतन् । दुष्टाः लुण्ठकाः समस्त-मंडले लुंठनकार्यनिरता आसन् । अपि च अस्मिन्नेव सवत्सरे भीषण-पयः पूरात् भयावहो दुर्भिक्षः उज्जगाम । येन कष्टसहस्राणि मडले निपातितानि । इमामापदं वीक्ष्य डामरैः लवन्यैश्चापि स्वोपद्रवाः प्रवर्धिताः ।[24]

**उच्चल-सुस्सलयोः पलायनम्**—अत्रान्तरे राज्ञः चेतसि राज्यस्योत्तराधिकार-याचकौ उच्चल-सुस्सलौ प्रति संदेहः समुत्पन्नः । उभयोश्च हत्यायै स विचारमकरोत् । तदाकर्ण्य च 1100 खीष्टाब्दस्य वसन्तर्तो उभावपि भ्रातरौ डामराणां साहाय्येन एकस्यां निशि श्रीनगरात् पलायितौ । ज्येष्ठः उच्चलः राजपुर्याम् संग्रामपालस्य शरणं प्राप । सुस्सलश्च कलिंजर-पर्वतीयप्रदेशानां नायकस्य कल्हस्याश्रयं लेभे । अथ द्रोहिणो डामराः, राज्याधिकारयाचनायै उत्तेजयितुं, उच्चलेन समं सन्धिमकार्षुः । उच्चलः राजवंशादेव समजनि इत्यस्माभिः राजतरंगिण्या-व्याख्यान-प्रसंगे विलोकितम् ।[25]

**उच्चलस्य-आक्रमणम्**--(1101 खी०) डामरैः सह कृतसन्धिः उच्चलः विजयाय कश्मीरान् प्रतस्थे 1101 खीष्टाब्दे । मार्गे च राज्ञे कृतद्वेषाः अनेके डामराः सर्वदिग्भ्यः तदन्तिकमाययुः सहायतायै । अथ क्रमराज्यस्य डामरनायकानामपि उच्चलः सहायतां प्राप । तदनन्तरं स परिहासपुर-शासकस्य विरोधे सफलं प्रयाणम-कार्षीत् । अत्रान्तरे राजा हर्ष आपदमापतन्तीमनुभूय, उच्चलोपरि आक्रमणं चकार, विजयं च लेभे । कथंचित् स पलायनं कृत्वात्मानं ररक्ष, तस्य बहवः अनुयायिनश्च, परिहासपुरे, तन्मन्दिरेषु च प्राणान् तत्यजुः ।[26]

**सुस्सलस्य प्रयाणम्**—पलायितः उच्चलः यावत् पुनरपि क्रमराज्यस्य डामरान् पुनः एकत्रीकर्तुं तत्परः अभवत् । तावत् मधवराज्ये सुस्सलस्य अकस्मादाक्रमणेन राज्ञः शक्तिः विचलिता बभूव । स खलु कल्हस्य सहायतां लब्ध्वा शूरपुर-समीपे राज-सैन्यं राजधानीं प्रति पलायनाय बाध्यं चकार । अत्रान्तरे उच्चलस्य नेतृत्वे डामरा अपि लौहरं प्रति प्रतस्थिरे । यत्र ते राजसेनासु सर्वतः विजयं प्रापुः । येन च राजधानीं प्रति गमनमार्गः निष्कंटकः सरलश्चाभूत् । तत्र च प्रस्थितः उच्चलः हिरण्यपुर-ब्राह्मणैरभिषिक्तः ।[27]

**परितः हर्षम् राजद्रोहः**—यदा च प्रत्यर्थि-बलानि श्रीनगरं परितः परिवेष्टन-पराण्यासन्, हर्षस्य मंत्रिपरिषदि संशयः असन्तोषश्च समुद्यौ । महामात्या भूभृतं

---

(23) 7–1151, 71 ।
(24) 7–1226, 27, 1171 टि. ।
(25) 7–2248, 82 ।
(26) 7–1290 से 1339 ।
(27) 7–1348, 1359 से 85 ।

लोहराचले गमन-सम्मतिं ददुः। या च भूपतिना अस्वीकृता। स्वतनयं भोजं च स पुनराहूतवान्। शनैः शनैः हर्षस्य अधिकारिष्वपि विरोधः असन्तोषश्चावर्धत। अस्यां विपदि हर्षः शान्तमनसा नगर एव कृतनिवासे उच्चल-सुस्सलयोः पितरि मल्ले संदिहानस्तमाक्रम्य जघान। भर्तरि निहते तत्पत्नी नन्दापि, अग्नौ निपत्य सती बभूव।[28]

**श्रीनगरे-हर्षस्योपरि आक्रमणम्**—इदं खलु जघन्यकृत्यं 1101 वर्षे भाद्रपदमासस्य नवमतिथौ समजनि। तच्च वृत्तमाकर्ण्य कुपितौ उच्चल-सुस्सलौ, स्वप्रयासं तीव्रं चक्रतुः। आक्रमणधिया दक्षिणपूर्वात् समागच्छन् सुस्सलः विजयेश्वरे राजबलं पराजित्य तन्नायकं चन्द्रराजं बबन्ध। उत्कंठितश्च स्वात्मने राजछत्रग्रहणाय श्रीनगरं प्राधावत्। वितस्तातटे दक्षिणाशया नगरे कृतं तदाक्रमणं विफलीकृत्य हर्षस्य वीरपुत्रो भोजो यावद् विश्रमन्नेव बभूव तावत्, उच्चलः उत्तरदिशा नगरमाक्रमितवानिति स शुश्राव। नगर-रक्षकस्य नागस्य छलेन, साहाय्येन च, जनकचन्द्रनेतृत्वे डामराः राजप्रासादस्य मार्गे विद्यमानं सेतुं नशोचक्रुः। अचिरादेव तैः भवनेष्वग्निः प्रज्वालिता प्रासादः अपि अग्निज्वालाभिः परिवेष्टितः।[29]

**हर्षस्य पलायनम्-हत्या च**—नगरे समुत्पन्नां विपदं विलोक्य भोजः कैश्चिदनुयायिभिः सह पलायांचक्रे। हर्षः अपि तदनुकरणमकार्षीत्। एकस्यां निशि च वर्षति मेघे पलायाम्बभूव। केचिदेव राजभक्तास्तमनुचक्रुः। तेष्वेव कल्हणस्य पिता चम्पकः अप्यासीत्। कल्हणः दैवोपहतस्य राज्ञः पलायनं विस्तरेण कारुण्येन च वर्णयति। श्रीनगरात् पलायनं विधाय हर्षः तदन्तिकमेव एकस्मिन् स्थाने कस्यचित् नीचजातेः जनस्य गृहे शरणं प्राप। अन्येद्युरेव स स्वसूनोः भोजस्य हत्यावृत्तं शुश्राव। तत्रैव द्वितीया निशा तेन अभुक्त्वा एव नीता। अथ भोजनान्वेषणाय प्रयागो निर्गतः, किन्तु उच्चलः कथचित् स्वगूढचरैः हर्षस्य प्रच्छन्नरूपे निवासं जज्ञौ, सैनिकाश्च तेन तं हन्तुं प्रेषिताः। ते च तत्कुटीरं परितः आक्रम्य चिराय-युद्ध्यतः राज्ञः, प्रयागस्य च हत्यां चक्रुः। इत्थं च 1101 ख्रीष्टाब्दे भाद्रपदमासि, द्विचत्वारिंशत् वर्षदेशीयो नृपतिः दिवं ययौ। तस्य छिन्नं शिरः, उच्चलं पुरतः समानीतं, अग्निसात् कृतं च तत्तेन। हर्षस्य पलायन-विषयकं दुःखजनकं विस्तृतं वर्णनं यथार्थतामावहति। संभवतः चम्पकमुखात् श्रुत्वा कविस्तदुल्लिलेख[30]

**उच्चलः**–(1101-11 ख्री) हर्षम् पराजित्य उच्चलः कश्मीरसिंहासनं तु प्राप, किन्तु निष्कंटकः विगतक्लेशश्च स नाभूत्। यतः सिंहासन-प्राप्त्यै तत्सहायका डामरनायकाः मंडलस्य वास्तविक-शासका इव तेन समं व्यवहारं चक्रुः। तस्यानुजः महत्त्वाकांक्षी सुस्सलश्च तद्विरोधोद्यत आसीत्। तस्य च विरोधप्रशमनाय उच्चलः तस्मै

---

(28) 7–1386 से 1453, 1469 से 94।

(29) 7–1498–1537।

(30) 7–1547 से 65,70, 86, 97 से 1623, 50 से 77, 1717, 20 टि.

लोहरप्रदेशाधिपत्यं ददौ । नीत्या च डामरनायकेषु परस्परं द्वेषं, संशयं, विरोधं च समुत्पाद्य एकैकशस्तेषां वधमकारयत् । देशाद्वा निष्कासितवान् । सुदृढां चात्मनः स्थितिमवगत्य अवशिष्टडामरान् निःशस्त्रान् कृत्वात्मसमर्पणाय बाध्यानकार्षीत् ।[31]

उच्चल-चरितम्—राजतरंगिणी उच्चलं, सच्चरितं, शूरं, कुशलं, नीतिनिपुणं च शासकं वर्णयति । सामान्य-प्रजाभिः समं महानासीत्तस्य स्नेहः, कायस्थ प्रभृतिभिः नीचजातिभिः समं स स्वसम्बन्धं, डामरेभ्यः निज-रक्षार्थं संभवतः चकार । उच्चलस्य न्यायबुद्धिः प्रशंसिता खलु । अपि च गज्ञः गुणैः सह तस्य, इतरगुणेषु द्वेषः, सर्वकार्येषु त्वरा, अविचिन्त्य भाषणादिश्चेति दोषानपि कविराविष्करोति ।[32]

उत्तराधिकारिणां-उद्गमनम्-विद्रोहाः च—कतिपय-दिवसापगमे एव सुस्सलः स्वभ्रातर उच्चलं राज्यासनादपसारयितुं, लोहरात् तस्मिन् आक्रमणमकार्षीत् । सावधानः उच्चलः रणक्षेत्रे तं पराजिग्ये । पलायितः सुस्सलः दरदसीमायां शरणं प्राप्य कथंचित् क्लेशेन निज-पर्वतीयक्षेत्रं लोहरं प्राप । अथ राज्यस्य उत्तराधिकार-याचकः अपरः दुर्जयो विद्रोही, भोजस्य पुत्रो भिक्षुचरः समुद्ययौ । मालवनरेशः नरवर्मा तमपालयत् । अस्मिन् प्रसंगे मालवेषु कृताधिपत्येषु परमारराजकुमारेषु नरवर्मण उल्लेखः आश्चर्यजनकः खलु, अन्यत्र चापि स पुष्टो वरीवर्ति ।[33]

उच्चल-विरोधे-षडयन्त्रः—सुस्सलः जयसिंह-नामानं सुतं लेभे । तज्जन्मना च उभयोः भ्रात्रोः विद्वेषः न्यूनतां गतः । तेन च कश्मीरमडले शान्तिः संजाता । अत्रान्तरे एव नगरपालेन छुड्ढेन तत्भ्रातृभिश्च उच्चलस्य विरोधे भीषण एकः षडयन्त्रः विरचितः, षडयन्त्रकारिणः राज्ञा निष्कासितैरधिकारिभिः सह मिलित्वा हृदयद्रावकं षड्चक्रं चक्रुः भूपतेः हत्यार्थं । साफल्यं च तत्र प्रापुः । ते वै एकस्यां निशि निःशस्त्रैः कैश्चिदनुयायिभिः परिवृत्तं अन्तःपुरं प्रति गच्छन्तं उच्चलमाक्रमन्त । भूपतिस्तु शौर्येण चिरादयुध्यत, किन्तु नैकशस्त्रिभिः षडयन्त्रकर्तृभिः स 1111 ख्रीष्टाब्दे दिसम्बरस्याष्टम-तिथौ निर्दयं निहतः ।[34]

रड्ढ-शंखराजः—(1111 ख्री०) तदन्तरं तस्मिन्नेव निशीथे छुड्ढस्य भ्राता रड्ढः शंखराजनाम आदाय रुधिरलिप्तं सिंहासनमारुरोह । किन्तु प्रत्यूषं यावदेव तत्र तस्थौ । अथ उच्चलस्यानुकम्पया साहाय्येन च लब्धप्रभावः लोहरमंडलस्य शक्तिशाली डामरनायकः गर्गचन्द्रः रड्ढं तदनुचरांश्च निहत्य उच्चलहत्यार्थं प्रतिशोधं गृहीतवान् ।

सल्हणः (1111-12 ख्री०)—उच्चल-भार्याया अन्त्येष्टि-क्रियां सम्पाद्य, गर्गचन्द्रः अन्यं कमपि योग्यमनासाद्य उच्चलस्य अर्धभ्रातरं सल्हणं राजसिंहासने

---

(31) 8-8, 39 ।
(32) 8-46, 85, 123 से 58, 162 ।
(33) 8-191, 208, 28 टि. 55, 38 ।
(34) 8-256, 303 ।

अभिषिक्तवान् इतस्तु सुस्सलः अपि स्वभ्रातुः वधवृत्तमाकर्ण्य स्वाधिकारं प्राप्तुं त्वरया कश्मीरान् प्रतस्थे। किन्तु हुष्कपुरसमीपे एव, गर्गचन्द्र-बलानि रणोन्मुखान्यवाप्तवान्। अल्पसैन्य सुस्सलः प्रतिरोधे असमर्थमात्मानं मन्यमानः वितस्ताघाटीं प्रति पलायां-चक्रे। वारानकं च ग्राम संप्राप्य, सकष्टं च हिमाच्छन्नगिरीन्नुल्लंघमानः कथंचित् लोहरं पुनः प्राप्नोत्।[35] मूर्खः असहायश्च सल्हणः गर्गचन्द्रस्य कठपुत्तलिकामात्रं नाम्ना च नृपतिरासीत्। तस्मै नृपपददाता गर्ग एव वस्तुतः मंडले प्रभाव-शाली, शासकश्चासीत्। सल्हणः स्वभ्रात्रा लोठनेन समं मनोरंजने निरतः अभवत्। अवसरं प्रतीक्षमाणा विरोधिनः परितः गर्गचन्द्रमाक्रमन्त। किन्तु तच्छक्ति-विघाते असफलाः समजायन्त। अथ गर्गः सुस्सलेन समं सन्धित्सुरभवत्। सुस्सलस्तु नेममवसरं तत्याज। वराहमूल्यमार्गेण कश्मीरघाटीं प्रविवेश। सल्हणेन च प्रेषितां चमूं स्वपक्षे प्राप। गर्गचन्द्रस्य द्वे कन्यके, स्वात्मनः सूनोः जयसिंहस्य च भार्यात्विेन स्वीकृत्य, सुस्सलः राजधानीं वशीचकार सल्हणं च प्रसादे एव निगृहीतुं ययौ। इत्थं तस्य राज्यं चतुर्षु एव मासेषु समाप्तिं ययौ।[36]

**सुस्सलः** (1112–20 खी०)--सुस्सलस्य चरितं कल्हणेन उच्चलवदेव वर्णितम्। तस्य राज्यलाभाय कृताः असफलाः संघर्षास्तं, अविमृश्यकारिणं, क्रूरं च चक्रुः। असंशयमेव लोहरे सः प्राप्तप्रभावः अभवत्, अजस्रं डामरैः जनितासु अन्तरापत्सु एव स राज्यकार्यम् चकार।

श्रीनगरे प्रवेशस्य एकमासानन्तरमेव सुस्सलो लोहरात् बहिः प्रान्तेषु लब्ध-प्रभावस्य गर्गचन्द्रस्य भीषणं विरोधं विद्रोहं च सोढुम् बाध्यः अभवत्। संघर्षानन्तरं च राजा गर्गम् समर्पणाय परवशमकार्षीत्। ततश्चासौ सल्हणलोठनयुक्तं लोहरदुर्गम्-प्रति प्रतस्थे तदन्तिकं च पर्वतीयनायकैः सह सन्धिमकरोत्। अथ सुस्सलेन पूर्वम् निष्कासिताः सहस्रमंगल-प्रभृतयः, चिनावघाटी-दिशः अवस्कन्दं विधाय राजानं राज्याच्च्यावयितुं प्रयासमकुर्वन्। किन्तु भिक्षाचररूपे राज्याधिकारिणि, सुस्सल-विरोधे समुत्थिते तेषां प्रयासो महत्त्वशून्यो बभूव। अथ पूर्वमुल्लिखितस्य मालवभूपतेः नरवर्मणः सभायां प्राप्तशरणः तरुणः राजकुमारः भिक्षाचरः, तीर्थयात्रा-प्रसंगेन समायातैः चम्पा-बल्लापुर-गिरिव्रजनायकैः सह अमिलत्। तेषामन्योन्यं सन्धिः सम्पन्ना। किन्तु तेषां कश्मीर-प्रयाण-योजना, जातैः आन्तरिकलहेषु सबाधाभवत् कियत्कालाय च भिक्षाचरः, कश्मीर-सिंहासन-प्राप्तिरूपां निजेच्छां मनस्येवाच्छा-दयत्।[37]

**गर्गचन्द्र-विरोधे-प्रयाणम्**—अस्मिन् च स्वल्पे शान्तिकाले सुस्सलः सुशासन-व्यवस्थायै नूतनानि स्रोतांस्याविष्कृत्य प्रयासमकरोत्। कायस्थं गौरकं स प्रधानामात्यं

---

(35) 8–342, 71, 79 से 415, 43, 5–214 टि.।

(36) 8–415, 50 से 80।

(37) 8–482, 502, 34, 37, 49।

चकार। 1117 ख्रीष्टाब्दे सुस्सलः गर्गचन्द्रशक्ति-भंगायात्मानं सक्षमं मेने। पूर्वन्तावत् स गर्गविरोधिनं मल्लकोष्ठाभिधानं लोहर-डामरनायकं, उत्तेजितवान्। अथ नैकाभिद्रवानन्तर गर्गचन्द्रः आत्मसमर्पणं विधातुं बाध्यो बभूव। कतिचित् मासानन्तरं लोहर-प्रान्ते मल्लकोष्ठे अप्रतिहतशक्तौ संजाते, गर्गचन्द्रः पुनरपि, सुस्सलराजसभाँ ययौ, यत्र स त्रिभिः सुतैः सम्बन्धिभिश्च सह राज्ञा कारागारे निपातितः 1118 ख्रीष्टाब्दे च निहतः।[38]

डामराणामुत्कर्षः—तस्मिन्नेव वर्षे सुस्सलः राजपुरीप्रधानं सोमपालं जेतुं ययौ। आक्रमणे च सफलः अपि तत्सपत्नं भ्रातरं तत्राभिषेक्तुं न शशाक। सप्तमासावधि सोमपालराज्यमुपभुज्य च 1119 ख्रीष्टाब्दावसाने कश्मीर-प्रत्यावर्तनाय बाध्यः अभवत्। अथ असन्मति-प्रदातृभिः प्रेरितैः, विविध-कर-पीडितैः लोहरजनैः विद्रोह उद्घोषितः। राजा तु डामरनायकान् कारायां चकार। तथा च सम्पादिते न खलु अशान्तिः समुत्पन्ना लोकेषु। पृथ्वीहरनामा एको वीरडामरः घाटी-पूर्वभाग-सीमान्तनायकानां संघमेकमकार्षीत्। 1120 ख्रीष्टाब्दस्य वसन्ताच्च विद्रोहिणाँ डामराणामुत्कर्षः सामान्यः अजायत। तदातंकपीडितैः द्विजैः प्रायोपवेशाः प्रारब्धा, सुस्सलस्य सेना अपि विद्रोहिभिः डामरैःपौनःपुन्येन पराजिताः। कुपितो राजा, राजधान्यामन्यमाक्रमणमनुमीय पूर्वम् स्वाधीनान् डामरान् कारायां चकार। अथ मल्लकोष्ठः गिरिमार्गेण भिक्षाचरं कश्मीरेष्वानयत्। नीतिज्ञो यश्च सर्वान् उपद्रव-कर्तॄन् एकसूत्रे विधाय विद्रोहमधिक प्रभावजनकमकार्षीत्। ततः परं समस्तमडले भीषणो विप्लवः समारब्धः।

अत्रान्तरे पृथ्वीहरस्य भीमावस्कन्दात् त्रस्तो भूपतिः सुरक्षायै सकुटुम्बां देवीं लोहरदुर्गम् प्रेषितवान्। श्रावणमासे भिक्षाचरो मल्लकोष्ठममिलत्। सिन्धु-घाट्याम् अचिरेण च विद्रोहिसैनिकैः वृत्तं निर्माय श्रीनगरं परिवेष्टितम्। उभयोः सेनयोः घोरं जन्यमजनि। पार्थिवश्च साहसेन राजधानीं ररक्ष। वीरा डामरा स्वपराक्रमेण राजसैन्यं न पराजेतुमशक्नुवन्। अन्ये च एकस्मिन् रणे अपि पंचाशदुत्तरशतद्वयं विद्रोहिणः भूमिं चुचुम्बुः।

सुस्सलः अपि अनारतं रणेन दुर्बलो जातः, तत्दुर्बलतां, राज्ये चाशान्तिमनुभूय ब्राह्मणाः प्रायोपवेशतत्परा बभूवः। सेनानायका अपि विश्वासघात-संलग्ना अदृश्यन्त। विद्रोहिणश्चापि विप्लवकांक्षिणः अजायन्त। अन्ततो गत्वा स्वीयैरेव नगरस्थैः सैनिकैः सुस्सलः स्वात्मरक्षायै बाध्यः कृतः। 1120 ख्रीष्टाब्दस्य च मार्गशीर्षमासस्य षट् तिथौ स कैश्चित् विश्वस्तपरिजनैः परिवृतः श्रीनगरं तत्याज, मार्गे प्राप्तान् नैकसपत्नान् पराजित्य च कथंचित् लोहरं प्राप। गते च तस्मिन् अधिकारिणः, डामराश्च भिक्षाचरं नृपं चक्रुः।[39]

---

(38) 8–560, 81 से 601, 605।
(39) 8–661, 77, 97 से 717, 23, 49, 68, 807 से 827।

**भिक्षाचरः**—निसर्गतःकामुकः, राजकर्मणि शून्यानुभवो, भिक्षाचरः राजसिंहासनमारुह्य राज्यसुखान्युपभोक्तुं तत्परः अभवत्। विषयभोग-संलग्ने च तस्मिन् डामराणां प्रभावः अपि सततं प्रवर्धमानः अदृश्यत। समस्तः अपि लोकः तत्करुणामकामयत। राज्ये तु राज्यसत्ता वस्तुतो विरोधिसचिवानां करे अवर्तत। अथ डामरनायकयोः राज्यलुब्धकयोः पृथ्वीहरमल्लकोष्ठयोः अन्योन्यं वर्धमानो द्वेषः परिणामे कलहे परिवर्तितः। तेन च समस्तमंडले शासनकार्येषु संशयः प्रादुरभूत्। व्यापारः सबाधो रुद्धगतिश्च बभूव। दीन्नाराः शून्यप्रचारा अभवन्। एतदन्तरे एव नृपतिः स्वप्रधानामात्यं बिम्बं राजपुर्यध्वना सुस्सल जेतुं लोहरं प्राहिणोत्। अत्रान्तरे राजपुरीशः ससैन्यः सोमपालः, एकं च विशालं तुरुष्कबलं सल्लारविस्मयनायकत्वे तत्सहायतायै समाययौ। 1121 खीष्टाब्दे वैशाखमासे, लोहरस्य दक्षिणे भागे सुस्सुलः पर्णोत्सलुण्ठकानमिलत् समूलं च तान् चिच्छेद। परित्यक्त-बिम्बश्च, काश्मीर-सैनिकैः प्राप्तसहायः असौ अचिरादेव कश्मीर-विजयाय प्रतस्थे। भिक्षाचर-शासनादसन्तुष्टाभिः तत्रत्याभिः प्रजाभिस्तु सः सोत्कंठं प्रातीक्ष्यत। द्विजपर्षदः पुरोहित-सहचराः नृपविरोधे प्रायोपवेशान्यारेभिरे वराकं च तमधिचक्रुः। हुष्कपुरात् त्वरया प्रस्थितः भिक्षाचरेण चाप्रतिरुद्धः पुनरपि प्रायेण षण्मासानन्तरं 1121 खीष्टवत्सरस्य ज्येष्ठमासे राजधानीं प्राविशत्।[1]

**सुस्सलस्य पुनः सिंहासनारोहणम्**—(1121–28 खी०) वहिष्कृतो भिक्षाचरः पृथ्वीहरस्य संरक्षणे सोमपालसीमां प्रतस्थे तत्र च पुष्यनाडाख्ये स्थाने स्थितिं चकार। कतिपय-दिवसापगमे तस्मात् स्थानात् स नूतनं विद्रोहमघोषयत्। सुस्सलेनाविजितानां केषांचित् डामराणां साहाय्यं लब्ध्वा राजसेनायामाक्रमणमकार्षीत्। विजयेश्वरे च तां पराजिग्ये। विजितै र्डामरैः विजयेश्वररणात् पलायितानां शरणं चक्रधराख्यं विख्यात-मन्दिरं दग्धम्। अनेन दुष्कृत्येन भिक्षाचरस्य दुर्भाग्यमधःपतन च प्रारब्धम्।[2]

**भिक्षाचरेण समं समरः**—वृत्तेनानेन प्रारब्धेषु युद्धेषु भिक्षाचरः स्वीयां रणचातुरीं प्रादर्शयत्। किन्तु दैवात् बहुशः अरीन् विजित्यापि, न खलु निर्णायकं सुपरिणाममवाप। स्वार्थान्धास्तदधीनाः सहचराश्च डामराः सततं प्रवर्तमाने गृहकलहे एव स्वलाभमनुभूय तत्कृते प्रायतन्त। डामराणामियं स्वार्थश्रीः सुस्सलायार्थकरी बभूव। स च भिक्षाचरं शीतकाले पुनरपि पुष्यनाड प्रति पलायनाय बाध्यमकरोत् तं च पराजित्य सुस्सलः दुष्टेभ्यः कपटमानसेभ्यः सचिवेभ्यः सेनानायकेभ्यश्चात्मानं मोक्तुं तान् तत्पदेभ्यः अपसार्य दैशिकानधिकारीन् नियुयुजे। अथ कियत्कालमतिवाह्य 1122 खीष्टाब्दस्यारम्भे निजानुयायिभिरनुक्तो भिक्षाचरः प्रत्यावर्तत। विजयेश्वरान्तिके परिमितं लाभं प्राप्यापि सुस्सलः श्रीनगरं प्रति पलायितवान्। अध्वनि च गम्भीरासरितस्तटे, महतीं हानिं प्राप्नोत्।

---

(1) 8–849 से 85, 93, 94, 98, 99, 94 :
(2) 8–969 से 995।

तदनन्तरमेव सपत्नैः श्रीनगरं परिवेष्टितम्। तत्र च स्थितः सुस्सलः पंचनद-प्रदेशात् कश्मीराणां दक्षिणे समायातानां राजपूतवंशीयानां स्वानुयायिनां भक्तेरुत्साहस्य च कारणात् स्वप्राणरक्षामकार्षीत्। अथ डामरगणैः दक्षिणपूर्वदिग्भ्यां कृतेन भीषणेनाक्रमेण गोपाद्रिगिरौ भिक्षाचरः पराजयं प्राप।

अनेन डामराणां शक्तिर्न क्षीणाभवत्। किन्तु सुस्सलः सुरक्षायै कार्यम् समरं च विधातुं बाध्यो बभूव। इत्थं चावशिष्टो वत्सरः कलहेष्वेव व्यतीयाय।[3]

**श्रीनगरे आक्रमणम् दुर्भिक्षश्चः**—(1123 ख्री०) आगमी 1123 ख्रीष्टाब्दः प्रदेशे महतीः विपद आनिनाय। वसन्ततौ डामरसैन्येन पुनरपि एकत्रीभूय ससाहसं श्रीनगरं परिवेष्टितम्। महासमरस्तदा प्रावर्तत। डामराणां त्रासस्तु अजस्रमवर्धत। तैः ज्वालितेन प्रचंडेनाग्निना समस्तमपि नगरमेकपदे ज्वालाभिर्वेष्टितम्। अस्यां च शोचनीयायामापदि प्राप्तविजयः निराकृतडामरः अपि सुस्सलः स्वात्मानमन्यया महत्यापदा ग्रस्तं ददर्श। अग्निना समस्ता अपि, नागराणां कृते संगृहीतधान्याः अन्नभंडारा भस्मसात् कृताः। डामराणामुपद्रवात् मार्गाच्छादनात् नवान्नविलुण्ठनाच्च घोरो दुर्भिक्षः समाययौ। बहवः प्राणिनः प्राणान् तत्यजुः। दुःखदेन प्रजानाशेन पीडितः परितप्तः, स्वप्रियाया राज्ञा माधमंजर्याश्च प्राणत्यागेन विषण्णो नृपतिः सन्यास-विचारमकार्षीत्। ज्येष्ठतनयं जयसिंहं च लोहराचलात् समानीय, 1123 ख्रीष्टसंवत्सरे आषाढमासस्य प्रथमदिवसे राज्ये अभ्यषेचयत्। किन्तु दैवविमोहितः स सुस्सलः लोकपरम्परानिर्वाहायैव केवलं पुत्रं नृपतिं चकार, राज्याधिकारस्तु वस्तुतः तस्यैव हस्ते अभवत्। अत्रान्तरे सिंहासनमारूढे जयसिंहे अशेषा अप्युपद्रवा दुर्भिक्षाश्च शमं ययुः। अथ समग्रप्रान्तेषु प्राप्त-प्रभावस्य सुस्सलस्य मनसि पुत्रायाविश्वासः, वैरि-संश्रिते च निरन्तरं विश्वासः प्रादुरभूत्। किंचित्कालानन्तरं स भीषणमाहवं विधाय नैकसपत्नान् नामशेषानकार्षीत्। भिक्षाचरः अपि निराश्रितः सन् पलायांचक्रे शमालायां च स्थितिं चकार।[4]

**उत्पल-षडयन्त्रः**—सुस्सलः स्वदुर्जयशत्रोः भिक्षाचरस्य संहारधिया, उत्पलेन समं गुप्तसन्धिं विदधौ। स वस्तुतो देवसरसस्थितस्य सुस्सलद्रोहिणः शक्तिमतः टिक्कस्य गूढचरः सहयोगी चावर्तत। राज्ञा अधिगत-सम्मानः, कोषाध्यपदे नियुक्तश्चोत्पलः भिक्षाचरस्य वधाय वचनमदात्। वस्तुतस्तु स एव भिक्षाचराय राज्ञः अभिप्रायं निवेद्य सुस्सलस्यैव वधायावसरान्वेषी बभूव। भूपस्तु तं वैरिणमेव स्वधनिष्टसुहृदममन्यत। पार्श्ववर्तिनः अनुजान् चापि दूरीचकार। सेवकैः रक्षकैश्चानावृत्तः सः उत्पलप्रभृतीन् षडयन्त्रकर्तॄन् ससम्मानं गृहीतवान्। अथैकस्मिन् प्रासादे, फाल्गुनमासस्यामावस्यायां 1128 ख्रीष्टाब्दे अनायासेनैव तैः द्रोहकारिभिः स नृशंसं

---

(3) 8-1028, 32, 40 से 48, 62, 63, 83 से 87, 1104।

(4) 8-1154, 69, 70, 1206 टि. 7, 27 से 46, 56 से 64।

निहतः। संख्यायां न्यूना अपि उत्पलपरिकरा राजसैन्यं विद्रुतं भग्नाशं च विलोक्य निहतस्य सुस्सलस्य शरीरं शिरश्च नीत्वा सहजमेव पलायांचक्रिरे।[5]

**जयसिंहः**—राजतरंगिण्याः सूक्ष्माध्ययनेन प्रतीयते यत् पितृवधसमये जयसिंहः राजधान्यामेव पितुः प्रासादात् दूरस्थे प्रासादे अवर्तत। जनकवध-विषण्णश्चात्मानम-सुरक्षितं विचिन्त्य गर्गचन्द्रस्योत्तराधिकारिणं पंचचन्द्रं लोहरात् सहायतार्थं आहूतवान्।

इतस्तु वधादन्येद्युरेव भिक्षाचरः श्रीनगरजयाय प्रस्थितः। किन्तु भीषणेन हिमपातेन मार्गे एव तस्य रोधः अकारि। अत्रान्तर एव पंचचन्द्रः जयसिंहान्तिकमा-जगाम। अकस्मादेव च भिक्षुचरसैन्येषु कृतेनाक्रमणेन तस्य सैन्यव्यवस्था तेन विच्छिन्ना। तत्पलायनेन च राजा दृढमूलः सन् राजधानी सर्वथा स्ववशे चकार।

किंच सुस्सलस्य दूरस्था आप्ता अधिकारिणः अपि स्वामिवधमाकर्ण्य तत्तनय-सहायतार्थं ससैन्या राजधानीं प्रतस्थिरे मार्गे च विहितोपरोधान् डामरान् पराजित्य नगरं च प्राप्य राज्ञः स्थितिं बद्धमूलां चक्रुः।

हिमपाते समाप्ते भिक्षाचरः पुनरपि संगृहीतैः डामरैरनुयातः श्रीनगरं प्रययौ युद्धधिया, किन्तु सुस्सल-सेनानायकेषु मूर्धन्यः सुज्जिः गम्भीराया नद्यास्तटे भीषणं रणं कृत्वा महत्तत्सैन्यं चिच्छेद। अवशिष्टा भिक्षुसैनिका पलायितवन्तः। सद्य एव राजसैन्यमपरमपि विजयं प्राप। जयसिंहस्य प्रधान-परामर्शदाता लक्ष्मकः अनेकान् प्राप्तप्रभावान् डामरान् सत्कारलोभं प्रदर्श्य स्वामिपादेष्वानिनाय। अथ सर्वतः पराजितो भिक्षचरः कश्मीरेभ्यो निर्ययौ।

सुस्सलवधानन्तरं जयसिंहः स्वात्मानं सुव्यवस्थित-काश्मीरराज्यस्य नरपतिं चकार। किन्तु राजान इव प्रभावशलिन उपद्रवनिरता डामरा अशान्ता एवातिष्ठन्। भूभृतः प्रजानां च साधनस्रोतांसि आगन्तृभिः संघर्षैः कलहैश्च प्रायेण व्याकुलयन्ति स्म।[6]

**काश्मीराणां दशाः**—जयसिंह-चरितमुपवर्णयितुकामः कल्हणः साधु सविश्वासं च प्रत्यपादयत् यत् शासकरूपे तच्चरितस्य प्रगतिकार्याणां चोल्लेखात् पूर्वम् राज्या-रम्भकाले राज्यस्य सर्वविधदशानामध्ययनमनिवार्यम् ननु। सुस्सल-समये संजाता क्रान्तिर्मल्लस्य परिवारं सिंहासनारूढं कृतवती। लघवः महन्तश्च क्षेत्रपतयः (जमींदार इति भाषा) स्वतन्त्रतां प्रापुः। तेन च भूपतेः शक्तिः शासनाधिकारश्च किंचित् क्षीणतां नीतः। डामराणां दुर्गेषु परिणतानि (कौट्टिकृतानि) उपवेशन इति नाम्नो-ल्लिखितानि वेश्मानि मध्ययुगस्य अग्रहारिणां (जागीरदार इति भाषा) पर्वतकोट्टानीव बभूवुः। कामं प्रत्येकमग्रहारी ग्रामयुगलस्यैवाधिपतिरवर्तत, तथापि तत्रोत्पन्नश्चोपद्रवः पार्थिवेन केवलं सैन्यबलेनैव शमयितुमशक्यत। इयमवस्था च कल्हणानन्तरमपि

---

(5) 8–45 से 70, 87 से 1348।

(6) 8–1349 से 83, 92 से 96, 1402 से 25, 97 से 1516, 23 से 25, 44 से 47।

शतशो वर्षाणि यावत् मुगलकाले अपि अवातिष्ठत् । आंग्लानां शासनकाले अपि सैव स्थितिरासीत् । सुस्सलनृपतेः षोडशवर्षाणां शासन-समयः एतेषां भूस्वामिनां (जमींदारेति भाषा) शक्तिनैव शक्तिभंगस्य साफल्ये व्यतीयाय तथापि सुस्सलस्य सुदृढ़ा शक्तिः समूलं तन्नाशाय न खलु प्राभवत् । जयसिंहः वस्तुतः प्रवर्तमानस्य द्रोहिविद्रोहस्य मध्ये पित्रा प्रदत्तमुत्तराधिकारं प्राप्य राज्यासनमारुरोह ।[7]

**जयसिंहस्य नीतिः**—जयसिंहः भीषणावस्थानामपशकुनेष्वपि स्थायित्वमाप्नोत् । सप्तविंशति-वर्षाणि च स्वशासनं सुरक्षितं चकारेत्यत्र प्रधानं हेतुः तच्चरितेन समं संयुक्ता नीतिरस्ति । वयं पश्यामः यत् नैकविध-संघर्षेषु जयसिंहः छलबहुलां नीतिमादधे । कविः बहुशः नृपतेः शौर्यकर्माणि प्रशशंस । सहैव च स्वाधिकार-रक्षणाय षडयन्त्रनिर्माणे व्यूहरचनायां च तस्याद्भुतकौशलं कपटनीतिं च पौनः पुन्येनावर्णयत् । एतैः गुणैः समं वयं राजनि दृढ़तां धीरतां वा, सपदि सुदृढ़-निर्णयानुसन्धान-प्रवृत्तिं वा नाधिकं प्राप्नुमः । अनेनैव निमित्तेन नैककर्मसु राजा लाभं वीक्ष्यापि तत्प्रापणे न साफल्यं लेभे । नापि तस्य गम्भीर-राजनीतिकोद्देश्यं पुरतः समाययौ ।

**भिक्षाचरस्य प्रत्यागमनम्**—जयसिंह-शासनस्यारम्भकाले लक्ष्मकः प्रधानाधिकारी बभूव । स वै कतिचिन्मासेभ्यो डामराणामुपद्रवाभावतया राज्ये शान्तिस्थापने साफल्यं प्राप । अस्मिन्नेव शान्ति-काले सुस्सलहतक उत्तलो निगृहीतो निहतश्च । तस्यैव वत्सरस्य शरदर्तौ नवा-नवा विपदाः प्रादुर्भूताः । राज्यगृध्नु भिक्षाचरश्च दक्षिणदिशस्त्वरयाभियानं कर्तुं भूयः प्रत्यावर्तत ।

वीरवरेण सेनाधिपेन सुज्जिना प्रयुक्तैरुपायैरुपद्रवाउपद्रविणश्च शमं ययुः । भिक्षाचरश्च पुनः प्रधावितः । किंचित् कालानन्तरं सुज्जिरपि विद्वेषिणः लक्ष्मकस्यान्येषां च राजसभाधिकारिणां प्रभावेन, क्रियमाणमात्मनस्तिरस्कारमनुभूय देशान्निष्चक्राम । अथ च भिक्षाचरेण, अन्यै विद्रोहिभिश्च जयसिंहनिपातनाय निबद्धया योजनया केचित् प्रच्छन्नचराः राज्यसभां प्राप्नुवन् ।[8]

**भिक्षाचरस्य हत्या**—(1130 खी०) संघर्षायाधीरो भिक्षुचरः राज्ञे कृतद्वेषैरनुकृतः कश्मीर-सीमां प्रति प्रतस्थे । स्वानुयायिनां डामराणां च विद्रोहावसरं प्रतीक्षमाणस्तस्थौ । अत्रान्तरे राज्ञा जयसिंहेन प्रेषितानीकिनी तं खशनरेशेनाधिकृते दक्षिणदिग्भागे बालशाला-गिरौ पलायितुं बाध्यमकार्षीत् । तत्र चापि राज्यसैन्यैः परिवारितः आक्रान्तश्च, अन्ततः 1130 खीष्टाब्दस्य वसन्तर्तौ स लक्ष्मकप्रेरितैः खशडामरैश्च निर्दयं निहतः । शूरवीरो भिक्षाचरः खशडामरैराक्रमितः अपि एकाकी सोत्साहं सशौर्यम् युद्धमकरोत् । स्ववीर्यमेव प्रदर्शयन् च तत्रैव प्राणान् तत्याज । स षष्ठाब्दासितज्येष्ठदशम्यां नृपतिर्हतः ।[9]

---

(7) 8–1548 से 83 ।

(8) 8–1584 से 87 अथ भिक्षाचरो गृध्नुर्भूयोऽप्युपाययौ । 1625 से 60 ।

(9) 8–1662 से 66, 1702 से 75 ।

**लोहराचले-विद्रोह;**—महामात्याः मृतस्य भिक्षाचरस्य मुंडं विजयक्षेत्रस्थितस्य राज्ञः संमुखे आनिन्युः। तमवलोक्य प्रमुदितः पार्थिवः निःसपत्नं निष्कंटकं च राज्यं मत्वा, यावत् क्षपामात्रमेव निनाय तावन्नूतनारेः लोठनस्योद्गमनं शुश्राव। लेखहारमुखात्। नवः शत्रुरयं लोठनो नाम भ्राता सल्हणेन समं सुस्सलेन पूर्वम् बन्दीकृतो बभूव। सल्हणे च मृते एकाक्येव कारागारे अतिष्ठत्। किन्तु एकस्यां निशि लोहराचल-दुर्गस्याधिकारिणां षडयन्त्रेण विश्वस्ताधिकारिणां चाभावादसौ कारागारात् मुक्तिं प्राप। सपद्येव चाभिषिक्तो लोहरस्थं सुस्सलकोषं हस्तगतं चकार।[10]

**लोहरे अधिकारः**—(1130 ई०) जयसिंहः सपत्नाधिकृतं सुदृढ़दुर्गम्, तन्माध्यमेन च जायमानामापदमनुभूय लक्ष्मकनेतृत्वे विशालं बलं लोहरग्रहणाय प्रेषितवान्। राजसैनिका दुर्गम् परितः पर्यवारयन् तथापि नहि कश्चिल्लाभः समजनि। अथ भीषणेन ग्रीष्मसंतापेन, राजपुरीतश्च सबलं सुज्जेरागमनेन लक्ष्मकः ससैन्यः कश्मीरान् प्रति प्रस्थानाय बाध्यः अभवत्। कल्हणेन सविनोदं वर्णिते कातरता-विभीषिकाणां कश्मीरिकाणामेतस्मिन् विद्रवे लक्ष्मकः शत्रोः कारागारे निक्षिप्तः। पलायिता बहवो भटा मार्गे एव ग्रीष्मेण मृताः। केचिच्च कश्मीरान् प्रापुः। लक्ष्मकः अपि प्रभूतधनराशिं वितीर्य कथंचित् कारागारात् विमुक्तः सन् कश्मीरान् ययौ राज्ञश्च प्रधान-परामर्शदातृपदे कार्यभारेभे।[11]

**लोहरशासको लोठनः मल्लकार्जुनाभिषेकः च**—इत्थं च लोहरे कृतस्थितिः लोठनः सुज्जिं सचिवमकार्षीत्। कतिपयदिनानि च तत्साहाय्येन लोहरवशीकरणाय जयसिंहेन प्रयुक्तैः षडयन्त्रैः सुरक्षितः सन् सुस्थिरां स्थितिं दधौ। किन्तु अग्रिमे एव फाल्गुने (1131 ई०) जयसिंह-पितृव्यजस्य मल्लार्जुनस्य पक्षे स्वीयैरेव कृतेन षडयन्त्रेण लोठनो राज्यात् च्यावितः मल्लार्जुनश्चाभिषिक्तः। **मल्लार्जुनः कोट्टराज्ये संहतेरभ्यषिच्यत**। स खलु दुर्बलः अस्थिरबुद्धिशासकश्च प्रमाणितः अभवत्। लोहरे च सुस्सलभूभृतार्जितं विशालकोषराशिमतिमात्रं वृथैव व्ययीचकार। तच्चाशेषोदन्तमाकर्ण्य जयसिंहः तज्जयाय महत्सैन्यं चित्ररथसेनापत्ये प्रास्थापयत्। मल्लार्जुनस्तु तदागमवृत्तेन भीत एव करदातृत्वमंगीचकार। अथापि तत्पितृव्यजस्य पौनः पुन्येन कृतैराक्रमणैः तत्स्थितिः संकटापन्ना बभूव। इतस्तु प्रच्यावितो लोठनो डामरनायकस्य कोष्ठेश्वरस्य साहाय्यं प्राप। राज्ञः तत्पितृव्यजस्य च मध्ये प्रवर्तमानेन कलहेन लब्धलाभः स लोहराचले स्वस्थितिं दृढामकरोत्। राजा जयसिंहः तस्य प्रभावमाकर्ण्य तं विजित्य च लोहरदुर्गवशीकरणाय भूयः अपि प्राप्तसाचिव्य सुज्जिं ससैन्यं प्रेषयामास। मल्लार्जुनः लोहरकोट्टात् राजपुरी-सीमां पलायांचक्रे।[12]

---

(10) 8–1779 से 96।

(11) 8–1865 से 73, 79 से 94, 1918।

(12) 8–1924, 34 से 38, 41 से 43, 47 से 49, 63, 68, 87, 88, 89 से 2024।

**सुज्जेः हत्या**—(1133 ई०) सुज्जिः स्वशौर्येण लोहरन्तु विजिग्ये किन्तु नाधिकं कालं यावत राज्ञः कृपापात्रं प्रशंसापात्रं चातिष्ठत्। सुज्जये धूनद्वेषाणां केषांचित् सभासदानां कर्णेजपत्वेन स भूपतेरप्यविश्वासपात्रं बभूव। नृपो गुप्तषडयत्रेण तं हन्तुमियेष। तज्ज्ञात्वा सुज्जिः रक्षणोपायतत्परः अभूत्। अत्रान्तरे एव राज्ञा नियुक्तेनैकेनाधिकारिणा स नृशंसं निहतः। केचित् सुज्जिसम्बन्धिनस्तन्मित्राणि च भूभृतो विरोधमकार्षुस्ते अपि च तथैव हताः। सुज्जिहन्तकाय भूपेन नगराधिकारिपदं वितीर्णम्। षडयन्त्रे सहायकः संजपालश्च प्रधानसेनापतिः कारितः।[13]

**मल्लार्जुनस्याक्रमणं तन्निग्रहश्च**—जयसिंहस्तथाविधैरेव साधनैः बलिनं डामरं कोष्ठेश्वरं हत्वा ततः अपि मुक्तिमियेष। किन्तु तद्धत्यायाः प्रयासो विफलीबभूव। तथापि स्वल्पेनैव सघर्षेण कोष्ठेश्वरो रणक्षेत्रत्यागाय बाध्यो बभूव। कुरुक्षेत्रयात्रायाः समये च स नरपतिसपत्नं मल्लार्जुनं प्राप्नोत्। अथोभावपि कश्मीरप्रदेशे विद्रोहं चिकीर्षू आस्ताम्। तदर्थम् च एकस्य दुर्गस्य पार्श्वस्थे विशालवने तावधिकारं चक्रतुः। संजपालस्तु राजसैनिकमुखैस्तयोः सैन्यगतिविधिमाकर्ण्य यवनकैः सह तत्प्रतिरोधसज्जामारेभे। तज्ज्ञात्वा कोष्ठेश्वरः पुनरपि पार्थिवेन समं सन्धिमकार्षीत्। मल्लार्जुनश्च दक्षिणदिशि पलायितवान्। पलायनपरश्चासौ लोहरस्य सावर्णिकग्रामे एकेन जागिकाख्येन ठक्कुरेण निरुद्ध। चकितो भग्नाशो भीतश्च मल्लार्जुन आत्मसमर्पणकरोत्। 1135 खीष्टाब्दस्य शरदर्तौ च श्रीनगरे स कारायाँ निपातितः।

तदनन्तरं जयसिंहः प्रस्थानोपायैः प्रदर्शितपराक्रमः कोष्ठेश्वरं तस्य भ्रातरं चतुष्कं चापि जग्राह, जघास च, किंच कल्याणपुरवासिनं विजयाख्यं डामरं निहत्य ततः अपि मुक्तिं प्राप। अत्रानन्तरे जयसिंहस्य प्रभावशाली सचिवश्चित्तरथः अपि द्युलोकं जगाम। तस्योत्तराधिकारी शृंगारश्च तत्पदं प्राप्य श्रीभोगभागितां ययौ। शृंगारस्य शासनप्रणाली प्रभावकारिण्यभूत् अत एव तदनन्तरमागतेषु संवत्सरेषु निःसपत्नाः कश्मीररप्रजाः सर्वविध-सौख्यानि प्रापुः।[14]

**जयसिंहस्य पवित्राणि निर्माणकार्याणि**—कल्हणः समसूचयत्यदस्मिन् निरुपद्रवे शान्तिकाले जयसिंहः तस्य महासचिवाश्च विविधानि पवित्राणि निर्माणकार्याणि चक्रुः। कविः पौनः पुन्येन भग्नावशेषाणां मठानां च समुद्धाराय राजानं प्रशशंस। प्रायेण सघर्ष-रीतिते सीमितसाधने अपि देशे नूतनानां मन्दिरप्रभृति-भवनानां प्रतिष्ठापनं वस्तुतो वन्दनीयमेवाभूत्। तच्च कविरपि स्वलेखिन्या प्रकटीचकार। राज्ञः अमात्यै र्निमितानां निर्माणानामुल्लेखा अन्यग्रन्थेषु नैव दृश्यन्ते तत्तेषां राजतरंगिण्यामुल्लेखो वर्णन-मात्रमेव प्रतिभाति[15]

---

(13) 8-2029 से 2152, 63।

(14) 8-2220 टि० 63, 64, 69 से 71, 78, 89, 81, 2312 से 18, 53, 55।

(15) 8-2400 से 2444, स्टी० भा० 1 पृ० 126।

**विदेशैः सहसम्बन्धः**—जयसिंह-राज्यस्य समृद्धकाले कविः यैः विदेशैः दूरस्थराज्यैः समं नृपस्य सम्बन्धमाह तत्पुष्टिः ताम्रपात्रैः शिलालेखैश्चापि जायते। कविना मंखेन वर्णितायाः जयसिंह-मन्त्रिष्वन्यतमेन लंकारेण समायोजितायाः सभाया वर्णनेनापि विदेशिभिः समं सम्बन्धः प्रमाणितो जायते। सभायां समुपस्थितेषु, कान्यकुब्जनरेशस्य गोविन्दचन्द्रस्य राजदूतस्य, कोंकणदेशस्य सल्हाणराजकुमारस्य अपरादित्यस्य चोल्लेखो विद्यते। उभावपि इमौ शासकौ शिलालेखैः ज्ञातौ स्तः।[16]

**दरदानां विरोधे आक्रमणम्**—1144 ख्रीष्टाब्दे शृंगारः अपि ययौ। तन्मृत्योः पूर्वम् जयसिंह-राज्यस्य समीपवर्तिनः दरददेशस्य नृपतौ यशोधरे स्वर्गगते, समुत्थितेन उपद्रवेण लाभं प्राप्य, स्वराज्य-विस्तारमैच्छत् राजा। दरददेशजयाय कृतेनासफलप्रयासेन विढ्डसीह इत्याख्यो नूतनो दरदशासकः उपद्रवाय समुत्पादितः।[17]

**लोठनस्योद्गमनं विस्फोटश्च**—अथ दारदैः प्रेरितः पुरातनो विप्लवकारी षडयन्त्रकर्ता च लोठनः 1143 ख्रीष्टाब्दे कर्णाटजनपदे शक्तिशालिना डामरेण अलंकारचक्रेण समं सन्धिमकार्षीत्। दरदनृपतेः सम्बन्धी सः लोठनः दरदां सहायतां प्राप्य पुनरपि साक्षात् विद्रोहाय समुत्थितः। शनैः शनैः किशन-गंगाघाट्यां समस्ते अपि कश्मीरप्रदेशे विद्रोहा उपद्रवाश्च समारब्धाः। तदवलोक्य च जयसिंहस्तच्छमने कृतसंकल्पो बभूव। सेनापतिमुदयं च विद्रोहशमनाय विद्रोहि-निग्रहाय च प्रैषयत्।

**शिरः शील-दुर्ग-परिवेष्टनम् लोठननिग्रहश्चः**-जयसिंहस्यार्धभ्रात्रा (पितृव्यजेन) सल्हणतनयेन भोजेन समं, लोठनः राजसैन्ये समागते, सिन्धुमधुमत्योः मध्यस्थितस्य, अलंकारचक्रस्य शिरः शीलाभिधे पर्वतकोट्टे आश्रयं जग्राह। अस्मिन् सुदृढे कोट्टे लोठनस्तदनुयायिनश्च राजसैन्यैः कौशलेन पर्यवार्यन्त। इदं खलु चिरस्मरणीयं साहस-संकुलं परिवेष्टनं कल्हणेन सविस्तरं वर्णितम्। कष्टप्रदे ऋतौ नैकविधा आपद उत्तीर्य उदयद्वितीयो धन्यः अपि अग्निदलदलनं विधाय परितो दुर्गं परिवेष्टितवान्। दुर्गाधीशः अलंकारचक्रः लोठनकारणादात्मानमेवासुरक्षितं मेने। इतस्तु कोट्ट-वेष्टनं-सततमवर्तत शनैः शनैः दुर्गे जलस्य भोजनस्य च न्यूनता समुत्पन्ना। राजसैनिकैरशेषा अपि जला-गमनोपाया वृथा कृताः, समग्रमार्गाश्चावरुद्धाः। विद्रोहिषु सर्वाधिकं बलशाली कार्य-व्यग्रश्च भोजः कथंचित् पलायन-प्रयासमकार्षीत्, किन्तु सर्वतो दुर्गं परिभ्रमतां भटानां सावधानतया न साफल्यं लेभे। पुनश्चदुर्गशरणमेव ययौ। अथ दुर्गपरिवेष्टनेन-परितप्तः समस्तकृत्येषु विहितविघ्नः दुर्गाध्यक्षः अलंकारचक्रः लोठनं विग्रहराजं च विक्रीय कोट्टवेष्टनमपसारयितुमियेष। भोजं तु स भविष्यकाले स्वलाभायैव स्वसमीपस्थं चकार। इत्थं च लोठन-विग्रहराजौ (1144 ख्री०) फाल्गुन-मासे जयसिंहस्याधीनौ संजातौ।[18]

भोजस्तु अलंकार-चक्रस्य कष्टकरं मनोभावं विदित्वा तस्य दुर्गात् पलायांचक्रे क्लेशदायिनीं च यात्रां परिसमाप्य हेमन्ततौं हिमाच्छन्नानि गिरिशिखराण्युल्लंघ्य

---

(16) 8-2453। (17) 8-2454 से 67।
(18) 8-2481 से 90।

सुरक्षित एव दरदसीमां संप्राप्तः तत्र च राजोचितोपायैः साभिनन्दनं विड्डसीहेन स सत्कृतः। अथ जयसिंहस्यैकः भूतपूर्वः अधिकारी राजवदनं भोजस्याग्रे राज्ञो विरोधे स्वात्मनः पक्षे च विद्रोहं कर्तुं प्रस्तावमकरोत्। स चापि सामोदं तं स्वीचकार। अचिरेण एव त्रिल्लकचतुष्क-प्रभुतयो डामरा अपि विद्रोहतत्परा बभूवुः।[19]

**भोजस्य-अभियानम्**—एकतस्तु भूभृतः अमात्याः विद्रोहशमनाय प्रयासमकार्षुः, अपरतस्तु विप्लवकारिणः समस्ते अपि प्रदेशे, अव्यवस्था-समुत्पादने संलग्ना बभूवुः। डामरैः म्लेच्छनायकैश्चानुकृतो भोज उत्तरदिशो राजकिरीटमाजगाम। राजवदनस्तु आक्रमणोद्यत-सेनाप्रस्थान-मार्ग-दर्शकः आसीत्। सत्वरमेव चमूः महापद्महाजलाशयं (सम्प्रति वूलर झील) प्राप। अथान्यथा-परामर्शजनित-दारदाक्रमणेन भ्रान्तिर्जनिता। यदा च राजवदनस्य सपत्नैः नागैस्तस्य विरोधे विद्रोहः प्रारब्धः, तदा भोजस्यानुकारिणः योद्धारः निजजन्मस्थल-पर्वतान् परावर्तिताः। भोजञ्च भूयः अपि डामरस्यालंकार-चक्रस्य हस्ते ददुः। इदमखिलं वृत्तं 1144 खीष्टाब्दे शरदतौ समजनि।

राजवदनस्यांशिकविजयेन त्रिल्लके अन्येषु डामरेषु च द्वेषाग्निः प्रादीप्यत। भिन्नजातिं तं ते नाविश्वसन्, नापि स्वनायकममन्यन्त। ते वै सुस्सलपरामर्शदातुः पृथ्वीहरस्यात्मजं लोठकं, राजविद्रोहे नायकं चक्रुः। स च दक्षिणदिश आक्रम्य जयसिंहस्य महतीं हानिमजनयत्। किन्तु राजभक्तस्य महामात्यस्य रिल्हणस्य प्रयासेन डामराः पराजिताः दारदाश्च पलायितप्राया अभूवन्।[20]

**राजवदन-षडयन्त्रः**—विजयेष्वेषु संपन्नेष्वपि नहि जयसिंह-राज्ये निःसपत्नमजायत। राजवदनः अन्ये च विप्लवकारिणो डामरा पुनरपि अशान्तिवर्धनाय, राजोपरि विजयाय च प्रयतमाना आसन्। राजवदनः स्वकूटानि न समापयामास। छल-कपटनीत्या च राजभृत्येषु भेदं जनयितुमारेभे। शनैः शनैः सः भोजमपि स्वपक्षे कृत्वा क्रमराज्यस्य समीपवर्तिनि खशदुर्गे समस्थापयत्। इत्थं भोजे समागते राजवदनः राजानं दुर्धर्षसाधनानां प्रयोगे असमर्थमकार्षीत्। 1144–45 खीष्टाब्दस्य शिशिरकालः, जयसिंह-राजवदनयोरन्योन्यं कुटिलनीति-प्रयोगष्वेव व्यतीयाय। भोजस्तु उभयथा लाभं प्राप्नोत्। अत्रान्तरे, अधिकं बलशाली राजवदनः स्वभूतपूर्वस्य परामर्शदातुः नागस्यापि सहायतां लेभे। किन्तु अचिरादेव नागः राज्ञः कारायां निपतितः, निहतश्च। तेन च प्रकुपितास्तत्सम्बन्धिनो डामरा राजवदनपक्षमाययुः। अनेन च भीतो भोजः अपि स्वात्मरक्षायै सावधानः सन्, प्रच्छन्नरूपेण नृपेण समं सन्धित्सुरभवत्।[21]

**भोजस्य-समर्पणम्**– कल्हणस्य कथा विस्तरेण जयसिंह-भोजयोः सन्धिविषयमवर्णयत्। राजपुत्रो भोजो निष्कारणमेव, भूपतेः कूटनीतौ विश्वासं कर्तुं न प्राभवत्। अतः सः तस्य प्रधानमहिषीं कल्हणिकां, उभयोर्मध्ये मध्यस्थतामचरितुमियेष। राज्ञी

(19) 8–2494 तथा टि॰ 2641, 2704 से 14, 18 से 32। (20) 8–2761, 92 से 2899, 2909 से 14। (21) 8–2915 से 17, 62 से 70, 87।

च तां प्रार्थनामंगीकृत्य, आत्मसमर्पणं कर्तुं कामं भोजं सभाजयितुं उत्तर-पश्चिमदिशि स्थितं तारमूलकं प्रतस्थे। परिपन्थिनो डामरास्तु नृपभोजयोः संधिं तिरस्कार-कारिणीं मत्वा तद्विरोधं चक्रुः विघ्नोत्पादनाय च बद्धपरिकरा बभूवुः। राजवदनं परितः स्थितास्ते नयविद्रोह-तत्पराः सन्तः समयं प्रतीक्षन्ते स्म। यदा च राजसेना भोजं सत्कर्तुं त्वरया प्रस्थिता डामरवासस्थलं च प्रपेदे, युद्धमनिवार्यं संजातम्। पार्थिवस्य सचिवा आत्मरक्षार्थं अकम्पन्त। अत्रान्तरे पलायनं विधाय भोजः 1145 खीष्ट-संवत्सरे स्वयमेव जयसिंह-शिविरमाजगाम। संघर्षश्च कथंचिन्निरुद्धः। राजा तु स्वसम्बन्धिनं दुर्धर्षं भोजं ससम्मानं राजधान्यां सभाजितवान्। तस्मै राजनारीं, नृपोचितवेषमासनं सदनं च प्रादात्। भोजे राजनि च सन्धिवद्धे सति, डामराणा-मुपद्रवाः प्रशमिताः, उद्गमनप्रयासः अपि भग्नः। वलशाली त्रिल्लको ननु विद्रोहं विधाय पूर्वन्तु संघर्षे किंचित् साफल्यं लब्ध्वापि परिणामे यमसदनमेवागमत्। विद्रोहाय कृतसंकल्पः असौ तावत् ससाहसं सशौर्यञ्च संघर्षमकार्षीत् यावन्न राजानुचरैः परेतपतेः पथः पथिकः कृतः। अथान्ये अपि उपद्रविणः शनैः शनैः निहताः।[22]

**डामराणां पराजयः शान्तिस्थापना च**—क्रमशो नृपः बहून् डामरनायका-नपि यमपुरीं संप्रेष्य, अवशिष्टे राज्यकाले सुखं शान्तिं च प्राप। अस्मिन्नेव समये पार्थिवः स्वशिशुं गुल्हणं लोहरे अभ्यषेचयत्। **श्रीमान् लोहरराज्येऽथ क्ष्मावृषा सोऽभ्यषेचयत्**। तस्य मुद्राः सम्प्रत्यपि सुरक्षिताः सन्ति। अथ कविः केषांचित् राजभक्तानां सेवकानां स्वर्गगमनवृत्तं निवध्नाति। अस्मिन्नेव निरुपद्रवे समये कविः जयसिंहेन सम्पादितानां धर्मकार्याणां तन्निर्मितीनां, तदनुचरैरधिकारिभिश्च कृतानां पवित्रभव-नानां वर्णनञ्चकार। अत्रैव च स्वसमयवर्तिनो मंखस्याप्युल्लेखमकार्षीत्। वर्णनेन प्रतिभाति यत् मंखेन सह तस्य सम्बन्धः अभूत्। कविना वर्णितानि उद्यान-सेतु-मन्दिर-विहार-मठप्रभृतीनि तद्दृष्टानि प्रतीयन्ते।[23]

**जयसिंहस्य परिवारः**—राजतरङ्गिण्या उपसंहार-श्लोकेषु कल्हणः जयसिंह-राज्ञाः रड्डादेव्याः तयोश्च चतुर्णां पुत्राणां वर्णनं व्यदधौ। शिशवश्च ते गुल्हण-जयापीड-ललितादित्य-यशस्कर-नामानि दधुः। जयसिंहस्य सुतासु मेनिलाभिधा राज-पुर्याः युवकं प्रधानं भूपालमुपयेमे। राज्यश्री-तनयायाः पतिः समीपवर्ति-पर्वतेष्वेकस्य निवासी आसीत्। उरशा-हजाराप्रभृतिषु प्रदेशेषु आक्रमणं विधाय स चात्मानं प्रसिद्धं चकार।

**उपसंहारः**—एतावन्मात्रमेवेतिवृत्तं कश्मीरेतिहासात् कविना लिखितं स्वकृतौ। राजतरङ्गिण्याः समाप्ति-समये (1149–50 खीष्टाब्दे) राज्यं कुर्वतः जयसिंहस्य द्वादशो वत्सरो बभूव। जोनराजस्य कृतिना वयं जानीमो यत् एतदनन्तरं पंचषा संवत्सरान् जयसिंहः राज्यासनमलञ्चकार।

---

(22) 8–3018 से 60, 63 से 3179, 3208 से 3315।
(23) 8–3301, 34 से 37, 41 से 70।

चतुर्थः तरंगः

# भारतीय--संस्कृतिः

संसारस्य समस्त-संस्कृतिषु भारतीय-संस्कृतिः मूर्धन्यास्ते । कश्चित् लिलेख ।

यूनान मिश्र रोमां सब मिट गये जहां से ।
क्या बात है कि हस्ती मिटती नहीं हमारी ।।

इदं पद्यं भारतीय-संस्कृतेः गौरवं, महत्त्वं च प्रतिपादयति ।

सम् पूर्वात् कृधातोः क्तिनिप्रत्यये संस्कृतिशब्दो निष्पद्यते । संस्करणं परिष्करणं चेतसः आत्मनो वेति तत्सामान्यार्थो ननु । संस्कृतेः लक्षणविषये मतवैविध्यं विद्यते विदुषाम् । डा० सम्पूर्णानन्दस्य शब्देषु समष्टिगत-समानानुभवेभ्यः समुद्भूतः पदार्थ एव संस्कृतिः वर्तते । श्रीमान् राजगोपालाचारी–महाभागः जातौ राष्ट्रे समाजे वा शिष्टजनेषु विचार-वाणी-क्रियाणां व्याप्तं रूममेव संस्कृतिरिति भणति । प्रकृते विधानानुसारं संस्कृता पद्धतिरेव संस्कृतिरस्ति । संस्कृतिः मानवजीवनस्य शक्तिः, पवित्रकारिणां साधनानां विमला विभूतिः, राष्ट्रीय-आदर्शस्य गौरवमयी मर्यादा, स्वतंत्रतायाश्च प्रतिष्ठा अस्ति । सैव सुखं संसाध्य चेतः प्रसादयति, दुर्भावान् दुर्गुणान् च विदार्य, सद्भाव-सद्गुणवान् प्रददाति । दुःखाज्ञानान्धकारमपसार्य सुख-ज्ञान-ज्योतिः प्रकाशयति । वैयक्तिक-सामाजिक-आर्थिक-राजनीतिक-जीवनेषु, कला-शिक्षयोः, धर्मकर्मणि च संस्कारं कामयतां जनानामभ्युदयमार्गम् प्रशस्तं करोति । डा० मंगलदेव-शब्देषु संस्कृतेरिदं रम्यं रूपमस्ति—"कस्यापि देशस्य समाजस्य वा विभिन्नजीवन-व्यापारेषु सामाजिक-बन्धनेषु वा मानवीयत्वदृष्ट्या प्रेरणाप्रदानां तत्तदादर्शानां समष्टिरेव संस्कृतिरस्ति ।" वस्तुतस्तस्यामेव सर्वस्यापि सामाजिक-जीवननस्योत्कर्षः पर्यवस्यति । तयैव तुलया विभिन्न-सभ्यतानमुत्कर्षापकर्षावनुमीयेते । किं वहुना संस्कृतिरेव वस्तुतः **सेतुविधृतिरेषां लोकानामसंभेदाय** (छान्दोग्योपनिषद् 8–4–1) इत्येवं वर्णयितुं शक्यते । अत एव च सर्वेषां धर्माणां संप्रदायाना-माचाराणां च परस्परं समन्वयः संस्कृतेरेवाधारेण कर्तुम् शक्यते ।"[1]

ममात्राभिमतं यत् जीवनस्य आर्थिक-सामाजिक-राजनीतिक-कला-शिक्षा-धर्मादिषु क्षेत्रेषु उन्नतिकारकः, चेतः संशुद्धिकारकश्च चिन्तनव्यापारः संस्कृतिरस्ति ।

आंग्लभाषाया कल्चरशब्दो न तथा गंभीरमर्थम् धत्ते यथा संस्कृतिशब्दः । कल्चरपदेन, मनुष्यस्य समाजे निवासप्रकारः वेषभूषादिपून्नतिश्च गण्यते बाह्यालंकारेण

---

(1) प्रबन्धप्रकाशः भा० 2 पृ० 3 ।

भूषितः सुसज्जितः पुरुषः आंग्लभाषायां "कल्चर्ड" इति निगद्यते। अन्तःशुद्धस्तत्र प्रायेण आवश्यनता नानुभूयते। तथा च प्राह टी० एस० इलियट महोदयः— "कल्चरपदेन ममाभिप्रायः एकस्मिन् स्थाने निवसतां पुरुषविशेषाणां समुदायस्य निवासप्रकारो वर्तते।"[2]

**संस्कृतिः धर्मश्च**— केचित् भ्रान्ता मन्दमतयो जनाः संस्कृतौ धर्मे चाभिन्नत्वं पश्यन्ति, किन्तु न तत्तथास्ति। धर्मस्तु संस्कृतौ संन्निविष्टो ननु। धर्मः खलु मनुष्यं सदाचारं, दयाशीलं, सहनशीलं, साहसिनं विधत्ते, इमे गुणा एव च मनुष्यं संस्कृतं कुर्वते। परन्तु वर्तते तयो र्भेद एव भिन्नविचाराणां, मनुष्याणां धर्मा भिन्ना भवन्ति, किन्तु संस्कृतिः सर्वेषामेकैव। धर्मः शासन-सम्मतविचाराणामनुमोदनं विदधाति संस्कृतौ च शास्त्राविरुद्धा लौकिकता-अलौकिता च विराजते।

**संस्कृतिः कला च** – कलायाः संस्कृतेश्च गाढसम्बन्धं वीक्ष्य केचित् विद्वांसः तयोरभिन्नत्वं प्रदर्शयन्ति। तच्चाप्यसमीचीनं नाम। सुसंस्कृतो जनः श्रेष्ठकलाकारः अपि भविष्यतीति न निश्चितम्। असंस्कृतः अनैतिकश्चापि कलापारङ्गतः क्वचित् विलोक्यते, तस्मात् संस्कृतिः कला च उभे भिन्ने, कलायां संस्कृतेः प्रतिबिम्बं दृष्टिपथमायाति तस्मात् सा संस्कृतेरेवाङ्गं ननु।

**संस्कृतिः शिक्षा च**—शिक्षा अपि संस्कृतेरङ्गभूता ननु। सुशिक्षामवाप्य जनः संस्कृतो भवति। किन्तु न तत्र स्थिरो नियमः, शिक्षिताः जना अनाचाराः, भ्रष्टाः, असंस्कृताश्चापि जायन्ते। कदाचित्तु अल्पशिक्षितः अपि सुसंस्कृतो भवति संस्कृतिः शिक्षिते, अशिक्षिते उभयोरपि प्रभावं जनयति।

**संस्कृतिः सभ्यता च** – संस्कृति-सभ्यताशब्दौ तथान्योन्यं सम्बद्धौ स्तः यत्तदभिन्नत्वं मन्यते कैश्चित्। तच्चासमीचीनं नाम। संस्कृतिः आत्मनः अभ्युत्थानस्य प्रदर्शिका विद्यते सभ्यता च शरीरस्य मनोविकारान् द्योतयति। संस्कृतिरन्तस्तत्वं सभ्यता च वाह्यतत्वं वरीवर्ति।

सभ्यताशब्दः सभ्यपदान्निसृतः। सभायां साधुः सभ्यः इति तस्य व्युत्पत्तिरस्ति। अतः सभ्यता तु सामाजिकगुणो वर्तते। तस्यां केवलं बाह्यालंकरणं वेषभूषां वा जनाः प्रायेण गणयन्ति। संस्कृतौ अन्तः गुणा विलोक्यन्ते। डा० सम्पूर्णानन्द–महाभागस्य मते संस्कृतिः आन्तरिकी, मानसिकी वास्ति, सभ्यता च बाह्या भौतिकी वा। संस्कृतिः चिरायांगीक्रियते सभ्यता च सत्वरं सहजमेव चानुक्रियते। संक्षेपतः संस्कृतौ सभ्यताया अन्तर्भावो विधातुं शक्यते, सभ्यतायां संस्कृति र्नान्तर्भवति।

---

(2) टी० एस० इलियट —नोट्स टूवार्ड्स दी डेफीनिशन ऑफ कल्चर पृ० 120।

संस्काररूपे अवशिष्टा सभ्यतैव संस्कृतिर्जायते । सभ्यता संस्कृतेरभिव्यक्तिमात्रं वर्वर्ति ।

**संस्कृतिः संस्कृत-साहित्यं च**—"संस्कृतं संस्कृतिश्चैव श्रेयसे समुपास्यतामिति" कोविदानां कथनं भारतीयसंस्कृतेः संस्कृतस्य चान्योन्याश्रयत्वं प्रतिपादयति । विश्वविश्रुता भारतीयसंस्कृतिः संस्कृतसाहित्ये सन्निहितेति न मतिमतां मतभेदः साहित्यमेव संस्कृतिस्वर्णनिकषोपलमास्ते । आर्याणां साहित्यं पक्षपातं विहाय विलोक्येत चेत्तर्हि संस्कृतिसरिता कस्मात् कालात् समुद्गता सम्प्रति चापि तथैव प्रवहतीति स्पष्टं स्यात् । भारतीय-संस्कृतेरुद्गमः प्रवाहश्च केवलं संस्कृतसाहित्येनैव ज्ञातुं पार्यते । संस्कृतभाषा संसारस्य समस्तभाषाणां आद्या वरीवर्ति इत्यत्र न मतिमतां विप्रतिपत्तिः । भारतीयास्तु विचक्षणास्तामेव सर्वभाषाजननीं मन्यन्ते ।

विश्वस्याशेषा अपि विबुधाः ऋग्वेदं, विश्वपुस्तकालये आदिग्रन्थत्वेन सम्मानयन्ति । भारतीयास्तं वेदं ब्रह्ममुखान्निसृतं मन्यन्ते । तस्मादादिग्रन्थाच्च अद्यावधि विशालं वाङ्मयञ्चेदवलोक्येत तर्हि भारतीय-संस्कृतेः निरतिशयकमनीयं चित्रं प्रस्फुटं भवेत् ।

सर्वविद्यानिधानानाम्, त्रिभुवने आदिग्रन्थानां चतुर्णाम वेदानां प्रधानमुद्देश्यं संस्कृतेरूपदेश एवास्ते सर्वतः पूर्वम् संस्कृतिः निःशेषलोकेन तत एव शिक्षितेति वेदेषु कृतभूरिपरिश्रमाणां भारतीयपाश्चात्यविदुषां सुदृढा धारणास्ति । वर्तमान-युगे पदे-पदे हिंसाजनितत्रासः, श्रूयते दृश्यते अनुभूयते च । परन्तु प्राचीनभारतस्य मानवजातौ **"मा हिंस्यात् सर्वभूतानि"** इत्युपदेशः वेदेभ्य एव प्रारब्धः । चतुर्दिक्षु विराजमानानि राष्ट्राणि यदसत्यमनृतं च सर्वसम्मतया त्याज्यं गर्हणीयं च निगदन्ति तत्कृते वेदभगवानाह—**"नानृतं ब्रूयादिति"** आधुनिकाः पाश्चात्यपंडिताः संस्कृतेः अर्थम् "आचार-व्यवहारः इति विदधति । विलोक्यतां च, ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां चतुर्णाम् वर्णानां, ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासाश्रमाणां च विभागं विधाय, यस्मिन् यस्याधिकारः तस्मिन् तथाविधस्याचरणस्य शिक्षा वेदादेवोदिता ।

समाजाय ते वेदाः आचारव्यवहारे कीदृशीमापातरमणीयां व्यवस्थां वांछन्ति, इति एकेन मंत्रेणैव ज्ञायते । मनुष्यः ईश्वरं तदेव याचते यत्तस्मै सर्वाधिकं रोचते । वेदेष्वस्माकं प्रार्थनास्ति यत्....................

**आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् । आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् । दोग्ध्री-धेनुर्वोढा नड्वानाशुः सप्तिः पुरन्ध्रीर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायताम् । निकामे निकामे नः पर्जन्यो वर्षतु-फलवत्यो न औषधयः पच्यन्ताम् योगेक्षेमो नः कल्पताम् ॥**

अत्र मूलमंत्रे सुन्दरीणां कृते पुरन्ध्री-शब्दो विद्यते यदर्थः सुचरित्रा खलु। अयं भावो यत् तथाविधाः नार्यो देशे जायन्ताम् या आचारव्यवहारकारणात् सुन्दर्यः स्युः। समाजः स्त्रीषु यस्यामवस्थायां यादृशमाचारव्यवहारं कामयेत तासु तादृश एव आचारः स्यात्। देशे ज्ञानप्रकाशिकाः संरक्षिकाश्च शक्तयो यदा सर्वविधप्रकारैः समर्था भविष्यन्ति का तदावश्यकतावशिष्यते। धनधान्यसमृद्धिचर्चापि मन्त्रे वर्तते। तत्कृते च भूमिः सम्पत्तिश्च समये मिलिष्यत्येव। ईश्वरस्यानुकम्पा सहायता च तावत् वृष्ट्या एवाभिलिषितास्ति, तस्मात् किमन्यदवशिष्टं समाजे, आचारव्यवहार-व्यवस्था-प्रसंगे। चित्रं यत् गोवृषभाश्वानां पशूनां संस्कार आचार-व्यवहारश्चापि ऋषिभिर्मन्त्रे निबद्धः। इतः अप्यधिका का नाम सूक्ष्मता संस्कृतावभिलष्येत।

वेदानामनन्तरमुपनिषदां स्थानं विराजते। उपनिषदो वै आर्यजातेः ज्ञानपराकाष्ठाः हिन्दूनां सर्वस्वभूताश्च सन्ति। तासु संस्कृते र्व्याख्या कीदृशी कियती चास्तीत्यत्र नैकविद्वद्वरेण्यैः लिखितम्। एक एव दृष्टान्तः अत्र पर्याप्स्यति।

**"वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति ॥ सत्यं वद ॥ धर्मम् चर ॥ स्वाध्यायान्मा प्रमदः ॥ आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ॥ सत्यान्न प्रमदितव्यम् ॥ धर्मान्न प्रमदितव्यम् ॥ कुशलान्न प्रमदितव्यम् ॥ भूत्यै न प्रमदितव्यम् ॥ स्वाध्याय-प्रवचनाभ्यां न प्रमदितव्यम् ॥ देवपितृकार्याभ्यां न प्रमदितव्यम् ॥"**

गृहस्थ-जीवनं कीदृशं भवेदिति व्याख्यानाय तैत्तिरीयोपनिषदः, अयमनुवाक आरभ्यते। अत्र खलु गुरुः वेदादिकमध्याप्य गृहस्थधर्मपालनाय शिष्यमुपदिशन्नस्ति। रम्यः स्पष्टश्चासावुपदेशः व्याख्यां नापेक्षते। इदं चोपदिश्य पुनः गुरु र्ब्रवीति—

**"मातृदेवोभव ॥ पितृदेवो भव ॥ आचार्यदेवो भव ॥ अतिथिदेवो भव ॥ यान्यनवद्यानि कर्माणि तानि सेवितव्यानि ॥ नो इतराणि ॥ यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि ॥ नो इतराणि ॥ श्रद्धया देयम् ॥ अश्रद्धया देयम् ॥ ह्रिया देयम् ॥ भिया देयम् ॥ संविदा देयम् ॥"**

इममुपदेशं श्रुत्वा न कामः कश्चिदवशिष्टः व्यवहारविषये। तथापि शंका चेत् काचिदवशिष्येत तर्हि—**"ये तत्र ब्राह्मणाः सम्मर्शिनः ॥ युक्ता अयुक्ता अलूक्षा धर्मकामाः स्युः ॥ यथा ते तत्र वर्तेरन् ॥ तथा तत्र वर्तेथाः ॥"** अयमेव वर्तते भारतीयसंस्कृतेः सारांशः, अयमेवोपदेश आदेशः रहस्यं च वेदानामस्ति।

अथ विलोक्यतां तावत् सूत्राणि स्मृतीश्च। सूत्रेषु गृह्यसूत्राणि प्रधानानि सन्ति। उभयत्रापि संस्कृतिरन्वेषणीया। स्मृतिरेव धर्मशास्त्रं निगद्यते **"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वे स्मृतिः"** इति वाक्यात्। धर्मशास्त्राणि आचार-व्यवहारस्य निधयो विद्यन्ते। मनुयाज्ञवल्क्यप्रभृतयःमहर्षयो न केवलं भारतीयेभ्यः:, परन्तु यावन्मात्रमानवजातिभ्यः आचार-व्यवहार-शिक्षाप्रदानाय सगर्वम् घोषणामकार्षिषुः—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।

भगवता याज्ञवल्क्येन लोकहिताय कानिचित् कर्तव्यान्यभिहितानि—

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम् ।।

मनुगौतम-वशिष्ठ-शंख-हारीत-पराशर-प्रभृतिभिः सर्वैः स्मृतिकारैः, संसारवासिभिः सह कीदृशःनिर्वाहःस्यादित्यत्र विषये आचरणानि लिखितानि ननु। अथ पुराणान्यायान्ति । अष्टादशपुराणानां सारःपादचतुष्टये एव संगोपितः पुराणकारेण—

अष्टादशपुराणेषु व्यासस्य वचनवद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ।।

आचार-व्यवहारस्येतादृशी संक्षिप्ता शिक्षा क्वापि अन्यत्र न प्राप्यते ।

अथेदं धार्मिकसाहित्यं विसृज्य साहित्यशास्त्रे अपि दृष्टिनिक्षेपो विधेयः । अत्रत्यो ब्रह्मा डिंडिमघोषं करोति यत्—

अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथास्मै रोचते विश्वं तथैव परिवर्तते ।।

कच्चिनास्त्यत्र कविरूपः स्रष्टा विरंचेरप्यधिकः । ब्रह्मणा विनिर्मितः ब्रह्मांडः कवये न रोचते । स्वरुच्यनुकूलं द्वितीयं ब्रह्माण्डं च स निर्मिमीते । अहो कियत् स्वातन्त्र्यं परिलक्ष्यते । किन्तु संस्कृतेरभिमुखं तु कविप्रजापतयो ऽपि शिरो नमयन्ति । येन सह यादृशं व्यवहारवर्णनं समुचितं खलु तत्र तस्मात् विरूद्धवर्णनेन कविसम्प्रदायस्योल्लंघनं जायते ।

अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम् ।
औचित्योपनिवन्धस्तु रसस्योपनिषत्परा ।।

अपि च काव्यसाहित्यस्य सृष्टिः यत्कृते अभूत् तत्रापि संस्कृतिपुरस्सरं गम्यते । यथा वेदस्य प्रभुसम्मितोपदेशः (शासकस्य स्वतन्त्राज्ञा) पुराणस्मृतीनां सुहृत्सम्मितोपदेशः (मित्रवत् हितोपदेशप्रभृतयः) तथैव काव्यानां कान्तासम्मितोपदेशः । (कान्ता यथा स्वकान्तं प्रेम-चर्चया प्रसन्नं विधायैव तस्मै हितमार्गम् प्रदर्शयति) उच्यते । काव्यानां मूलोद्देश्यमस्ति चरित्रशिक्षा । **रामादिवद्वर्तितव्यम् न रावणादिवत्** । काव्यसृष्टेरिममुद्देश्यं वीक्ष्य संस्कृतेः उपदेशे काव्येन कियान् योगः कृतः इति अनुमातुं शक्यते । स्वामिनः सुहृदो वोपदेशः कामं न जनयतु कस्मिंश्चित्प्रभावम्, तथापि प्रेमोन्मत्तं कान्तं विधाय, कान्तया कृतो हितोपदेशः प्रत्यंगमाश्लिषति । इदं चावलोक्य संस्कृतिसंरक्षणे सर्वाधिकप्रभावः काव्यानामेवास्तीति उच्येत तर्हि नात्रातिशयोक्तिः स्यात् ।

साहित्यकाराणन्तु सर्वसम्मतो ननु अयं सिद्धान्तो यत् गद्यपद्यात्मकं सर्वविधं काव्यम् कामपि शिक्षामंगीकृत्यैव विरचितं स्यात् पाश्चात्य–कोविदानामनुकरणैः निर्मिता आधुनिकी कथा भवतु नाम केवलं मनोविनोदाय, किन्तु भारतस्य दृष्टिस्तु अत्रापीयमेवास्ति यत् कथा आख्यायिकाश्च कांचित् चरित्रशिक्षामेव सर्वमानवेभ्यो ददुः ।

इदं वर्णनं सम्यक् साधयति यत् भारतीय-संस्कृतेरुद्गमः वेदात् संजातः, तत आविर्भूय सा विविधे संस्कृतसाहित्ये स्फुटतनुरभूत् । अतः संस्कृतिः संस्कृते संस्थितेति कथनं न असाम्प्रतम् । संस्कृतसाहित्यस्याध्ययनेन संस्कृतेः स्वरूपं सततं स्फुटं जायते । तस्मात् संस्कृति-संस्कृतयोरुभयोरपि, अंगीकारेण लोकस्य श्रेयो भविष्यति । तत्सर्वथा युक्तियुक्तमभिहितं केनचित् –**संस्कृतं संस्कृतिश्चैव श्रेयसे समुपास्यताम् इति** ।

**भारतीय-संस्कृतेः विशेषता :**— भारतीय-संस्कृतेः क्षेत्रमतीव विस्तृतमस्ति । समस्तमपि जीवनं जीवनव्यापारं च तत्व्याप्नोति ।

**(1) धर्मप्राधान्यम्**– भारतीय-संस्कृतेराधारस्तम्भः धर्मो वरिवर्ति, **धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः** इति भावना भारतीयेषु व्याप्तास्ति, धर्म-पदेन नहि कश्चित् सम्प्रदाय-विशेषः अत्र विवक्षितः । जगद्धारकाणि यमनियमप्रभृतीनि, धृतिक्षमाप्रभृतीनि च तत्त्वानि धर्मपदेन व्यपदिश्यन्ते । स एव सर्वोत्कृष्टः धर्मः येन, इहलोके सर्वतः अभ्युदयः परत्र च निःश्रेयस्प्राप्तिः स्यात्, सम्यगाह न्यायदर्शनकारः– **यतो ऽभ्युदयनिः श्रेयस् सिद्धिः स धर्मः**–अस्य च धर्मस्य महत्त्वपूर्णं स्थानं वरीवर्ति भारतीय-संस्कृतौ । धर्मेण समं, दर्शनानामपि महत्त्वपूर्णम् स्थानमस्ति । षड्दर्शनैः सदा संस्कृतिः प्रभाविता कृता खलु । तेषां सिद्धान्ताः नास्तिकदर्शनानां च विचाराः, भारतीय-जनतासु पुराकालादद्यावधि विराजन्ते । अतः धर्म दर्शनञ्च विहाय संस्कृतेरध्ययनमपूर्णमस्ति ।

**(2) आध्यात्मिकी भावना** —धर्मस्याधारः अध्यात्मभावना वरीवर्ति । तया च भारतीया संस्कृतिः व्याप्ता विद्यते । समस्तं संस्कृतवाङ्मयमनया भावनया व्याप्तं ननु । इयं हि चेतः प्रसादयति, मनुष्यं मोक्षमार्गं प्रदर्शयति । वेदेषु उपनिषत्सु गीतायाञ्चास्या भावनायाः कमनीयं रूपं विराजते । इमां भावनामाश्रितो जन एव उदारः, परोपकारी, दयादाक्षिण्यादियुक्तश्च भवति । इयं भावनैव परलोकप्राप्तिं कारयति ।

धर्म-दर्शनाध्यात्मभावनानां मूलं शरीरमस्ति अत एव "**शरीरमाद्यं खलु धर्मसधनम्**"इति कालिदाससदृशा विचक्षणा वदन्ति भारतीयसंस्कृतिःधर्मसाधनाय स्वास्थ्ये, शरीर-समृद्धौ च महत्ध्यानं-ददाति । अत एव, धमार्थकाममोक्षेषु प्रत्येकस्य गौरवमंगीकृतं शास्त्रैः । अस्मादेव हेतोः आर्थिक-समृद्धौ, भारतवासिभिः सततं प्रयासाः विहिताः । वेदेष्वपि प्रार्थनायां, धनवैभव-पुत्र-पशुप्रभृतीनां ऋद्धेर्याचनाः विहिता : । तस्मात् भारतीय-संस्कृतेः विचारप्रसंगे कश्चिदपि लेखकः आर्थिकस्थिति-प्रसंगं न जहाति ।

(3) **वर्णाश्रम-व्यवस्था**—ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां वर्णानां, ब्रह्मचर्य-गृहस्थ-वानप्रस्थ- सन्यासाश्रमाणां च स्थितिः संस्कृतेरपरा विशेषता, धर्माध्यात्मक्षेत्रे देश-समाजोन्नत्यै ब्राह्मणवर्णस्य महन्महत्त्वम्, देशरक्षायै शासनव्यवस्थायै च क्षत्रियस्य गौरवं खलु स्वीकृतम् । प्रत्येकं देशस्य संस्कृतिः राजनीत्या, राजनीतिकविचारैः राज्ञां विचार-व्यवहारैः, शासन-प्रबन्धैश्च प्रभाविता सम्पाद्यते । भारतीयसंस्कृतिरपि, तया प्रभाविता तस्थौ सदा । अत एव भारतीय-संस्कृतेरध्येतारो लेखकाश्च तत्द्देशस्य राजनीतिकदशामनिवार्यतया, जानन्ति, लिखन्ति च । वैश्यानां महत्त्वं आर्थिक-दृष्ट्या देशस्य समृद्धौ च विद्यते, ते एव सर्वविधकलानां उद्गमाः भवन्ति । शूद्राणां स्थितिः सेवकरूपेण स्वीकृता, लघुकार्येषु, तेषां महत्त्वमस्ति आसीत् च ।

ब्रह्मचर्याश्रमः शिक्षादृष्ट्या गौरवपूर्णं स्थानं धत्ते । अत्रैव, मनुष्यजीवनस्य वास्तविको विकासो जन्म च भवति । अस्मिन्नेवाश्रमे सर्वविध-कलानां शिक्षा चापि भवति, कलाश्च भारतीयसंस्कृतेः अतीव हृदयावर्जकं चित्रं प्रस्तुवन्ति । अत एव संस्कृतेरध्ययनकाले कलाक्षेत्रे उन्नतिः विलोक्यते । अयमेवाश्रमः शिक्षाकालो वर्तते । अत एव संस्कृतेः जिज्ञासुभिः लेखकैः समाजस्य देशस्य वा शिक्षाप्रणाली स्पृश्यते । तां विना अपूर्णम् खलु संस्कृतिज्ञानम् । गृहस्थाश्रमः सर्वोत्कर्षेण स्वीकृतः ऋषिभिः । **सर्वोपकार-क्षममाश्रमं ते** इति रघुवंशवाक्यमपि तदेव महत्त्वमिंगितयति । अस्मिन्नेवाश्रमे अन्याश्रमा व्यवस्थिता ननु । वानप्रस्थाश्रमः, जीवनस्य चरमभागस्य सुखाय, शान्त्यर्थञ्च, सज्जारूपो निर्धारितः अस्मिन् स्थितो जनः गृहस्यभारं त्रिसृज्य सुखशान्ति-लाभाय वनं गत्वा सन्ध्यावन्दनस्वाध्यायेषु मन आधत्त । कन्दमूलैश्च वृत्तिमकरोत् । सन्यासाश्रमः चरमो ननु । इममाश्रममाश्रित्य भारतीयाः सर्वकर्मसन्यासपुरस्सरा लोक-कल्याणायेतस्ततो बभ्रमुः । स्वोपदेशैश्च प्रजाः अपावयन् ।

अनयोः वर्णाश्रमयोरेव भारतीय-संस्कृतिः संस्थिताभूत्, अद्यापि च वर्तते ।

(4) **भाग्य-कर्म-पुनर्जन्म-भावना**—भारतीय-संस्कृतौ भाग्यस्य कर्मणश्च उभयोरपि महत्त्वं वरीवर्ति । किन्तु प्रधानता तत्र कर्मणो भवति । **उद्योगिनं पुरुषसिंह-मुपैति लक्ष्मीः । दैवं हि दैवमिति कापुरुषा वदन्ति,** इति भावना पुराकालादद्यावधि प्रसृतास्ति भारतवर्षे । वेदभगवानुपदिशति....**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः** । गीतायाश्चोपदेशः यत् **सततं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः,** तस्मात् कर्मणः प्राधान्यं ननु । कर्मानुरूपमेव फलं लभ्यते, संस्कृतेरनुसारं, **अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्,** इति गीतायाः विचारःबहुशः कह्लणेनोल्लिखितः । कर्मणि एव पुनर्जन्म आधृतम् । शुभकर्मभिः मनुष्ययोनिः अशुचिभिश्च पशुकीटादियोनिरवाप्यते । पुनर्जन्म तु निश्चितमेव **जातस्य (वोहि मृत्युः ध्रुवं जन्म मृतस्य** च," इति गीतावाक्यं तत्र प्रमाणम् ।

(5) **श्रुतिषु श्रद्धा**—भारतीय-संस्कृतौ श्रुतीनामतीव गौरवपूर्णम् स्थानमस्ति । उपरिवर्णितः समस्तः अपि विचारप्रसारो वेदाश्रितो विद्यते । **वेदो ऽखिलो धर्ममूलम्**" इति वाक्यम्:—

चातुर्वर्ण्यं त्रयोलोकाः चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वम् वेदात् प्रसिध्यति ।।

इति स्मृतिवाक्यं चात्र प्रमाणम् । भारतीय-संस्कृतौ सम्मानिता त्यागभावना ततः विनिसृता **'तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्' 'केवलाघो भवति केवलादिः'** इत्यादिवेदवाक्यानि तां भावनां प्रदर्शयन्ति, यजुर्वेदः यज्ञानां महत्त्वं प्रकटीकरोति, तच्च स्वीकृतं संस्कृतावपि । **यज्ञो वै श्रेष्ठतमं कर्म** इति ब्राह्मणवाक्यम् प्रसिद्धं नाम । पंचमहायज्ञरूपें तस्य स्थितिः भारतीयसमाजे सर्वदा अतिष्ठत् । **मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव** इति विचाराः यज्ञस्यैव रूपाः वर्तन्ते, धर्मार्थ-काम-मोक्षाणां महत्त्वं विस्तारश्चापि वेदेनैव ज्ञायते । तस्मादेव श्रुतीनां सर्वोत्कर्षः संस्कृतौ स्वीकृतः ।

(6) **समन्वय-भावना** – भिन्न-भिन्न-विचाराणां मतानां, मतावलम्बिनां विचाराणां समन्वयस्य भावना भारतीयसंस्कृतेरपूर्वा विशेषता वर्तते । समये-समये भारतदेशे शक-हूण-दरद-यवन-तुरुष्क-खश-आंग्ल-जातीनां जनाः समाययुः । तेषां संस्कृतेः विचाराणां च सम्मिश्रणं भारतीय-संस्कृतौ समजनि, सर्वेषामेव स्वात्मनि समन्वयः कृतः भारतीय-संस्कृत्या । तेषां विचाराः, भाषा वेषभूषा च संस्कृत्या परिवर्तिता । तान् चासौ आत्मसात् कृतवती । तेषां सर्वविध-विशेषता अंगीकृत्य, तेषु सर्वदा महान् प्रभावः तया जनितः । इयं च समन्वयभावना एव संभवतः भारतीयसंस्कृतेः सुदृढस्थितेः, अविनश्वरतायाश्च मूलम् ।

(7) **संस्कृतेः अखंडता** – भारतीय-संस्कृतेः समस्ते अपि भारतवर्षे समानरूपेण प्रसृता गुणाः तस्या अखंडतां प्रदर्शयन्ति । सर्वस्मिन्नपि देशे सर्वे जनाः दिवसे वारत्रयं गायत्रीमुपासते । विष्णुः शिवः पार्वती इत्यादयः सर्वत्र पूज्यन्ते । रामकृष्णयोः गुणगानं तयोर्लीलाश्च सर्वत्र समानरूपेण भवन्ति । वेद-रामायण-महाभारत-गीता-पुराण-भागवत-प्रभृतीनां विभिन्नप्रदेशेषु पाठः प्रचलितो ननु । एकस्मिन्नेव गयातीर्थे सर्वेषां पितृकृत्यानि भवन्ति । एकस्यामेव काश्यां सर्वैः शिवार्चना विधीयते । कुरुक्षेत्र-हरिद्वार-प्रयागाश्च सर्वेषामेव तीर्थानि ननु । समस्तभारते एकमेव गीतगोविन्दं गीयते । कृष्णकर्णामृतरचयिता कर्णाटस्य बिल्वमंगलः सर्वेषां स्वीय इवास्ति । महाप्रभुः चैतन्यः सर्वाणि शास्त्राणि इदं कृष्णामृतं, ब्रह्मसंहितां च दक्षिणदेशादेवानिन्ये । एकमेव दशकर्म समस्तभारते प्रचलितमस्ति ।

कश्चिदपि देवः पूज्येत, चतुर्णाम् धाम्नां अथवा उत्तर-दक्षिण-पूर्व-पश्चिम दिशानां चतुरशीतितीर्थानां जलैः इष्टदेवस्याभिषेकं विनास्माकमभिषककार्यम् न खलु संपूर्यते । शंकराचार्येण सम्पूर्णभारते दशामीसम्प्रदायस्य स्थापना कृता । प्रत्येकं दिशि चत्वारो मठास्तेन संस्थापिताः ते च जोशीमठः (कश्मीरेषु) श्रृङ्गेरीमठः, द्वारिकामठः, पुरीमठश्च सन्ति ।

तान्त्रिकास्तु समस्तदेशे एव एकां जगन्मातरं पुण्यदेहां मत्वा द्वापंचाशत् पीठेषु द्वापंचाशदंगानि मन्वते। एतेषु पीठस्थानेषु हिंगलाजः बलोचिस्ताने, कामरूपश्च आसामप्रदेशे अस्ति। कन्याकुमारीतः ज्वालामुखीपर्यन्तं सर्वत्रैव देव्या अंगानि सन्ति। तस्या देव्या अखंडदेहं किं वयं खंडितं कर्तुम् शक्नुमः। एक एव शिवः एक एव विष्णुः भारतस्य चतुर्षु दिक्षु चतुरशीतिक्षेत्रेषु विराजितो वर्तते। तन्त्रं कथयति यत् द्वापंचाशत् पीठानि अस्माकं वपूंषि वर्तन्ते। कथं वयं स्वात्मनः खंडितान् कर्तुमर्हामः।

अनेनेदं सिद्ध्यति यत् ये जनाः देशे प्रादेशिकतायाः प्रचारं कर्वन्ति, ते भारतस्य चिरन्तनसाधनां संस्कृतिं च न विजानन्ति। यद्वा तां प्रति तच्चित्तेषु दया नास्ति।

**सारांशः**—संक्षेपतश्चेत् भारतीयसंस्कृतेः विशेषताः प्रकटीक्रियेरन् तर्हि वक्तुं शक्यते यत् अस्याः धर्म-संस्कृति-जीवनेषु त्रिष्वपि क्षेत्रेषु समानरूपेण विस्तारो वर्वर्ति। संस्कृतिः सहिष्णुतायाः प्राणवायुना जीविता विद्यते। संस्कृतेरभीष्टं बहुत्वे एकत्वस्याभिज्ञानमस्ति। बहुधा पदेनैव एकस्य महिमा प्राप्यते। **एकं सद्विप्रा बहुधा वदन्ति,** इति वाक्यं भारतीय-संस्कृतेरन्तर्यामि सूत्रमस्ति। समन्वयस्योपलब्धिः हिन्दुसंस्कृतेः इतिहासस्य राजमार्गो वर्तते। जड़-चेतनस्य सापेक्षिकमूल्यांकनं हिन्दुसंस्कृतेर्विशेषता वरीवर्ति। साहित्य-कला-सौन्दर्य-संयमा भारतीय-संस्कृतेरायामाः सन्ति। ऋत-सत्य-धर्म-ब्रह्म-चैतन्यानि अभिन्नानि सर्वोपरि च विराजन्ते। भारतीय-संस्कृतेः एतेषु अखंडा निष्ठा वरिवर्ति। धर्मस्य जीवनस्य च सम्मिश्रणं हिन्दू-संस्कृतेः आग्रहस्य विषयो वर्तते। व्यासस्य शब्देषु **'धारणात् धर्म इत्याहुः धर्मोधारयते प्रजाः'** अस्य धर्मस्य सर्वोपरि चैतन्यस्य च धरातलमेकमस्ति। धर्मः भारतीयसंस्कृतेः श्वासः अस्ति।

भारतीयसंस्कृतेः इमा विशेषताः विलोक्य समाज-राजनीति-धर्म-दर्शन-कला-शिक्षा प्रभूतिक्षेत्रेषु प्रवाहितायाः संस्कृतेः सरितायाः कमनीयं स्रोतः प्रबन्धेषु प्रदर्शितो वर्तते।

---

पञ्चमः तरङ्गः

# संस्कृतौ-समाजः

## पारिवारिक-जीवनम्

नैक सदस्यानां समूह एव परिवारो भवति, नैकपरिवाराणाञ्च संदोहः समाजनिर्माणं करोति । तस्मात् समाजे परिवारस्य महत्महत्त्वमस्ति । राजतरंगिण्याः समाजस्य पारिवारिक-जीवने तथा शान्ति-साम्राज्यं न दृश्यते यथा वेदस्य, रामायण-स्य वा समाजे । वैदिकसमाजस्य स्वरूपं अथर्ववेदस्य मंत्रत्रये द्रष्टुं शक्यते ।

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो ऽन्यमभिनवत वत्सं जातमिवाघ्न्या ।।
अनुव्रतः पितुः पुत्रो मातु र्भवति संयतः ।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ।।
मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वांचं वदत भद्रया ।।

परिवारस्यामादर्शः राजतरंगिण्याः समाजे न दृश्यते । तत्र खलु वयं राजपरिवारेषु कलहं पश्यामः, पितरि, भ्रात्रोः, पुत्रे मातरि, पित्रोः, अन्यसम्बन्धिषु च स्वार्थ-साधनाय अन्योन्यं विद्वेषस्य षड्यन्त्रविषादिद्वाराघातस्य, घटनाः प्रायेण दृश्यन्ते। इत्यस्माभिः **राजतरंगिण्याः राजवंशावलिः** इति प्रबन्धस्य तृतीये तरगे बहुशः दृष्टम् ।

यद्यपि वेदकालवत् न दृश्यते सुखी परिवारः तथापि अद्यत्वे भारतीय-परिवारस्य या दुर्दशा दृष्टिपथमायाति सा तदा नासीत् । तदा खलु पिता परिवारस्य प्रधानः अभूत्, पुत्र-पुत्री-पत्नी-पौत्र-प्रभृतयः परिवार-सदस्याः तस्याज्ञापालनं चक्रुः । प्रायेण प्रत्येकं-परिवारः आर्थिकदृष्ट्या समृद्धः अभूत् । अतः कलहस्य शंका नाधिकाभूत् । राजपरिवारेषु तावत् कलहा अभूवन् । परिवारः जीवनोपयोगिवस्तूनि दधौ ।

**गृहवस्तूनि** —गृहम्-तपस्विजनाः पर्णकुटीरे, पर्णशालायामुटजे वा न्यवसन् । तेषां निवास-स्थलानि तृण-पत्रादिनिर्मितान्यभूवन् । नागरिकाणां च निवासाय गृह-सद्म-वेश्म—सौध—हर्म्य—प्रासाद—भवन—गेह—अट्टालिकादिनामभिः निवासस्थाना-न्यासन् । तानि खलु शिल्पिभिः निर्मीयन्ते स्म । प्रस्तराणां इष्टिकानां काष्ठानां वा तन्निर्माणे प्रयोगो बभूव । एतेषु गृहेषु आवश्यकतानुसारं स्नानागार-शयनगृह-शौचगृह-यज्ञशाला-अग्निशाला—अश्व—हस्तिशाला—महानस—भांडगृहप्रभृतयः नैके विभागा

अभवन् । राज्ञां प्रासादेष्वप्येतादृशा विभागा अजायन्त । तत्र न्यायालयः, शुद्धान्तः, सभागृहं च पृथगभवत् । प्रासादेषु तेषां विनोदाय नाट्यशाला-चित्रशाला-संगीतशाप्रभृतीनि पृथक् स्थानानि विरेजिरे । एतदतिरिजतं निवासाय स्नानाय, नावामप्युल्लेख आस्ते । तेषामेव वर्तमानरूपं कश्मीरेषु **हाऊस बोट** इति वर्तते ।[1]

(2) **उपवेशन-वस्तूनि** (फर्नीचर इति भाषा)–उपवेशनाय प्रयुज्यमानानि सर्ववस्तूनि आसन-पदेनाभिधीयन्त । **"अध्यास्त तन्निदर्शितमासनम्"** गजदंतासन-सिंहासन-वेत्रासन-कनकासन-प्रभृतयः उपवेशनवस्तूनां विभिन्नप्रकारा आसन । **सिंहासनम्**-राज्ञामुपवेशनमासीत् । तत् खलु सुवर्णरचितं रत्नादिजटितं चावर्तत । अस्य चतुर्षु पादेषु अन्याः सिंहासनप्रतिमाः व्यराजन्त । तदेव नृपासनमभ्यधायि । सिंहासनं खलु रजतैरपि निर्मीयते स्म । **कनकासनम्** (कोच) इति भाषायां प्रसिद्धं वस्तुसदृशं संभवतः अभूत् । **वेत्रासनं** संभवतः वेत्रैः निर्मितमभवत् । एतादृगासनेभ्यः व्यतिरिक्तं पीठान्यपि आसन् । चरण-विश्रामपीठं **पादपीठमभण्यत** । तदेव स्वर्ण-निर्मितत्वात् **हेमपीठं तपनीयपीठं** च न्यगद्यत । **भद्रपीठम्** संभवतः राज्याभिषेककाले स्नाने प्रायुज्यत । **विष्टरः** खलु पूजार्हजनोपवेशानाय प्रस्तूयते स्म। **मंच** : अप्यभूत् यत्रारोहाय सोपानान्यभूवन् । मंचे एव प्रायेण सिंहासनमतिष्ठत् । **तल्पः पर्यङ्कः** पलंग इत्यस्य वस्तुनः तुल्यमभूत् । सुसज्जितः आस्तरणायावृतः तल्प एव शय्या शयनं वाकथ्यत (गायन्त्यौ शयनोपान्ते) सिंहासनमंच-पर्यङ्कादीनि सर्वाण्यपि उत्तरच्छदेन, आस्तरणेन वाच्छादितान्यभूवन् । शय्याया आच्छादनं प्रायेण श्वेतमभवत् ।[2]

(3) **पात्राणि** - पात्राणि खलु मृत्तिकानिर्मितानि स्वर्णरचितानि वासन् **"मृत्पात्रं"** **हेमभाजनभाण्डादि, सौवर्णभाजनैरपि "धनं सुवर्णभाण्डादि," 'पृथुस्वर्णभाजि,"** इत्यादिपदानि पात्राणां भेदं स्वर्णदृष्ट्या च भारतस्य समृद्धिं द्योतयन्ति । कुम्भः कुम्भी कलशः घटः जलनिक्षेपाय पात्राणि अभूवन् । कुम्भमुखं संकीर्णमभवत्, घटः अल्पाकारः, कुम्भश्च तदपेक्षया विशालः अभूत् । जलपूर्णकुम्भस्य दर्शनं शुभ-शकुनममन्यत । कुम्भ-कलशादयः काचैः मृद्भिः स्वर्णैः ताम्रैः रजतै र्वा निर्मीयन्ते स्म । चषकः पानपात्रं वा मदिरापानाय पात्रमासीत् । अन्येषु पात्रेषु ताम्बूलपात्रम्, भृङ्गारः,' स्थाली, दधिपात्रम्, पूजापात्रम् इत्यादीनि उल्लिखितानि ननु[3] ।

**अन्यानि वस्तूनि** - गृहे प्रयुज्यमानान्यन्यान्यपि वस्तूनि वर्णितानि कल्हणेन । पर्णतालवृन्तम् **"वीजयन् पर्णतालवृन्तैः"** दीपाः, मणिदीपकाः, दृतिः, गुणः, काष्ठा,

---

(1) 1–238, 47, 42, 2–119, 298, 4–70, 17, 19, 1–257, 2–50, 1–326, 66, 4–192, 1–301, 40, 8–1182 । (2) 3–233, 1–80, 81, 8–2363। 1–100, 7–1538, 3–438, 5–384 । (3) 3–261, 5–10, 7–1194, 8–811, 3070, 2–126, 4–173. 228, 3–371, 8–2011, 2308, 7–483, 726, 938, 8–2787, 1124, 1–128, 7–1227, 5–12,

दग्धांगारः (कोयला इति भाषा) हसन्तिका (अंगीठी इति) पुटकश्चेति पदार्था अपि वर्णिता ननु । प्रसाधनाय पूजनाय चापि नैकवस्तूनि उल्लिखितानि किल । तेषु च कर्पूर-धूप-पुष्प-स्फटिक-पुष्परज-कुंकुम-केशर-सिन्दूर-अगुरु-तैल-दर्पण-प्रभृतीनि, इतर-वस्तुषु च वेत्रयष्टि-छत्र-आतप-वारणमंजूषा-करण्डकपेटकादीनि सन्ति । नैकविध-गृहशुनां वाहनानामप्युल्लेखो विद्यते । तेषु अश्व-गज-उष्ट्र-गर्दभ-रथ-शकट-प्रभृतयो विख्याता आसन्[4] ।

**भोज्यं पेयम् च**—कस्यापि समाजस्य परिवारस्य वा वर्णनं कुर्वद्भिः कोविदैः तस्य भोजनमपि विशेषतः वर्णनीयम् । तदेव जीवनस्य प्रत्येकं क्षेत्रं प्रभावितं करोति । कल्हणकालीन-समाजे अधस्तनानि वस्तूनि भोजने पेये च प्रायुज्यन्त—

**(1) शालिः**—धान्यविशेषः शालिरकथ्यत । कोषेषु कलमादिधान्यम् षष्टिकादिधान्यं च शालिरिति निगदितम् । तत्पर्यायेषु च व्रीहिश्रेष्ठः, धान्योत्तमः इत्यादिशब्दाः सन्ति । दशविधश्च स निगदितः ।

राजान्न-षष्टिक-सितेतररक्तमण्डस्थूलाणुगन्धतिरिया ।
दिक्शालि-संज्ञाः व्रीहिस्तथेति दशधा शालयः स्युः ।।

राजतरंगिण्यां बहुशः शालिवर्णनमवाप्यते । शरद्काले शालिः केदारे (कृषि-क्षेत्रे) उप्यते स्म । भाद्रपदमासि च स पाकोन्मुखः अभवत् "**पाकोन्मुखः शरच्छालिः**" । शालिचूर्णस्यापि विद्यते उल्लेखः, अतस्तस्य करपट्टिकाभक्षणस्य संकेतः उपलभ्यते । कदाचित् करकवृष्टिभिः भ्रंशितफला **स्तम्भशेषेण शालिभूः**, कदाचित् वर्षाणां जलप्लावेन- **प्लाविताशेष-शरच्छालिरजृम्भत** कदाचित् हिमवृष्टिभिश्च शालिकृषिः विनष्टाभूत् ।

(2) **तण्डुलम्**—धान्यस्यैवैको भेदः तण्डुलमासीत् । वर्णेन तत् श्वेतमभूत् । तस्य च सिततण्डुलस्यापि विद्यते वर्णनम् । **सिततण्डुलविभ्रमात्** ।

(3) **यव**—यवभक्षणस्यापि बहवः संकेताः प्राप्यन्ते "**यवकोद्रवपूपादिस्तयोः सतुषमश्नतोः**" विवाहादि-मंगलोत्सवेषु यवप्रयोगः अभवत् ।

**(4) तिलम्**:—धान्ययवातिरिक्तं तिलस्य नामापि कविना प्रदत्तं, तिलद्वादश्यां तिलानां विशेषरूपेण प्रयोगः अभवत् । तिलपिण्याकाः पशूनां भोजनमभूत् । तिलमोदका अपि अभूवन् ते चाद्यापि रुच्या भक्ष्यन्ते भारतदेशे । तिलेभ्यस्तैल-मप्यवाप्यत ।

**(5) सर्षप**:—सर्षपस्योल्लेखः सकृदेव राजतरंगिण्यां समागतः । "**रक्षासर्षप-विग्रहम्**" अतस्तस्यापि भक्षणसूचना लभ्यते ।

---

3–125, 443 । (4) 1–214, 5–387, 7–927, 3–298, 171, 4–14, 15, 7–944, 4–544, 69, 1–284, 8–2625, 2–78, 3–171, 2–122, 98, 4–170, 7–479, 4–171, 7–330, 3–98, 4–502 । (5) श०क०द्रु०भा

**(6) सूपम्**—सूपं (दाल) अपि प्रियं भोजनमभूत्। माषः मसूरः मुद्गः **"समुद्गान्नप्रदायिनः"** इत्येतेषामुल्लेखः स्पष्टं प्राप्यते। माषस्य कृषिः शीततांविभवत्। कदाचित्तु शैत्याधिक्येन सा विनष्टाभूत्।

**(7) करम्भकम्**—कोषेषु दधिमिश्रितसक्तुः करम्भकमभिहितम्। इदं हि द्विजानां प्रियं भक्ष्यमासीत्। **निजैरञ्जलिभिः प्रादात् द्विजन्मभ्यः करम्भकम्।**

**(8) दुग्धं तद्विकृतयश्च**—समस्ते अपि भारतवर्षे दुग्धस्य प्राचुर्यमासीत्। गौ-महिषी-अजादीनां पालनं दुग्धप्राप्त्यै एवाभवत्। दुग्ध-विकृतिः दधि आसीत्, तच्चापि प्रियं भोज्यमासीत्। दधि, तत्पात्रं च मंगलमयममन्यत। **माङ्गल्यदधिपात्राभम्** विवाहाद्युत्सवेषु प्रायेण दधिप्रयोगः अवभत्[5]। दुग्धस्यैव विकारः **सर्पिः, घृतं** वासीत्। अतिमधुरं स्निग्धं च तत्भक्ष्यमासीत्। तस्याहुतिरपि यथेच्छं अदीयत। दध्ना निर्मितं नवनीतमेव, उष्णीभूतं घृतं समपद्यत। क्षीरमपि जनप्रियमभवत्, सकृदेव तदुल्लेखः समागतः,क्षीरमेव सम्प्रति "खीर" इत्यस्ति।

**(9) फलानि**—अनेकेषां फलानां कह्लणेनोल्लेखो विहितः, तत्र च सर्वाधिकं प्रियं फलं द्राक्षा आसीत् तत्फलम् कश्मीरप्रदेशे प्राचुर्येणाभवत्। कश्मीरवर्णनं कुर्वन् कविः भणति-विद्यावेश्मानि, शीतलं पयः द्राक्षा चेति पदार्थत्रयं तत्र सामान्यमासीत्। **द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभम्।** द्राक्षाया रसः **मार्द्वीकमकथ्यत**, तच्च प्रियं पेयमभूत्। दुर्भिक्षसमये महार्हम् तदभवत्। **दीन्नारेणाभवल्लभ्यं मार्द्वीकस्य पलद्वयम्।** द्राक्षाफलोत्पादनाय सघनानि उद्यानान्यभूवन् **"द्राक्षाषण्डद्रुमव्यूहसंबाधे"** तत्र च द्राक्षा-लताः विरेजिरे, यासु कदाचित् अश्वा अपि निरुद्धा अभवन् द्रुमेषु लतास्वेव च पक्वं द्राक्षाफलमतिमाधुर्यमावहत। **माधुर्याधिक्यमुत्पाका द्राक्षाद्रुम इवाययौ।** नगरशोभा द्राक्षालताभिरवर्धत। **द्राक्षास्फीतं च पनत्तम्।** अन्यफलेषु क्षीरिणः फलं, **पुष्पमपुष्टं क्षीरिणः फलम्।** नारिकेलफलं, यस्य रसं पीत्वा जना गतक्लमा बभूवुः, कदलीफलम्, प्रभृतयः अभूवन्। तस्मिन् समये प्राचीन-भारते च अतिथीनां सत्कारः फलैरेवाभूत्। ऋषिमुनयः अपि फलाहारेण जीवनं दधुः। फलपदं नैकस्थलेषु समागतम् **"शक्तः कियन्ति कः प्राप्तुम् फलान्यत्रेतिवादिनी", "अनन्तफल-सम्पत्तौ, "गृहीताल्पफलान्"** इत्यादिपदानि फलसंपदः सूचकानि ननु। नाम्ना तु कानि-चित् फलान्येवोद्घोषितानि। फलसंपदपदेन तत्बाहुल्यमपीङ्गितम्।

इक्षुरपि स्वादु प्रियं च चषणीयं फलमासीत् कविः मुहुर्मुहुः तत्प्रशंसां चकार, **वेधाः पुरोधुरामुपैति परीक्षकाणामिक्षोः फल-प्रजनेन कृतश्रमो यः।** 2–60॥

---

5 पृ० 65, 2–18, 4–102, 295, 5–270, 8–2449, 5–395, 6–272, 3–338, 181, 6–187, 7–758 श०क०द्र०भा 2 पृ० 32, 5–16, 3–225, 3–294, 8–140, 3078। (6) 1–42, 7–1220, 7–498, 8–2386,

एतदतिरिक्तं पालेवत-फलं (सेव इति भाषा) कपित्थ-फलं, दाडिम चेत्यादीनि फलानि बभूवुः। वने उत्पद्यमानं सिद्धानां प्रियं भोज्यं **कन्दमूलभूत्** तदेव शन्दमूलम-म्यभ्यधायि **(शन्दमूलपलाण्डुषु)**, पलाण्डु अपित भक्षणीयमभवत्।

**शाकम्**—"वन्यमुत्पलशाकाख्यं तिक्तशाकमवस्थितम्" इत्यत्र "उत्पलशाकम् कविना वर्णितम्। शाकेषु पलाण्डुभक्षणमति प्रचलितमभूत्।

**(10) मधु-मिष्टान्नं च**—मधुनः प्रयोगोऽतीवलोकप्रिय आसीत्, विवाहेषु च तद्विशेषेण प्रायुज्यत। अभ्यागतेषु समागतेषु तेभ्यः अर्घ्यंरूपे मधुमिश्रितमन्नम-दीयत। मिष्टान्ने अपूपस्य (मालपुआ इति भाषा) असकृदुल्लेखो वरीवर्ति। तद्विक्रयः अप्यभूत्। अपूपविक्रेत्री आपूपिका अकथ्यत, अपूपं खलूपहारे अप्यदीयत। तत् हि यवैः कोद्रवैश्च निर्मितमभूत्। गुडः शर्करा चापि मिष्टान्नमासीत्। इक्षुरसैः गुडः प्राप्यते स्म। **न्यस्तगुडक्रीडतुरंगमंडला।** तस्मिन् च सम्यक् संशोधिते शर्करा उपलभ्यते स्म। **"सितेयं शर्करेत्येकं कर्पूरं वदनेऽक्षिपत्।"**[7]

**(11) मांसम्**—राजतरंगिण्यां पौनः पुन्येन मांसभक्षणस्योल्लेखो मांसं लोक-प्रियं भोजनं साधयति विपत्काले सर्वविधजनानां भोजनं तदेवाभूत्। तुंजीन-राज्ये दुर्भिक्षे पतिते सर्व-विधमन्नं समाप्तं, तदनन्तरं कपोतमांसैरेव जनाः जठरपूर्तिम् कृत्वा जीवनं दधुः "**प्रजाश्च** प्रत्यहं प्राप्तैः कपोतैः जीवनं दधुः" ब्राह्मणा अपि मांसमभक्षयन्। क्षत्रियाः राजानः अपि सिंह-हरिण-महिषहस्ति-प्रभृतीनां मृगयां चक्रुः। मांसं खलु नैकविधमभूत्।

**(क) मत्स्यः**—मत्स्यः मत्स्यामिषं च सर्वाधिकप्रियमभूत्, नैकशस्तदुल्लेखो विद्यते। धीवरस्यापि विद्यते बहुश उल्लेखः यो हि मत्स्यान् जग्राह विक्रयंञ्चाकार्षीत्। मत्स्यानां मृगयां राजानः कुन्तैः कुर्युः भोजनाय। "**प्लवमानस्य मत्स्यस्य गात्रे कुन्तम-पातयत्।**" मत्स्यैरपि काचित् "मत्स्ययूषाख्या" औषधिः निर्मीयते स्म। शक्तिं सावर्ध-यदधिकं कामभोगलिप्तानां" **मत्स्ययूषादिभिर्वृष्टैर्नास्यपुष्टिरहीयत।**" षष्ठतरंगे मत्स्य-यज्ञस्यापि संकेतो वरीवर्ति, "**मत्स्यापूपयागविधायिनः।**मत्स्यैः मत्स्यरसः तैलं चापि प्राप्यते स्म।

**(ख) पक्षिणः**—पक्षिणामपि मांसमुपभुज्यते स्म "**झषपक्षिणाम्**" पक्षिषु च कपोतस्योल्लेखो विशेषरूपेणास्ति। तुंजीनराज्ये समुत्पन्ने दुर्भिक्षे, कपोतमांसैरेव जनाः प्राणान् दधुः

**(ग) गोमांसम्**—गोमांसभक्षका गोभुजः "**गोभुजां बल्लभाः**" न्यगद्यन्त। म्लेच्छ-भूमिषु तन्मांसमतिप्रियमासीत्, प्राचुर्येण च तदवाप्यत। यवन-शक-हूण-प्रभृतयो म्लेच्छा गोमांसमभुंजन्। लवन्या अपि तन्मासं बुभुजिरे **(केचित् बुभुजिरे तेषां गोमांसं म्लेच्छभूमिषु)।**

---

4–192, 7–1123, 4-155, 7, 9, 74, 8–3078, 7–1110, 8·1866, 2251, 7–285, 6–237–59, 6–356, 4–219, 20, 37, 3–267, 8–143, 2–130, 8–676, 5–49। (7) 4–228, 7–112, 8–140, 41, 2596।

**(छ) शूकरः**—तुरुष्काणां यवनानां च प्रियं भोजनं शूकरमांसमासीत्। तेषां च संगत्या हर्षः नृपतिरपि तन्मांसमभक्षयत्। **"बुभुजे ग्राम्यशूकरान्"**।

**(ङ) हरिणः**—हरिणानां तु मृगया विधीयते स्म तन्मांसमक्षणाय।

**(च) नरमांसम्**—नरमांसस्यापि भक्षणं व्यधायि, तीर्थयात्रां प्रस्थितस्य जलौकस्य मार्गमध्यगा काचिदवला नृमासं ययाचे भक्षणाय। **व्यावृणोद्विकृता भूत्वा सा नृमांसाश्रयां स्पृहाम्,** सत्वहिंसाराहितश्च नृपतिरपि स्वविग्रहात् मांसं ग्रहीतुमनुज्ञां ददौ। नरबलेरप्युल्लेखः असकृत् समागतः। परन्तु प्रायेण नरमांसभक्षणं पापममन्यत। बुभुक्षितः भोजः, दस्युभिः प्रदत्तमन्नं भोक्तुमुद्यतः अपि, तत् स्वज्ञात्योः लोठनविग्रहराज्ञोः विक्रयेण प्राप्तं विज्ञाय तत्भक्षणं ज्ञात्योः देहमांसभक्षणवत् पापं मेने।

**मांसभक्षण-प्रकारः**—भक्षणात् पूर्वम् मांसं पच्यते स्म अग्नौ। शलाकाया-मारोप्य वह्नौ भृष्टं मांसमधिकं लोकप्रियमासीत्। भृष्ट-मांसस्यासकृदुल्लेखो वरीवर्ति। तच्च स्निग्धं भोज्यममन्यत। **भृष्टमांसादिभोगैः, भुंजानोभृष्टमांसानि, भृष्टमांसा-दिराज्यभोगपुरस्सरैः**, इत्यादीनि पदानि भोजने भृष्टमांसस्य लोकप्रियतां सूचयन्ति। तदेव राज्ये अधिकृतमभवत्।

**मांसप्रकारः**—इत्थं च त्रिविधं मांसं भक्ष्यमभूत् (1) पशूनां मांसम्, अस्मिन् वर्गे, हरिण-शूकर-गौ-प्रभृतीनां मांसं गृह्यते। (2) पक्षिणां मांसं-अस्मिन् कपोतादीनां मांसमायाति। (3) जलचराणाम्—अत्र च मत्स्यादीनां मांसं प्रमुखमभूत्।

इत्थं मांसमतिप्रियं भोज्यमासीत् राजतरङ्गिण्या भारते कदाचित्तु अधिकपि-शितभक्षणेन, अधिकमजीर्णम् सत् तत् दुर्गन्धमजनयत्। **(अजीर्णपिशितोद्गार-नित्यदुर्गन्धकन्धराः)**।[8]

**(13) उपस्कर-सामग्री**—भोजनपाचनाय प्राचीन-कालवत् सम्प्रत्यपि उपस्कर-सामग्री प्रयुज्यते। लवणः, उषणः, (मरीचः) हिंगुः (हींग इति भाषा), **(हरिद्रार्द्रै रिवाश्यानम)** धान्या (धनियां इति भाषा), आर्द्रकम्, इत्यादीनि वस्तूनि प्रधानान्यासन् राजतरंगिण्याः भारते।[9]

**(13) ताम्बूलम्**—आधुनिक-कालवत् पुरा अपि भारतीया ताम्बूलप्रिया अभूवन्, **"प्रियताम्बूल-शीलस्य"** इति पदं तस्य लोकप्रियतां सूचयति। तद्भक्षणेन ओष्ठः रक्तवर्णः अभवत्। उत्सवेषु अतिथीनां कृते ताम्बूलदीयत **"ताम्बूलदान-**

---

(8) 2–51, 5–119, 6–11, 7–170, 522, 8–2313, 8–139, 1519, 5–6, 7–1232, 1149, 1–131,133, 7–1510, 8–1866 2251, 7–285।

(9) 7–1221, 8–2150, 5–382, 7–450, 5–302।

**व्यसनं पराध्योंत्सवता तथा"** राजानस्तु ताम्बूल-चर्वणव्यसनिनोऽभूवन् । पृष्ठभागात् ते सेवकात् पर्णपीठिकाः गृहीतवन्तः एवं **"ग्रहीतुमभ्यासः पृष्ठस्थाः पर्णवीठिकाः** तेषां ताम्बूलपत्राणि स्वर्णनिर्मितान्यभूवन् । **ताम्बूलं-स्वर्णभांजने ।** ताम्बूलेन सममेव पूगखंडः नागरखंडः पूगो वा अभुज्यत । कदाचित्तु पूगाभावे मौक्तिकमप्यभुज्यत । तमालं (तमाखुः इति) अपि ताम्बूले गृह्यते स्म । ताम्बूलपर्णस्य पूगखंडस्य च विक्रेतृणामप्युल्लेखो वरीवर्ति **"तेन नागरखंडादिपर्णविक्रयिणा नृपः"** ।[10]

**(14) हिमम्** —भक्ष्यवस्तुषु हिममप्यभूत् । तस्य विक्रयस्याप्युल्लेखाः प्राप्यन्ते । **"हिमाद्रौ हिम-विक्रयः ।"** हिमं खलु हिमवृष्ट्या संगृह्यते स्म । कश्मीरप्रदेशे तु तत् सर्वाधिकं भक्ष्यवस्तु आसीत् । समीपवर्तिनो हिमालयात् तदवाप्यत ।[11]

**(15) कर्पूरम्**— खाद्यवस्तुषु कर्पूरस्यापि संकेतो लभ्यते । उपहारेषु पक्वं कर्पूरं दीयते स्म । कदाचित्तु कस्यचित् लक्ष्यस्य प्राप्त्यै कर्पूरचर्वणं रुध्यते स्म । राजा हर्षः चन्दलाभिधायाः सुन्दर्याः समस्तधनराशेः प्राप्तिं यावत्-चर्वणं प्रतिषिद्धमकार्षीत् ।[12]

**पेय-वस्तूनि**—पेयवस्तुषु सर्वाधिकं प्रियं पेयं मदिरा आसीत् । कल्हणः अनेकनामभिस्तस्या वर्णनं व्यदधात् । मदिरा, महाचरुः, आसवः, मधु, मैरेयम्, सुरा सोम इत्यादीनि, नामानि प्रायेण समागतानि । कामक्रीड़ायाः सहायकद्रव्येषु मधु प्रधानमासीत् । रतिप्रसंगे कल्हणः पौनः पुन्येन तत्प्रभावमवर्णयत् मदिरापानेन संभोगाभिलाषः अवर्धत । कमला नाम नर्तकी मैरेयं पीत्वा मत्ता च भूत्वा जयपीडेन सह संभोगमवांच्छत् । **ततः कांच न पर्यंकशायी मैरेयमत्तया तयाऽर्थितः** । एकदा परिहासपुरे स्थितः रतिसुखमनुभवन्, अवरोधपरिवृतो मदिराक्षीवो ललितादित्यः सचिवाननुचितमादिदेश । खशराजः सोमपालः अपि सुरासेवनं विधाय स्त्रीप्रसंगे दिनं नीतवान् । रहः स्थितां क्षीबां योषितं प्राप्य संभोगं बिना त्यागकारी मूर्खः अमन्यत ।

मधुपानेनोत्पन्न उन्मादः क्षैव्यम्, अकथ्यत तद्युक्तो जनश्च मदिराक्षीवो न्यगद्यत । मदिरापानस्य प्रवृत्तिः राजपरिवारेषु, सामान्यजनतासु, विप्रेषु चापि सामान्याभूत् । किन्तु विप्रा समागानसमये नैव पपुः **"न विप्रगुरवः साम गायन्तो मदिरां पपुः"** । उत्सवप्रसंगे अपि सुरापानं व्यधायि । किन्तु पूजासमये तत्पानमनुचितममन्यत । पूजाकाले मदिरां पिबन् नृपतिः कलशः निन्दितो वर्तते । **(महाचरूणामाहारं नीतिमुत्सृज्य चाकरोत्)** ।

---

(10) 7–544, 787, 193, 1562, 8–71, 4–427, 30, 8–2124, 4–430, 7–194, 8–1947, 3–321 ।

(11) 7–1175, 4–138 । (12) 7–1122, 23, 24 ।

**सुरा-हानिः**—समाजे सुरापान-प्रवृत्तिः न कदापि प्रशंसां प्राप । कल्हणः तस्या नैकदोषान् वर्णयति । ललितादित्यो मदोन्मत्तः सन् प्रवरपुरदहनमादिदेश । पश्चात् च क्षीणक्षैव्यः स पश्चापं चकार । सचिवांश्च क्षैव्यावस्थायां न ममादेशं पालयन्तु इत्यादिदेश । "**कार्यम् न जातु तद्वाक्यं यत्क्षीबेन मयोच्यते ।**" कल्हणमते सुरापानेन पुरुषः भ्रष्टबुद्धिरजायत । मधुक्षैव्येन क्षीणबुद्धिः खशराजः सोमपालो वृथा प्रलपन् पशुवत् दुर्दशां प्राप । कविसम्मतौ मदिरामत्तं पुरुषं लक्ष्मीरपि जहाति ।

सत्स्वपि बहुषु दोषेषु मदिरापानव्यसनं न क्वापि न्यूनतां गतं विलोक्यते । मदिरापानस्य पात्रं पानपात्रं न्यगद्यत । "**धरित्रीपानपात्रेऽम्भः सीधुपूर्णे**" मदिरा केन वस्तुना निर्मीयते स्म इति स्पष्टं नोल्लिखितं कविना तथापि द्राक्षारसैः इक्षुभिः नारिकेलरसैः पुष्परागैश्च तन्निर्माणस्य कल्पना कर्तुम् शक्यते ।

**अन्य-वस्तूनि**—अन्येषु पेयवस्तुषु दुग्धं, तक्रं, नारिकेलजलम्, इक्षुरसः, द्राक्षारसः, आम्ररसः प्रभृतीनि प्रमुखान्यभूवन् ।[13]

## वेश-भूषा

भारतीयाः पुराकालादेव सौन्दर्यप्रियाः आसन् । अद्यापि च तेषां सौन्दर्यम् प्रति रुचिः सततं वर्धते । सौन्दर्यस्य प्रयुज्यमानसाधनेषु वस्त्राणालंकाराणाम् अन्यश्रृंगारवस्तूनाञ्च च महत्त्वपूर्णम् स्थानमासीत् । तेषां च बहुशः विद्यते उल्लेखः राजतरंगिण्याम् । कोविदैः नात्र चिन्तितं कदाचित् यत् भारतीयानां वस्त्रेषु कापि विशेषता सन्निहिता ननु । अद्यवत् तदापि श्रृंगारप्रियता, सौन्दर्यप्रियता चासीत् । किन्तु सा सरला सहजा चाभूत् ।

## वस्त्राणां प्रकाराः

राजतरंगिण्यां नैकविधवस्त्राणामुल्लेखः कल्हणेन कृतः । सूती-रेशमी-ऊनी-चेति भाषायां ख्यातानां त्रिविधाम्बराणां तदापि सत्ताभूत् । कवेः काव्ये क्षौमपत्रोर्ण-कौशेय-दुकूल-अंशुकप्रभृतीनि नामानि विलोक्यन्ते । वासस्-अम्बर-चीर-कंचुक पट-निचोलप्रभृतीनि नामानि अपि वस्त्राणां विलोक्यन्ते ।

**(1) दुकूलम्**—दुष्टं कूलति आवृणोतीति, व्युत्पत्या कूलं भवति (इगुपधज्ञाप्रीकिरः कः) इति सूत्रेण क प्रत्यये दुकूल-शब्दो निष्पन्नः । इदं वस्त्रं दुकूलवृक्षस्य त्वचः तन्तुभिश्च निष्पद्यते स्म । बंगदेशस्य दुकूलं शुभमभवत् डॉ० मोतीचन्द्र-मते । शब्दकलपद्रुमे दुकूलं क्षौमवस्त्रं, मेदिनीकोषे च सूक्ष्मवस्त्रमभिहितम् । हेमचन्द्रः दुकूलं पट्टवस्त्रमाह । यथा खलु सम्प्रति शान्तिपुरी-चन्देरी-स्थानस्य शाटिकाः, जयपुरस्य चापि चूंदड़ी इत्याख्या शाटिका अतिसूक्ष्मा भवन्ति । तथैव दुकूलमपि अतिशयसूक्ष्म-

---

(13) 4–310, 11, 16, 20, 6–10, 7–523, 6–150, 53, 54, 4–435, 8–3256, 5–393, 8–2787, 1466 ।

वस्त्रमासीत् । अंशुकात्तु दुकूलं स्थूलमभवत् । यतः पुरुषा दुकूलवस्त्रं दधुः, स्त्रियश्चापि शरीरस्याधःस्थाने दुकूलमेव प्रायुंजत । दुकूलस्य वर्णः प्रायेण धवल आसीत् । अस्य प्रयोगो गंगापदेन, कैलासेन यशपदेन च समं कविना कृतः खलु, गंगा-कैलास-यशसां वर्णः शुभ्रः अस्तीति नात्र विप्रतिपत्तिः। **(वेल्लद्गंगादुकूलायाः,वेल्लद्यशो दुकूलायाः 1–57, 84)** । ऋतुसंहारे दुकूलवर्णः ज्योत्स्नावत् धवलः अभिहितः, डॉ० मोतीचन्द्रः अभिदधाति यत् पौंड्रदेशे निर्मितं दुकूलं नीलं स्निग्धं, सुवर्णकुड्यया च निर्मितं, श्वेतरक्ताभमाहवत् ।[1]

(2) **अंशुकम्** – अंशुकम् सम्भवतः सर्वाधिकं लोकप्रियमम्बरमभूत् । ग्रीष्मे तस्य प्रयोगः बाहुल्येन बभूव । तत् खलु अतिसूक्ष्मं धवलं **(धवलांशुकैः)** चासीत् । शब्दकल्पद्रुमे अपि अस्य पुष्टिः भवति । यत्र प्रतिपादितं यत् "अंशुकं अंशून् कायति । कै शब्दे । आत इति । यद्वा अंशुभिः काशते । काशदीप्तौ (अन्येष्वपीति डः) वस्त्रमात्रं सूक्ष्मवस्त्रं । उत्तरीयवस्त्रमिति मेदिनी । शुकूल वस्त्रमित्यमरटीकायां (अधोवस्त्रं) पत्रं (तेजपात इति भाषा) इति राजनिर्घण्टः ।"

राजतरंगिण्याः प्रथमतरंगे स्थानद्वये शीर्षांशुकसिहलांशुकंचुकं शब्दौ वर्तेते । येन अंशुकमुपरिवस्त्रमासीदिति स्फुटं प्रतीयते । अन्यत्र च मूर्धांशुकं, स्तनावरणं चोल्लिखितं तदपि च उत्तरीयवस्त्रं, अंशुकमिति प्रतिपादयति ।

नैकविधमासीदंशुकम्, सिहलांशुकम्, चीनांशुकम्, रक्तांशुकम्, नीलांशुकम्, चेति, यदंशुकम् सिंहलादाययौ तत् सिंहलांशुकम् न्यगद्यत । तच्च सिंहलस्य राज्ञः हेमपादांकितमभवत् **(संवीतसिंहलांशुक-कंचुकाम्) (हेमपादाङ्किताम्)** । अंशुकेनैव नारीणां कंचुकिनी निर्मीयते स्म। अमरकोषे क्षौमदुकूलौ पर्यावाचिनावभिहितौ । राजद्वारवर्णने बाणः अंशुक-क्षौमौ पृथक् वर्णयति । अंशुकस्योपमा मन्दाकिनी-प्रवाहेण समं प्रदत्तास्ति । एकस्मिन् स्थले अंशुकस्य सुकुमारताया उपमा दुकूलस्य कोमलत्वेन समं दत्ता खलु, बहुशः पल्लव-पदेन सह तस्य प्रयोगोऽस्ति, **चीनांशुंक-सुकुमारे शोण-सैकते दुकूल-कोमले शयने इव समुपविष्टा** । चीनदेशादानीतं चीनां-शुकमकथ्यत, तदपि क्षौमवस्त्रं (रेशमी) आसीत् । यद्वा अति सूक्ष्मं चीनदेशे निर्मितं वा वस्त्रं चीनांशुकं न्यगद्यत । मूर्धांशुक-शीर्षांशुकादिपदैः समाजे पर्दाप्रथायाः सूचनापि प्राप्यते । तेनैव वक्षः स्थलमाच्छाद्यत । अंशुकेन खलु उष्णीषनिर्माणं बभूव । स्वर्ण-सूत्रैः तत्वस्त्रमलंक्रियत । **(कनकांशुकेन)** ।

स्यूतानां वस्त्राणां प्रचलनमारब्धमभूत् । "**संवीतसिहलांशुककंचुकां, नीलनि-चोलिन्यौ**" इत्यादिपदानि तत्पुष्टिं कुर्वन्ति । अयः शंकून्, सूचिका, पटच्छेदवर्ती (कैंची) इति पदान्यपि तदेव पोषयन्ति ।[2]

---

(1) (2) 1–248, 294, 372, श०क०द्रु०भा० 1 पृ० 1 हर्षचरित एक अध्ययन पृ० 76, 77, 78, डॉ० मोतीचन्द प्राचीन वेशभूषा–पृ० 50, 1–207,

(3) **क्षौमम्** – सम्प्रति रेशमी इति विख्यातं वस्त्रमेव पुरा क्षौमम् निगद्यते स्म । संभवतः शुभ्रवर्णस्य क्षौमं लोकप्रियमासीत् (**धौत-क्षौमक्षालनसंनिभः**) क्षौममेव पट्टाम्बरो न्यगद्यत ।[3]

**ऊर्णावस्त्रम्-कम्बलश्च** – ऊर्णशब्दस्य प्रयोगो बहुशो वर्तते राजतरंगिण्याम्, कविः प्रायेण कश्मीराणामेव वर्णनं करोति, तत्र च भयावहशीतमभूत् अद्यापि च भवति, अतः ऊर्णस्य, महत्ताधिकाभूत् । ऊर्णवस्त्रेषु कम्बलस्य सर्वाधिकः प्रचार आसीत् । अद्यापि च कश्मीरेषु महान् प्रचारो वर्तते । कम्बलाः स्थूला अपि आसन् (**स्थूल-कम्बल-वाहिनः**) सूक्ष्माश्चापि, ब्राह्मणैः बाहुल्येन तेषां प्रयोगो व्यधायि, प्रायेण कम्बलधारणं निर्धनतायाःद्योतकमासीत् । ऊर्णानिर्मितानां गौरवाहानामपि (दुशाला) बाहुल्येन प्रयोगः समजनि ।[4]

(4) **पलालम्** – पलालं खलु घासविशेषः प्रतीयते, येन स्यूतेन वस्त्रेण शरीरमाच्छाद्यते, स्म शीतर्तौ ।[5]

(5) **चीरम्** — निम्नकोटिकं वस्त्रमासीत् शूलारोप्यमाणेन तत्प्रयोगः अकारि ।[6]

(6) **भंग-वस्त्रम्** — सन इत्याख्यं वस्तु अतिप्रसिद्धमस्ति अद्यत्वे तदेव भंगपदेन संकेतितं कविना, तस्य वस्त्राणामपि प्रयोगः निर्धनैः क्रियते स्म । (**अशस्तभंगसूत्र-नया इव**) पदे तस्य संकेतो विद्यते । कारगारस्यापराधिभ्यः अपि तदेव वस्त्र-मदायि ।[7]

(7) **पटबन्धः**— शिरसि बध्यमानं वस्त्रं पटबन्धः आसीत् । राजा महादेवी चापि तं बबन्ध ।[8]

(8) **प्रावरणम्** – तल्पाच्छदानाय, प्रयुज्यमानं वस्त्रं प्रावरणं प्रावारवेष्टितं वा न्यगद्यत, तथाविधं वस्त्रमेव संभवतः वासस्-पदेन प्रसिद्धमासीत् ।[9] शीतावरो-धायापि प्रावरणं प्रायुज्यत ।

(9) **वर्म** —कवच इत्याख्यम् सैनिकानां शरीरावरणं वर्म इत्यभवत्, तद्धि लोहनिर्मितं गजचर्म-निर्मितम्, महिषचर्म-निर्मितं वाभूत् ।[10]

(10) **शिरःशाटकम्**—शिरसि प्रयुज्यमानं साफा इति ख्यातं वस्त्रं शिरः शाटकं शिरः शाटः वेति पदेन सूचितं कविना ।[11]

---

299, 7–348, 849, 851, 5–392, 8–2448, 3–229, 4–577, 3–522, 8–3211, 2346 । (3) 3–3, 5–430, 432 । (4) 7–1221, 1645, 40, 171, 461, 8–2695, 2635, 4–670 । (5) 8–1435, 1436 । (6) 4–574 । (7) 7–300, 893 । (8) 8–2913, 3065 । (9) 3–162, 8–2259, 131, 2–43 । (10) 7–397, 404 । (11) 6–100 8–2273 ।

**(11) उष्णीषः**—पगड़ी इति लोके प्रसिद्धं शिरोवस्त्रं उष्णीष इत्यासीत् । राजभिः सैनिकैः, नागरैः, प्रायेण सर्वविधजनैः तस्य प्रयोगे व्यधायि । कदाचित् एका पट्टिकापि प्रायुज्यत सा च **उष्णीपट्टिका** इति न्यगद्यत । सा प्रायेण कटिप्रदेशे बध्यते स्म । उष्णीषाः भिन्नवर्णा आसन्, **धवलोष्णीषाः**, **रक्तोष्णीषाः** प्रभृतीनि पदानि तद्वर्णम् सूचयन्ति ।[12]

**(11) अधराम्बरः**—भाषायां "लंहगा" इति ख्यातं वस्त्रं "अधराम्बरः" इत्यभिहितः (7–930) ।

**(13) अधरांशुकम्**—भिन्नवर्णमधोवस्त्रमभूत्, सूक्ष्मं च तदासीत्, प्रायेण स्त्रीभिः तत्प्रायुज्यत, संभोग-समये तत् शिथिलं व्यधायि । कटिप्रदेशस्य वस्त्रं कटिपट आसीत् ।[13]

**(14) कृत्तिका-कौपीनम्, त्वक् च**—इमानि खलु मुनिजनानां कृते आसन्, कौपीनं "लंगोट" इति भाषायां प्रसिद्धमस्ति, कृत्तिकायां मृगाजिनं, सिंहचर्म वा प्रयुज्यते स्म । भिक्षूणां कौपीनं काषायवर्णमभूत्, कृत्तिकापि भिन्नवर्णासीत् **(रक्ताद्रकृत्तिवस्त्रानि)** । इमानि तावदासन् वस्त्राणि ।

अनेकेषां शरीर-भूषणानामपि उल्लेखाः राजतरंगिण्यां सन्ति । ते च इमे वर्तन्ते ।[14]

## आभूषणानि

**शिरोभूषणम्**—**शिखामणिः**-शिखामणिना शिरः अलंक्रियते स्म । पुरुषैः स्त्रीभिश्च तत्प्रयोगो व्यधायि ।

**चूड़ा**—मस्तके अलंक्रियते स्म चन्दनतिलकेन, तमाल-तिलकेनापि मस्तक-शोभा अवर्धत । **उष्णीषः** अपि शिरोभूषमणभूत् । शतशस्तस्य संकेताः राजतरंगिण्यां सन्ति । **काकपक्षः** अपि शिरोभूषणे महत्त्वं दधौ ।

**कर्ण-भूषणम्-कर्णिका**—पद्मरागमणि-कमलनाल-पल्लव-पुष्पप्रभृतीनि कर्ण-भूषणान्यासन् । कर्णावतंसपदं प्रायेणागतं काव्ये यद्धि कर्णश्रृंगारस्य सूचनां ददाति । वर्षर्तौ-नवकदम्बस्य कर्णपूरेण शरदर्तौ नीलकमलैः, वसन्तर्तौ च नवकर्णिकाभिः नार्यः कर्णावतंसं चक्रुः । आम्रमंजरीभिः अशोकावतंसैश्चापि श्रोत्राणां सज्जा व्यधायि । एतदतिरिक्तं स्वर्ण-केतकी-स्वर्णताटंक-(झुमका)-कुंडलप्रभृतयः नैके अलंकारा अभूवन् ।[15]

**पादभूषणम्**—प्रथमतरंगे नुपुरध्वनिः **"(शिंजानमंजुमंजीरा)"** पदं समागतं येन च नूपुरप्रधानं पादभूषमासीदिति निश्चीयते । कटकादीन्यपि चरणेषु धार्यन्ते स्म । अंगुलिषु अंगुलीयकं धार्यते स्म । यावक-द्रवेण सम्यक्-श्रृंगारोऽक्रियत पादानाम् ।[16]

---

(12) 7–1640,476, 8–3233, 5–356 । (13) 7–1665, 4–43, 8–1716, 1883, 5–420 । (14) 4–180, 262, 8–2405, 3006 । (15) 1–254, 220, 81, 8–1337, 3–326, 7–927, 1–208, 4–151, 7–812, 749, 8–1888 3160 । (16) 1–206, 247, 3–415, 8–330, 7–929,

**नेत्रभूषणम्**—"चारुलोचने" पदं प्रतिपादयति यत् नेत्रालंकरणमपि व्यधायि। तत्र च अंजनं विशेषरूपेण प्रायुज्यत। प्रथमतरंगे नागकन्ययोः सौन्दर्य-वर्णने श्लोकद्वयं कविः लिलेख।

कर्णिका पद्मरागाब्जनाल-लीलायित-स्पृशा।
मनोज्ञ-धवलापांगे तनीयोऽञ्जनरेखया ।। 1–208 ।।
हारिनेत्रांचलै मंदमारुतान्दोलनाकुलैः।
सनाथांसयुगे-रूपपताकापल्लवैरिव ।। 1–209 ।।

अत्र खलु कर्णयोः नेत्रयोश्च अलंकरणं विशेष-रूपेणोल्लिखितम्। नेत्रे च धवलापांगे अंजन-रेखायाः चारुता प्रदर्शिता।[16]

एतदतिरिक्तं हारः, मुक्तावलिश्च ग्रीवायाः, शंख खशानां कपोलानाम्, अंगुलीयकं वलय-कंकणं च करस्य, मौलिः, चूड़ा, शिखामणिश्च केशानामलंकरण-मभवत्। अनेकेषां मणीनामपि विद्यते राजतरंगिण्यां वर्णनं यैः खलु शरीरालंकरणं विधीयते स्म। चिन्तामणिः, चन्द्रकान्तमणिः (**शशिमणिः**), सूर्यकान्तमणिः, तपनोपलः, वज्रमणिः, वैदूर्यमणिः तृणमणिः, स्फटिकमणिः, कुलचूड़ामणिः, इमे मणयः पौनः पुन्येन वर्णिताः सन्ति। विविधांगेषु एतेषां प्रयोगः अभवत्।

आभूषणानि खलु स्वर्णरजतादिभिः निर्मीयन्ते स्म। स्वर्णकमलमपि प्रायुज्यत।[17]

## शृंगार-वस्तूनि

शरीरालंकरणे न केवलं वस्त्राणामलंकाराणां च महत्त्वपूर्णं स्थानमासी-दपितु, शृंगारवस्तून्यपि महत्गौरवं दधुः। अद्यवत् प्रायेण सर्वविधानि वस्तूनि भारतवर्षे प्रचलितान्यासन्। **कुंकुमं**—अतीव लोकप्रियं वस्तु अभवत् कश्मीरेषु तदुत्पत्तिः बाहुल्येनाभवत्। प्रायेण मस्तके तिलकालंकारणं सीमन्ते च कुंकुममेव प्रायुज्यत। पूजाकार्येष्वपि तत्प्रयोगो बभूव। यज्ञाद्युत्वेषु अतिथीनां सत्कारे अपि तदुपयोगः अभवत्। चरणेषु समस्तशरीरे चैव कुंकुमलेपः अभवत्। पुरुषा अपि तत्प्रयोगं चक्रुः, सुस्सल-जयसिंहयोः चरणाः कुंकुमचर्चिता वर्णिताः सन्ति। शरीरे लिप्तं तत् अद्भुतसुगन्धमजनयत्। चर्चितो भालः अतीव रमणीयतां दधौ। पुरुषा अपि मस्तके तस्य तिलकं चक्रुः। मृतस्यापि मस्तके तिलकं व्यधायि, सुज्जौ मृते तन्मस्तके कुंकुमतिलकमक्रियत। **कर्पूरमपि** महत्त्वपूर्णम् शृंगार-साधनमासीत्। तस्य

(16) 1–207, 208, 109। (17) 8–1745. 5–13, 8–2366, 329, 6–34, 35, 8–3181, 3028, 6–161, 7–883, 8–3211, 3369, 5–355, 165, 8–3143, 3030, 4–355, 3–291, 298, 300, 8–2826, 2830, 3025, 3119, 1745, 3208, 2369, 3368, 3391, 3376।

चूर्णस्य लेपः समस्त-शरीरे अभवत्। स च शैत्यं ददौ। अद्यत्वे यथा "पाऊडर" इत्याख्यं वस्तु प्रयुज्यते, तथैव कर्पूरचूर्णस्य प्रयोगः पुराभूत्। **अंगरागः** अपि विशेषः श्रृंगारलेप आसीत् चन्दनकेसरादिभिः निर्मितः, स शरीरे लिप्तः सन् परमां शान्ति ददौ। **चन्दनस्यापि** लेपो मुखे शरीरे च विधीयते स्म। अनेकानि गन्धद्रव्याणि अपि तदा प्रयुज्यन्ते स्म। इमानि खलु वस्त्रेष्वपि प्रायुज्यन्त। तच्च सुगन्धितं चक्रुः। यावकद्रवेण चरणा अलंकृता अक्रियन्त। पुरुषाः स्त्रियश्च सर्वे अपि तस्य प्रयोगमकार्षुः।

**स्रग्वी, पुष्पमाला**—वापि नारीणां श्रृंगारस्य महत्त्वपूर्णम् साधनमासीत्। **अंजनं**—पुष्पमाला स्त्रीणां सर्वाधिकप्रियं नेत्रव्यंजनमासीत्। एतैः वस्तुभिः प्रसाधनं **दर्पणं** विना नाभूत्। अनेकशो दर्पणानां वर्णनं राजतरंगिण्यां समागतमस्ति, दर्पणानामपि विभिन्नप्रकारा आसन्, तेषु च विलासदर्पणाश्च महत्वपूर्णा अभूवन्। तेषु प्रतिविम्बितं शरीरमतीव रमणीयं वभूव।

**केशालंकरणम्**—पुरुषाः स्वियश्च शरीरस्य प्रत्येकमंगे प्रसाधनमाकार्षुः। केशानामपि विशेषरूपेणालंकरणं व्यधायि। केशसमूहः धमिल्लमाला अभण्यत। स हि नैकमालाभिः अलंक्रियते स्म, सुगन्ध-द्रव्यैश्च सुगन्धो व्यधायि। नार्यः वेणिषु विभिन्नपुष्पाणि, स्वर्णकेतक्यः, कमलानि, पल्लवानि च अलंकुर्वन्ति स्म। केशाः प्रायेण लम्बमानाः शेफालिकालंकृताः, अभूवन् आकुंचिताः केशा चूर्णकुन्तला न्यगद्यन्त। केशेषु चन्दनादिलेपः अपि अक्रियत। पुरुषाः स्वकूर्चश्मश्रूणि चाप्यलंकृतानि चक्रुः। तत्र केसरलेपो व्यधायि।[18]

**वेषः**—ऋतोः अनुसारं जना वेषपरिवर्तनं चक्रुः वेषः अपि भिन्नवर्गाणां पुरुषाणां भिन्ना एवाभूवन्।

**(1) भूपतेः वेषभूषा**—राज्ञः विशेष-वेषस्य सूचना नैकपदैः प्राप्यते **(राजोचितनेपथ्यः)** तं विशेषवेषं धारयित्वासौ नगरे सभायां वा ययौ। सामान्यजनवत् राजापि अंशुकं दुकूलं च दधौ। किन्तु तदुभयं विशेषरूपेण सज्जितमलंकृतं चाभवत्। स उपरिवस्त्रं, अधोवस्त्रं चापि दधौ। शरीरे तस्य विविधालंकारा अशोभन्त। करे कंकणः अंगदः च, भुजयोः केयूरे, कर्णयोः कुंडले, ग्रीवायां च हारः व्यराजत। शिरसि तस्य अतीव सुन्दरः उष्णीषः शुशोभ। वर्णेन यः प्रायेण धवलो बभूव। उष्णीषे च

---

18. 1–42, 8–241। 1119, 1897, 2151, 3078, 7–1266, 1435, 1122, 931, 859, 3–388, 8–2051, 4–127, 83303, 3–415, 7–301, 6–127, 7–179, 720, 8–1618, 4–154, 590, 5–357, 7–728, 945, 922।

किरीटं बभौ, तद्विविविधरत्नैः, स्वर्णकिंकिणीभिः शोणमणिभिश्च निरतिशयशोभामवहत् । सामन्ता अपि रत्नजटितं किरीटं धारयामासुः, यत्र च साम्राजः आज्ञादृश्यत । तत्किरीटं छत्रं न्यगद्यत, प्रायेण स्वर्णनिर्मितं तदभवत्, तदेव स्वर्णपत्रं, स्वर्णातपत्रं, हेमच्छत्रं चोच्यते स्म, राजनि प्रचलिते, किरीटस्य, मणयः किंकिण्यो वा चेलुः (संचारितातपत्रेण) गमनसमये सेवका चामराभ्यां तदुपरिपवनं जनयामासुः । आतपे च शैत्ये वा तस्मिन् प्रस्थिते तदनुरुपं शीतोष्णापवारणं प्रायुज्यत । कूर्चश्मश्रूण्यपि तस्य सज्जितान्यभवन् । स पादयोः पादत्राणं धारयति स्म । युद्धकाले राजा शिरसि शिरस्त्राणं, शरीरे, कवचं, मस्तके च विजयपट्टांचलं दधौ । इत्थं च वस्त्रालंकार-छत्र-चामर-आतपवारणालंकृत- नृपतिः सर्वेषां चित्तान्याकर्षितानि चकार ।[19]

**(2) सभासदः वेषः**—सभायां स्थितानां सभ्यानां समासदानां वा वेषः अपि सुन्दरः आसीत् । ते वै चित्राम्बराणि दधुः । शिरसि तेषामुष्णीषाः पादेषु च उपानहः अवश्यमभूवन् ते अपि हारादिकं भूषणं दधुः ।

**(3) सन्यासि-वेषः व्रतिवेषश्च**—सन्यासिनां वस्त्राणि काषायाणि अभूवन् । व्रतिनां च धौतानि बभूवुः । करे ते दंडं कमण्डलुं, रुद्राक्षमालां च दधुः । जटाभिस्ते सुशोभिता अभूवन् ।

**(4) सैनिक-वेषः**—सैनिकानां वेषः साधारणजनेभ्यः भिन्नः आसीत् । ते वै क्षौमकंचुकमाधाय तदुपरि कवचं धारयामासुः । यद्धि लोहेन चर्मणा वा निर्मितमभवत् । शिरसि शिरस्त्राणमशोभत । तेषां कर्णयोः कुंडलानि विरेजिरे । वीरपट्टांचलैः ते अतिशयशोभां प्रापुः । शिरस्त्राणाच्छादितास्तेषामुष्णीषा अतीवरम्या अभवन् । पादेषु पादत्राणा अभूवन् ।[20]

**(5) नारीवेषः**—नारीणामधोवस्त्रं शाटिकासीत्, शरीरस्य प्रत्येकमंगे ताः प्रसाधनं चक्रुः । विविधालंकारान् ताः दधुः । विविधलेपैश्च स्वसौन्दर्यवर्धनमकार्षुः ।

**(6) छात्राणां वेषः**—छात्राः शुभ्रवस्त्रं दधुं दंडं च करे धारयामासुः, जटाभिस्ते अशोभन्त । एतदतिरिक्तं स्नानवेशः, पूजावेशः, शयनवेषः, ग्रीष्म-शीत-हेमन्तकालीनवेषः, विवाह-वेषः, किरात-वेषः, विरहिणीवेषश्चापि यथास्थानं वर्णितः कल्हणेन ।

---

(19) 3-169, 2–119, 8-1826, 4-542, 69, 458, 5-380, 7-876, 4-132, 664, 3–338, 8–370, 5–138, 8–3303, 3365 3364, 3368, 3367, 14, 34, 30, 3–32, 4–720, 5–18, 342 से 47, 877, 8–3403 । (20) 7–927, 8–1881, 1434, 330, 2617, 3–320, 6–100, 3–273, 267, 2–161, 127, 7–1193, 1478, 1544, 8–2845, 1835, 1744, 1747 ।

# समाजे उत्सवाः मनोविनोदाश्च

भारतवासिनः प्राक्तन-कालादेव उत्सवप्रियाः सन्ति। मनोरंजनमेव तेषामुत्सवानां प्रधानमुद्देश्यं वरीवर्ति। । आनन्दलाभं प्रत्येकं जनो वांछति, आनन्दितो जन एव आत्मसुखं लभते स एव परमात्मानं प्राप्नोति। भारतीय-संस्कृतौ परमात्मा आनन्दरूपः वर्णितः अस्ति। अतः तं लब्धुं भारतीयाः समये 2 विविधोत्सवान् पर्वाणि च चक्रुः। राजतरंगिण्यां येषां पर्वाणामुत्सवानां चोल्लेखो वरीवर्ति। ते विशेषमासेषु विशेषर्तुषु विशेषधर्मकृत्येषु च समायोज्यन्त। ते च इमे सन्ति।

**(1) चैत्रोत्सवः**–चैत्रमासे सम्पाद्यमान उत्सवः चैत्रोत्सव आसीत्। अयमेव वस्तुतः वसन्तोत्सवः वर्तते। वसन्तर्तौ समागते सर्वत्र वृक्षा वनानि च पुष्पैःनवपल्लवैश्चालंकृतानि भवन्ति। प्रकृतिः नवं रूपं धत्ते। अत एव प्रकृतिप्रिया भारतीयाः प्रमुदिता सन्तः इममुत्सवं चक्रुः वसन्तगीतमगायन्, ननृतुश्च। अस्मिन्नेवावसरे कामदेवपूजा, व्यभवत्। अयमुत्सवः जनेभ्यःआह्लादं ददौ। जनानां आशाश्चापूरयत्। सप्तमतरंगे हरिराजस्य राज्यकाले चैत्रोत्सवस्योल्लेखो वर्तते। सम्प्रत्यपि भारतवर्षे विशेषतश्च तस्य कश्मीरप्रदेशे अयमुत्सवः सामोदं सम्पाद्यते।

**(2) आषाढोत्सवः**—आषाढमासे आयोज्यमानः महोत्सवः आषाढी, आषाढोत्सवो वा न्यगद्यत, आषाढस्य पूर्णिमावस्थायामुत्सवः समजनि, कश्मीराणां नन्दिक्षेत्रतीर्थे अयं सम्पाद्यते स्म। नीलमतपुराणे देवस्वप्न इत्याख्यं पर्वोल्लिखितं खलु यद्धि आषाढस्यान्तिमदशदिवसेषु बभूव। आषाढमासे एव प्रायेण जनाः अन्नादिसम्पदा अलंकृता भवन्ति। अत एव संभवतः अयमुत्सवः समपाद्यत। जयसिंहसमये आषाढोत्सवोल्लेखः राजरंगिण्याः अष्टमतरंगे विद्यते।

**(3) महीमानोत्सवः**–अस्योत्सवस्योल्लेखः नीलपुराणे वर्तते, तदनुसारं फाल्गुनस्याष्टम्यां, सम्पाद्यमाने अस्मिन्नुत्सवे अनशनं व्यधीयत। देवानां पितॄणां च सम्माने हिमे दीपकाः प्रज्वाल्यन्ते स्म। अन्येद्युश्च सहभोजः अभवत्। मदिरायाश्चापि पानं व्यधायि। ब्राह्मणेभ्यः विशेषभोजनमदीयत। साम्प्रतं तु केवल प्रथानिर्वाहाय कश्मीरेषु पहलगांव इति स्थाने अस्मिन् दिवसे अनशनं जायते, दीपाश्च दीप्यन्ते। पुराकालवत् महानुत्सवः नैव भवतीदानीम्। एकः अपरः उत्सवः लघु–महीमानोत्सवः आसीत् यस्य वर्णनमपि नीलमतपुराणे वर्तते यः माघमासे सम्पाद्यते स्म। जयसिंहराज्ये महीमानोत्सवः समजनि।

**(4) महेन्द्रमहः**—अयमुत्सवः इन्द्रं प्रति श्रद्धां प्रदर्शयितुमायोज्यते स्म। अयमेव कालिदासेन पुरुहूतोत्सव इत्यभिहितः। श्रीमतः भगवत्शरणस्य मते भाद्रपदमासस्य शुक्लपक्षे अष्टमीतः द्वादशीपर्यन्तमयमुत्सवः पंचदिनानि यावत् समपाद्यत। अस्मिन्नवसरे राजा वृष्ट्यै इन्द्रपूजां चकार, विशालं यज्ञं च जुहाव। मल्लिनाथो ब्रूते "एवं **यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठर। पर्जन्यः कामवर्षी स्यात् तस्य राज्ये न संशयः**"। काणे-महोदयस्य सम्मतौ अस्मिन्मुत्सवे एकं स्तम्भ स्थापयित्वा

ध्वजः अक्रियत । तदाकार-विषये स आह **गजाकारं, चतुस्तम्भं पुरद्वारे प्रतिष्ठितम् । पौराः कुर्वन्ति शरदि पुरुहूत-महोत्सवम्** । अयमुत्सवः उच्चलसमये उल्लिखितः खलु ।

(5) **इन्द्रद्वादशी-उत्सवः**—अयमुत्सवः भाद्रपदमासस्य शुक्लपक्षे द्वादश्यां समायोज्यत, अस्मिन्नेव दिवसे । वाराहक्षेत्रयात्रा व्यधायि । जनाः नूतनानि महार्हाणि चाम्बराणि धारयित्वा महता प्रमोदेनोत्सवममुं सम्पादयामासुः । उपरि-वर्णितः महेन्द्रमहः उत्सवः संभवतः अस्मिन्नेव दिवसे समजनि । उपरिप्रदर्शितं विदुषां मतमपि अस्या इन्द्रद्वादश्या एव संकेतं करोति । अस्योत्सवस्य वर्णनं अष्टमतरंगे उच्चलस्य राज्यकाले, सुस्सलस्य च राज्यकाले वर्तते । अस्मिन्नुत्सवे । द्वंद्वयुद्धमभव । दंगल इत्याख्यं चाप्यायोज्यते स्म । तत्र प्राप्तं वित्तं वीरेभ्यः वितीर्यते स्म ।

(6) **सूर्स-ग्रहण-पर्व** – सूर्य-ग्रहण-पर्व भारतवर्षे सम्प्रत्यपि सोल्लासं सम्पाद्यते । कुरुक्षेत्रे सम्प्रत्यपि पर्वणः समये सहस्रशः तीर्थयात्रिणः समागच्छन्ति, महोत्सवे भागं गृहीतुम् । तत्र स्थितेषु सरोवरेषु च स्नातुम् । तस्य पर्वणः स्नानस्यापि चोल्लेखः राजतरंगिण्यां कल्हणेन कृतः एकस्मिन्नेव पद्ये । अस्य तीर्थस्य यात्रा अतीव विख्याता आसीत् भारतवर्षे, सम्प्रति चास्ति । जयसिंहस्य राज्यकाले अस्योत्सवस्योल्लेख आस्ते ।[1]

(7) **तक्षकयात्रामहोत्सवः**—नागाधीशस्य तक्षकस्य पूजायां सम्माने च भारतवर्षे महान् यात्रामहोत्सवः समजनि ज्येष्ठमासस्य कृष्णाद्वादश्याम् । सहस्रशो यात्रिणः अस्यां यात्रायां सम्मिलिता अभूवन् । यात्रायां सम्पान्नायां, एकस्मिन् स्थाने (तीर्थे) जना एकत्रा बभूवुः, अनेके उत्सवाश्च तत्र समपाद्यन्त । तस्मिन् उत्सवे भारतस्य प्रतिकोणात् नट-चारणेन्द्रजालिक-प्रभृतयः समागच्छन् जनानां मनोरंजनाय । जनाः जगुः ननृतुश्च । कविः महोत्सवस्य स्पष्टं चित्रमेव एकस्मिन् पद्य प्रस्तौति —

क्रमात् प्रववृते सोऽथ नटचारण-संकुलः ।
प्रेक्षिलोक-समाकीर्णस्तत्र यात्रामहोत्सवः ।। 1–222 ।।

अस्मिन्नेवासरे श्रद्धालवो जना लक्षकस्य पूजां चक्रुः । राज्ञः नरस्य राज्यकाले अस्योत्सवस्योल्लेखो वर्तते ।

(8) **पुष्पलिंगार्चनोत्सवः**—भारतवर्षे लिंगपूजा पुराकालादद्यावधि प्रचलिता विद्यते । लिंगनिर्माणं प्रस्तरैः हिमैः पुष्पैश्च बभूव । प्रस्तरलिंगानां पूजा तु समस्त-भारते प्रचलितासीत् । किन्तु हिमलिंगं पुष्पलिंगञ्च विशेषतः कश्मीरेषु पूज्यते स्म । अद्यापि हिमलिंग-पूजायां पुराकालवत् "अमरेश्वर-यात्रा" भवति । पुष्पलिंगार्चन.समये महानुत्सवः समपद्यत, संभवतः वसन्ततौं इदं पर्व समजनि । सर्वस्थानेषु, जनाः तेषां

(1) 8–2364, 2072, 170, 182, 495, 540, 2220 ।

पूजायै प्रभूत-संख्यायां भागमगृह्णन् सन्धिमतेः आर्यराजस्य राज्यशासने अस्योत्सवस्य स्फुटं वर्णनमास्ते ।

**(9) जागरोत्सवः**—अनेकेषां धार्मिकपर्वणां समये रात्रौ जागरणं व्यधायि विशेषोत्सवाश्च समपाद्यन्त । जागरोत्सवे च शिवप्रभृतीनां देवानां पूजाभवत्, उत्सवे अनेके जनाः सम्मिलिता अभवन् । पुरुषाः स्त्रियश्च तत्र समाययुः । सन्धिमतिः आर्यराजः स्वभार्याभिः समं जागरोत्सवं सम्पादयामास ।

**(10) तिलद्वादशी**—तिलद्वादशी-पर्व माघमासस्य कृष्णपक्षे समपाद्यत । बहवो जनाः एकत्रा भूत्वा यज्ञमेकमजुह्वन्, तत्र च तिलानामाहुतिं ददुः तदैव च संभवतः तिलमोदकानां भक्षणं व्यधायि । नीलमतपुराणे अस्य पर्वणः उल्लेखः अस्ति । राजतरंगिण्याः तृतीये तरंगे शंकरवर्मणः राज्ये उत्सवस्य उल्लेखः अस्ति, तस्य च राज्ञः प्रधानमहिषी हंसी, अस्मिन्नुत्सवे सम्मिलिताभूत् ।

**(11) सहस्रभक्तोत्सवः**—विजयिनो राजानः प्रमुदितमानसाः सन्तः नैकविधं विजयोत्सवं सम्पादयन्ति स्म । तदुत्सवेषु सहस्रभक्तोत्सवः अपि अद्भुतः उत्सवः आसीत् । अयं खलु भोजोत्सवो ऽभवत्, यत्र च सहस्रशो ब्राह्मणेभ्यो भोजनमदीयत । दिग्विजयात् प्रतिनिवृतः सम्राट् ललितादित्यो मुक्तापीडः सहस्रभक्तोत्सवं चकार ।

**(12) यागोत्सवः विवाहोत्सवश्च**—अनेकयज्ञानां प्रचारः भारतवर्षे अभूत् इति प्रागेव मया लिखितम् । प्रत्येकं यज्ञः उत्सवरूपे सम्पाद्यते स्म । अतः एव स यागोत्सवो न्यगद्यत । विप्राः कोविदाश्च एकत्रीभूय यज्ञं चक्रुः, यागोत्सवस्य संयोजका राजानो धनिका वाभूवन् । यज्ञ-समाप्तौ याचकेभ्यः अन्नधनादिदानं व्यधायि, ब्राह्मणेभ्यश्च स्वर्ण-रत्न-अग्रहाराः प्रादीयन्त । यागोत्सवे कदाचित् नरबलिरपि बभूव । भट्टानाम्नी कमनीया कान्ता वकं नरपतिं स्वयागोत्सवे निमन्त्रितं विधाय तत्र पुत्रशतोपतेस्य तस्य बलिं ददौ । विवाहोत्सवः अपि महता समारोहेणायोज्यते स्म । शतशः जनाः तत्र समाययुः । राजपरिवारेषु स्वयंवरानन्तरं विवाहोत्सवो बभूव । विप्रैः पुरोहितैश्च विवाहसंस्कारो व्यधीयत । वरःवधूः च स्वपरिवारैः सह अतिष्ठताम् । कन्यादानानन्तरं, संस्कारसमाप्तौ च दानमदीयत । संस्कारात् पूर्वम् पश्चात् च बहवः प्रमोदोत्सवाः समपाद्यन्त उभयपक्षीयैः ।[2] इमे खलु आसन् उत्सवाः धार्मिक पर्वाणि च यैः खलु जनानां मनोरंजनं बभूव ।

**(1) विनोद-गोष्ठी**—मनोविनोदाय राजभिः धनिकैः अन्यैः जनैश्च विविधा गोष्ठी आयोज्यते स्म । **गीत-गोष्ठी** सा आसीत् यत्र एकत्रा विद्वांस जनाः सपरिवारा राजानश्च गीतैः एव मनोरंजनं चक्रुः । **कवितागोष्ठी**—अस्यां गोष्ठ्यां कवितापाठैः मनोरंजनं व्यधायि । बहवः कवयः तत्र निमन्त्रिता अभूवन् । कविः मातृगुप्तः कवितागोष्ठ्यां राज्ञः विक्रमादित्यस्य मनोरंजनमकार्षीत् । **कथा-गोष्ठी**—अस्यां गोष्ठ्यां

---

(2) 1–120, 121, 2–137, 141, 3–395, 4–242, 1–331, 333, 82387

राजानः कथाकाराणां कथाः श्रुत्वा मनोविनोदमकार्षुः । राजा उत्कर्षः कथागोष्ठिभिः मनोरंजनमकार्षीत् ।

**समस्यापूर्ति-गोष्ठी** – समस्यापूर्तिः विदुषां मनोरंजनसाधनमासीत् । कोविदाः अस्यां गोष्ठ्यामागत्य, राजभिः समस्यां कामपि प्राप्य तस्याः, पूर्तिम् चक्रुः । प्रत्येकं च स्वरचनामश्रावयत् येन सर्वेषा विनोदो बभूव । कदाचित् निर्मितश्लोकस्यैव एकः पादः अदीयत ।

**(2) संगीतम्-नृत्यं च**—संगीतं खलु सर्वाधिकं प्रियमुत्कृष्टं च मनोरंजन-साधनमासीत्, अनेकाः संगीतमंडल्यः भारतवर्षे तदा आसन् याः इतस्ततः गत्वा, संगीतायोजनं चक्रुः । एकस्मिन् प्रागंणे सभाया आयोजनं राज्ञा व्यधायि, शतशः जनास्तत्र चागच्छन् । गायकाः स्वमधुरैः गायनैः हाव-भाव-विलासैः वाद्यवृन्दैश्च जनानां मनोरंजनं चक्रुः । सभायां राजा तस्य महिष्यः दास्यः, सेवकसेविकाः, अधिकारिणः, सभ्याः नागरिकाश्चागच्छन् । प्रीता जनाः प्रदर्शनकारिभ्यः धनरत्नादिकं पुरस्कारे ददुः । संगीतमंडल्यां कन्यका अपि अभूवन् ता एव संगीतेन नृत्येन च सर्वेषां चित्तान्यपाहरन् । चक्रवर्मणः राज्यकाले रंगाख्यः एको डोम्बगायनः सपरिच्छदः आगत्य राज्ञः तत्प्रजानां च मनोरंजनमकार्षीत् । महान्, गायकः कल्हणस्य पितृव्यः कनकः हर्षस्य मनोरंजनं संगीतेनाकार्षीत् पुरस्कारं च ततः प्राप । गायकस्य तिरस्कारः असह्यः आसीत् । कदाचित्तु नृत्याय पृथक् नृत्यगोष्ठी आयोज्यते स्म । यत्र प्रायेण विविधनृत्यैरेव जनानां मनोविनोदो बभूव । विविधानि खलु नृत्यानि बभूवुः । भावाश्रयं,ताललयाश्रं तच्छून्यं (नृत्तम्) चेति त्रिविधं नृत्यमभूत् । तांडवनृत्यं नृत्तमभूत् । नर्तकीनां नृत्येनापि राजानो धनिकाश्च मनोरंजनं चक्रुः । नर्तकीनां पौनः पुन्येनोल्लेखः राजतरंगिण्याम.स्ते । वेश्यालयाः अपि बहव अभूवन्, यत्रस्था वेश्याः गीतैः नृत्यैश्च जनान् प्रमुदितानकार्षुः, राजानो वेश्यालयं गत्वा तत्कथाः श्रुत्वा च प्रमोदं प्रापुः ।

**(3) द्यूतम्** – द्यूतमपि अतीवप्रियं मनोविनोदसाधनमभवत् । यद्यपि वैदिक-कालादेव द्यूतं निन्दितमस्ति **"अक्षैर्मा दीव्यः कृषिमित्कृषस्व"** इति वेदोपदेशः च प्रवर्तते, कल्हणसमये अपि तस्य निन्दा अभवत् तथापि प्रमोदाय जनाः द्यूतमक्रीड़न् ।

**(4) वेषपरिवर्तनम् (फेन्सी ड्रेस)**—अद्य खलु भारतवर्षे 'फेन्सी ड्रेस' नाम्ना प्रसिद्धं वेषपरिवर्तनं यथा प्रियं मनोरंजनसाधनमस्ति तथैव पुरापि आसीत् । नटाः साधारणा जनाः नवीनं नवीनमज्ञेयं प्रच्छन्नं च रूपं धारयित्वा जनानुरंजनं चक्रुः, अद्यापि तत्प्रसिद्धमेव । अस्मिन् वेषपरिवर्तने कृत्रिमताया एव सर्वाधिकं महत्त्वमासीत्, बालो वृद्धरूपं पुरुषश्च नारीरूपं दधौ । भिन्नेन भिन्नेन रूपेण वै मनोरंजनमभवत् ।

**(5) नारी** – विलासिनां कृते नारी एव मनोरंजनसाधनभूत् । ते वै नारीं भोग्य-वस्तु इति कल्पयन्ति स्म । विविधैः भोगैश्च ताभिः सह मनोविनोदं चक्रुः । प्रायेण राज्ञां मनोरंजनं नारिभिरेव बभूव । ताभिः सह क्रीड़ापि अक्रियत । जलक्रीडायां तु केवलं नार्य एवाभूवन् । (7–945) ।।

(6) **नाटकम्**—नाटकानामुत्पत्तिरेव मनोरंजनायाभूत् '**लोकानुरंननं लोके नाट्यमेतत् भविष्यति**'' इति भरतवाक्यात् । अतः प्राचीनकालादद्यावधि तानि नाटकानि मनोविनोदं कुर्वन्ति जनानाम् । अथ प्रचलितानि चलचित्राणि अपि नाटकानामेव रूपाणि विद्यन्ते, रंगपीठे, रंगमंचे वा नाटकमभिनीयते स्म । नाटककर्तारः अभिनेतारः शैलूषा नटाः, वाभिधीयन्ते स्म । दर्शकाश्च प्रेक्षिलोका अकथ्यन्त । अनेकपर्वसु नटचारणाः प्रेक्षिलोकाश्च समाययुरिति तक्षकयात्रा-महोत्सवे मया लिखितमेव ।[3]

(7) **अश्व-सेनाहः**—राज्ञां मनोरंजनसाधनेषु अश्वसेनाहः अपि अभूत् राजानः सुन्दराणां वाजिनां विविधालंकरणै प्रमोदं प्रापुः । सुस्सलस्तादृश एवासीत् ।

(8) **दोला**—वालिकानां नारीणां च मनोरंजनसाधनेषु दोलानां महत्त्वपूर्णं स्थानमभूत् । राजप्रासादेपु तावत् राजानः स्वराज्ञीभिः समं दोलामारुह्य प्रमोदं प्रापुः ।

(9) **इन्द्रजालः**—इन्द्रजालेनापि जनानुरंजनमभवत् । इन्द्रजाल-प्रयोक्ता इन्द्रजालिकः न्यगद्यत । स वै क्षणे एव बीजोदंकुरमुत्पाद्य वृक्षमजनयत्, क्षणे एव सरोवरं शुष्कं चकार, शुष्कं वा जलाशयं सजलमकार्षीत् । लुप्तमलुप्तं, अलुप्तं च लुप्तं चकार ।

(10) **काष्ठ-पुत्तलिका**—काष्ठपुत्तलिकानां, नृत्येन अतिशयानन्दं प्रापुः भारतीयाः काष्ठपुत्तलिका एव सालभंजिका, यन्त्रपुत्रकश्च निगदितः राजतरंगिण्याम् । अस्मिन् मनोरंजनसाधने काष्ठपुत्तलिकानां शिरांसि अतिसूक्ष्मेण प्रायेणादृश्येन च सूत्रेण निवद्धान्यभूवन् । सूत्रधारश्च स्वकौशलेन तासां विविधं नृत्यं प्रादर्शयत् । कदाचित् सम्पूर्णम् नाटकमेव, दीर्घा काचित् कथा वा पुत्तलिकाभिः प्रदर्श्यते स्म । कविः भणाति यत् विधाता अपि स्वसृष्टिं काष्ठपुत्तलिकावत् नर्तयति ।

(11) **क्रीड़ाः**—एतदतिरिक्तं बहुविधाः क्रीड़ा भारते प्रचलिताः आसन् आबाल-वृद्धाः विविधक्रीड़ाभिः स्वमनः मुदितमकार्षुः । काचित् भयदा काचिच्च आनन्ददाभूत् क्रीड़ा । क्रीड़ायै क्रीड़ाक्षेत्राणि, उद्यानानि (**विनोदलीलोद्याने**) वा अभवन् । क्रीड़ापर्वता अपि प्रायेण प्रत्येकं नगरे अभवन् । ताः क्रीड़ा इमा आसन् । (1) **जलक्रीड़ा**—इयं क्रीड़ा प्रायेण राजभिः स्वसहचरीभिः सखिभिः राज्ञीभिश्च समं व्यधायि । सरोवरेषु च बभूव । (2) **चतुरंगक्रीड़ा**—शतरंज इति प्रसिद्धा क्रीड़ा एव राजतरङ्गिण्यां चतुरङ्ग क्रीडेति निगदिता ननु । चतुरंगक्रीड़ा चतुर्भिः जनैः सहैव क्रियते स्म । इयं क्रीड़ा अत्यधिकं जनानुरंजनं कृतवती । **गुड़-क्रीड़ा**—गुडेन सह क्रियमाणा क्रीड़ा गुड़-क्रीड़ा आसीत्

---

(3) 3–146, 7–798, 3–46, 5–354 से 374, 8–12, 7–616, 944, 8–3139, 3338, 7–606, 7–1460, 8–96, 4–665, 6–153,

अस्याः स्वरूपं स्पष्टं न प्रतीयते राजतरङ्गिण्याम् । **चंक्रमण-क्रीड़ा**—अस्यां क्रीड़ायां संभवतः बालाः बालिकाः च रशनया सह उत्कूर्दनं, विविधप्रकारेण वा उत्कूर्दनं विधाय मनोरंजनमकार्षुः । **स्वर्णक्रीड़ा** - इयं खलु स्वर्णपिंडैरभूत् । बालानां मनोरंजनेषु **कथाश्रवणं** प्रधानं साधनमासीत्, कथास्वपि व्याधानां कथा तेषां प्रियासीत् । **कन्दुकक्रीड़ा** -कन्दुकेन सह क्रियमाणा कन्दुकक्रीड़ा आसीत् सा चापि बालानां बालिकानां च प्रिया क्रीड़ाभवत् । कन्दुकक्रीड़ाया बहुशः उल्लेखाः राजतरंगिण्यां वर्तन्ते । **मृत्तिका-पत्र-लिंगनिर्माणस्य** क्रीड़ा अपि प्रमोददासीत् बालानाम् । प्रवरसेनः बाल्ये मृत्भाण्डनिर्माणैः लिंगैश्च स्वमनोरंजनमकार्षीत् । राजपुत्राणां क्रीडासु बालमृगैः सह क्रीडनं प्रधानं मनोरंजनमासीत् । तेषां च सर्पैः सह क्रियमाणा **सर्पक्रीड़ापि** प्रियाभूत् । **क्रीड़ायुद्धम्**— अपि अतीव प्रियं मनोरंजनसाधनं, अद्भुता क्रीड़ा चाभवत् राजतनयानाम् । हर्ष-समये एतादृशानि क्रीड़ायुद्धानि प्रचलितान्यासन् । राजपुत्राः प्रायेण क्रीड़ा कुलीनैः वीरैः समवयस्कैश्च बालकैः सममेव चक्रुः ।

(12) **मृगया** -मृगया खलु राज्ञां राजसूनूनां च सर्वाधिकप्रियं मनोरंजनसाधनमभवत् । प्रायेण ते सैनिकैः रक्षकैः समं मृगयायै ययुः । पक्षिणाम्, पशुषु शृगालानां, मृगाणां, सिंहानां च, जलचरेषु च मत्स्यानां मृगया व्यधायि । मृगयासमये चापि कुक्कुर-जालहस्ता डोम्बा अग्रे अग्रे ययुः । मृगयया महत्प्रमोदं प्राप्तवन्तः पुरुषाः मृगयासमये क्षुरिकाचाप-बाणादि-प्रयोगो व्यधायि । धनिकाः सामान्याश्च पुरुषा अपि मृगयां व्यदधुः मनोविनोदाय ।

**अश्वारोहणम्**—(घुड़सवारी इति भाषा) इदमपि मनोरंजनसाधनमभवत् राज्ञां सामान्यपुरुषाणां च । राजा सुस्सलः अश्वारोहणेन परमां प्रीतिं प्राप ।

**मदिरापानम्**—मदिरापानेनापि कुलीनाः सामान्यजनाः मनोरंजनं चक्रुः मद्यनिर्माणं नारिकेलासवेन, द्राक्षाभिर्वा बभूव ।[4]

इत्थं च बहवः उत्सवाः, विनोदसाधनानि च भारतवर्षे आसन् यैः भारतवासिनः स्वमनांसि रंजयन्ति स्म ।

## दान-भावना

भारतीय-संस्कृतौ दानभावना गौरवपूर्णम् स्थानं धत्ते। सर्वशास्त्रेषु दान-महिमा गीतो वर्तते। ऋग्वेदे दानस्तुति-सूक्ते "**केवलाघो भवति केवलादिः** इत्यभिधाय यजुर्वेदे च च "**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यविद्धनं**" इत्युपदिश्य, गीतायां च "**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्**" इत्यनेन प्रकारेण दानस्य महत्त्वमेव सूचितम् ।

---

8–2357, 8–94, 95, 96, 7–945, 109, 1606, 1413 । (4) 4–497, 5–131, 8–59, 607, 2–64, 7–340, 6–160, 8–1615, 904, 2969, 7–371, 6–308, 7–1110, 1188, 3–114, 115, 112, 4–610, 7–1551, 8–2930, 31, 699, 4–449, 7–171, 6–183, 181, 5–119, 6–182, 158, 4–453 ।

उपनिषदां तूपदेशो विश्वविश्रुत एव । ऋषिः उपदिदेश-**श्रद्धया देयम्, अश्रद्धया देयं, ह्रिया देयं, भिया देयम्, संविदा देयम्,** इत्थं च दानं कथंचिदपि दातव्यमेवेति शास्त्राणां सारः । सा च दानभावना, अद्यापि अक्षुण्णा विद्यते भारतवर्षे ।

दीयते इति दानं इति व्युत्पत्या दो अवखंडने धातोः ल्युटि दानशब्दो निष्पद्यते । तत्पर्यायेषु त्यागः प्रतिदानं, प्रदानं विश्रणनम्, वितरणमिति शब्दाः खलु प्रदताः सन्ति कोशेषु । शुद्धितत्वे दानलक्षणं तदंगानि चेत्थं प्रतिपादितानि ।

**अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् । दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते ।। सम्प्रदानस्वत्वापादान-द्रव्यत्यागो दानमिति ।।**

**दाता प्रतिगृहीता च श्रद्धादेयश्च धर्मयुक् ।**
**देशकालौ च दानानामंगान्येतानि षट् विदुः ।।**

गरुडपुराणे दानगणना धर्मे कृता । **दानधर्मात्परो धर्मो भूतानां नेह विद्यते ।** तत्र खलु षोडशदानानि तेषां फलं चेत्थमुक्तमस्ति ।

**"वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः तिलदश्चः प्रजामिष्टां, दीपदश्चक्षुरुत्तमम् । भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ।। गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् । वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः । अनड्ुदः श्रियं पुष्टां गोदो व्रध्नस्यपिष्टसम् । यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः । धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ।।**

**राजतरंगिण्यामपि**—दानमहात्म्यं पौनः पुन्येन गीतमस्ति । कविः ब्रूते यत् दानेन देवा अपि आज्ञापालनं कुर्वन्ति । दाता राजा यस्यां दिशि प्रयास्यति दिक्पालाः तत्सेवायै उद्यता भविष्यन्ति सुपात्रे प्रदत्तं दानं कल्पवृक्षवत् फलति । दानेन त्रिविधस्य तापस्य नाशो जायते । तेन पितृश्राद्धे, सूर्यग्रहणाद्यवसरेषु प्रदत्तेन दानेन दुष्टग्रहाः शान्ताः भवन्ति । किन्तु दानं तदैव सफलं यदा तत् योग्यपात्रे प्रदीयते, तस्मात् पात्रापात्रचिन्ता पूर्वमेव विधेया । दानदाता दानी वदान्यो वा निगद्यते । स एव वास्तविकः दानी अस्ति यो वै दत्त्वा आत्मश्लाघां न करोति, गर्वशून्यः च तिष्ठति । तदन्तिकं याचकः न याचते, स स्वत एव तदभीष्टं ज्ञात्वा अयाचितफलं ददाति । वारिदवत् स सहस्रकरैः प्रददाति । याचकेषु उदारः अनुग्रहकर्तासौ भवति । यत्ते वांछन्ति तदेव प्रददति । दानसमय-विषये कविः भणति यत् प्रमोदावसरे, मंगलावसरे पर्वसु वा ब्राह्मणादिभ्यो दानं देयम् । व्रतस्थाने, प्रमोदस्थले, मन्दिरे वा दानकर्म शुभफलप्रदं भवति ।

राजतरंगिण्यां ननु उपरिवर्णितानां षोडशदानानामुल्लेखः संकेतो वा विराजते । दानेन सह तत्फलमपि कविना प्रायेण प्रदर्शितम् । त्रिकोटिहा राजा मिहिरकुलः परिहारदः आसीत् तेन च भूमिदानमेवाभिप्रेतमस्ति तत्फलं च मुक्तिरस्तीति प्रतिपादितम् । **अग्रहारदानमपि** भूमिदानस्यैव रूपं खलु । अग्रहाराणां दानं प्रायेण द्विजेभ्यः अजायत । शतशस्तद्दानस्योल्लेखो राजतरंगिण्यां विद्यते । लवो नृपतिः

लेदर्यामग्रहारं द्विजेभ्यो दत्त्वाद्युलोकं जगाम । तत्पुत्रः कुशः कुरुहाराग्रहारस्य दाताभूत् । गोधरश्च नृपतिः हस्तिशालाख्यमग्रहारं प्रदाय दिवं ययौ । गोधरस्य सुवर्णाख्यः सूनुः अर्थिभ्यः **स्वर्णदानं** चकार अत एव स स्वर्णदो निगदितः । स एव स्वर्णमणिकुल्यामपि प्रावर्तयत् । बहवो वर्तन्ते स्वर्णदानस्योल्लेखाः, केचित् राजानः करम्भकाख्यां स्वर्णमुद्रां ददुः दाने, **अन्नदानं**, **अभयदानं** च विशाखाख्यस्य द्विजस्य सुश्रवसो नागस्य च कथायामुल्लिखितं ननु । सक्तून् भोक्तुमुद्यतः द्विजः नागकन्यके कच्छ-गुच्छानां शिम्बीः भुञ्जाने दृष्ट्वा कृपार्द्रः सन् सक्तूनभोजयत् । ततश्च नागेन निवेदितः असौ मांत्रिकं सस्यपालं वञ्चयित्वा नागेभ्यः प्रभूतमन्नं ररक्ष । मांत्रिकात्भीतानां च तेषां भयनिवारणं चकार । अत्र खलु प्रकारान्तरेण अन्नाभयदानयोः संकेतो वरीवर्ति । गरुड़पुराणोक्त्यनुसारं, अन्नदः अक्षयं सुखं, अभयदश्चैश्वर्यमवाप्नोति । ब्राह्मणः अपि उभयं दानं विधाय अमर्त्यसुलभान्यनश्वराणि सुखाननि ऐश्वर्याणि, कमनीयां नागकन्यामगणितधनराशि ञ्च प्राप्नोत् । नवैः नवैरुत्सवैस्तत्समयो ययौ । अन्यत्रापि उभयं दानं संकेतितमस्ति ।

अन्यच्च **हस्तिदानं** सप्तमतरंगे उल्लिखितम् हर्षनृपतिः भीमान्यकाख्यस्य गायकस्य वाद्येन प्रसन्नो भूत्वा तस्मै हस्तिदानं चकार । (7–1116) । कलशः नृपतिः स्वर्णस्य तुलादानमकार्षीत्, **धनदानस्य** च तावत् शतशः उल्लेखा विराजन्ते । रिल्हण-स्य जीवनं **कृष्णाजिनदाने**, **स्वर्णदाने**, **अन्नदाने**, च ययौ । **गोदानस्यापि** वर्णनं वहुशः समागतम् । हर्षः ब्राह्मणेभ्यः गोदानं कृष्णमृगचर्मदानं च चकार । गोदानं प्रायेण मन्दिरेषु कलशस्थापना-समये व्यधायि । **अश्वदानस्य** वर्णनं सप्तमतरंगे अस्ति । अनन्तः नृपतिः मन्दिरस्थापनाकाले ब्राह्मणेभ्यः गो-अश्वादिदानमकरोत् । चतुर्थतरंगे जया-पीडराज्ये जज्जः अश्वानां लक्षं ब्राह्मणेभ्यः दत्तवान् । दान-समये दानपट्टकमपि लिख्यते स्म ।[1]

## अतिथि-सत्कारः

पुराकालादद्यावधि अतिथिसत्कार-परम्परा भारते प्रवर्तते । यस्य आगमने तिथिः नास्ति स एवातिथिः निगद्यते । अतिथिषु गृहमागतेषु अतिशयसत्कारः अभवत् । तस्मिन् द्वारं प्राप्ते सति गृहस्थी तत्र गत्वा द्वारे एव तस्य सत्कारं चकार । जल-पुष्पादिभिः स तत्र पूज्यते स्म । सह्लणे समागते सुस्सलः द्वारे ययौ तमानेतम् । अभिवादनान्तरं तस्य कुशल-मंगलादिकमपृच्छत् । ततश्च तस्मै सादरं स्थानमदायि, तस्य सुखसुविधायै ध्यानमदीयत । मेघवाहनस्य सत्कारे लंकानरेशः नैकोपायानकार्षीत् । यदा च कश्चित् राजा धनिको वा अन्यस्य राज्ञः धनिकस्य वा समीपे आगच्छत् तदा

---

(1) 4–230 से 241, 8–72, 7–47, 8–76, 3–181, 6–77, 3–276, 252, 66, 4–242, 243, 7–201, 1–310, 311, 87, 88, 99, 97, 3–257, 6–224, 5–16, 1–204, 205, 211, 212, 233 से 239, 1–241 से 245,

प्रमोदोत्सवा व्यधीयन्त गृहस्थस्य सर्वे सदस्याः अतिथये स्निह्यन्ति स्म । नगरे भवने वा अतिथिप्रकोष्ठः पृथक् अभूत् । नगरेषु एतादृशाः विहारा निरमीयन्त येषामेकस्मिन् भागे भिक्षवः अपरस्मिन् च स्त्रियः अन्ये गृहस्थिनश्च पुत्रोपेता न्यवसन् । मठानां निर्माणमपि इतर-देशीयानां निवासाय बभूव । बौद्धराजानस्तु देश्यभिक्षूणां निवासाय विहारान् चक्रिरे । मेघवाहनपत्नी अमृतभवनाख्यं विहारमेतिन्निमित्तायैव निर्मितवती । अतिथिसत्कार एवातिथ्यमभण्यत । अतिथीनां कृते भोजनादि-व्यवस्थया सह मनोरंजनसाधनान्यपि एकत्रीक्रियन्ते स्म । कलशस्य राज्ये अष्टसु पर्वतराजसु समागतेषु, तत्कृते बहूनि विनोदसाधनानि संयोजितान्यासन् । तेषां कृते महार्हाणि आसनान्यदीयन्त । विवाहोत्सवेषु, वरयात्राया सत्कारः नैकप्रकारेण बभूव । सत्कारे मधुपर्कप्रयोगः अपि विधीयते स्म । ताम्बूलादिकमपि दीयते स्म । अतिथिः सदैव देववत् पूज्यते स्म । गुरुः धूपकन्दमूलादिभिः सत्क्रियते स्म । सत्कारस्य प्राचीनकालात् प्रवर्तमाना भावना अद्यापि भारतवर्षे विलोक्यते ।[2]

## समाजे वर्णाश्रमव्यवस्था

वर्णाश्रमव्यवस्था भारतीय-संस्कृतेः आधारभित्तिरस्ति । भारतीयैः ऋषिभिः मनीषिभिश्चास्माकं समाजः चतुर्षु वर्णेषु, चतुर्षु आश्रमेषु च विभाजितः । तेषामाश्रयेण च प्रवर्तिता व्यवस्था वर्णाश्रम-व्यवस्था वरीवर्ति ।

**वर्णः** – ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चेति चत्वारो वर्णा विद्यन्ते। ऋग्वेदे सर्वतः प्रथमं तेषामुल्लेखः समागतः दशममंडले ।

ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ।
ऊरु तदस्य यद्वैश्यो पद्भ्यां शूद्रो अजायत ।।

मुखमेव प्रमुखं मनुष्यशरीरे । तदेव जीवन-व्यापाराणां संचालकम् । तत्रैव विद्यमानं मस्तिष्कं बुद्धिश्च साधु असाधु वा मार्गम् संकेतयति । तद्वत् समाजे ब्राह्मणस्य शीर्षस्थानं नन्वस्ति तस्मात् वेदमंत्रे, ब्राह्मणः ब्रह्मणो मुखमभिहितः । शरीररक्षायै, कार्याणि सम्पादयितुं च बाहुबलमनिवार्यम् नाम । "**शरीरमाद्यं खलु धर्मसाधनमिति**" नियमात् तस्य रक्षा सम्यक् पालनं च नितान्तमुचितमावश्यकञ्च । बाहुबलं च क्षत्रियस्य धर्मः "**क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।**" इति कालिदास-वाक्यात्, मंत्रे क्षत्रियो राजन्यो वा बाहुरित्युक्तः । जठरपूर्तिसाधनानामुत्पादनं वैश्यानां कार्यम्, त एव जीवनसाधनानि समुत्पाद्य जंघासु बलं निदधति, ते

---

8–244 से 246, 7–1116, 407, 8–66, 67, 344, 8–2405, 9 7–55, 4–698, 99, 7–181, 8–415, 5–397 । (2) 4–229, 8–461, 3–675, 4–433, 466, 2–236, 224, 9–12, 7–530, 587, 592, 593, 8–143 3320. 3–73, 289 ।

तत्स्थितिं च सुदृढ़ां कुर्वन्ति, तस्माद्रूपदेन तेषां व्याख्यानमस्ति । शूद्राणां कार्यम् चरणसेवासीत् भारते, तस्मात् मंत्रे चरणेषु तत् स्थानं ऋषिणा प्रदत्तम् । एवमेवाश्रमाणामपि बीजं वेदेषु विद्यते ।

वेदेषु तावत् वर्णानां संकेतो विद्यते, तेषां विस्तृतं वर्णनन्तु स्मृतिग्रन्थेषु वरीवर्ति । तत्रैव विस्तरेण प्रत्येकं वर्णस्य कर्तव्यमुपदिष्टम् । वैदिकयुगे रामायणयुगे, स्मृतीनां काले च वर्णाश्रमव्यवस्था अतीव हृदयावर्जिका, समाजे च सम्मान्या अतिष्ठत् किन्तु महाभारत युद्धानन्तरं सा व्यवस्था विच्छिन्ना, विकारस्तत्र समजनि ।

राजतरंगिण्याः समाजे अपि वर्णाश्रमव्यवस्थाया विकृतमेव रूपं विलोक्यते । नाधिकं आसीत्तस्याः प्रचारस्तदानीम्, क्वचित् सा प्रचलिताभवत् । वर्णाश्रम-व्यवस्थायाः पालकः संरक्षकश्च राजा एवाभूत् । स एव वर्णानां गुरुरमन्यत (**वर्णगुरुणा**) 3–85, 8–2407 । कान्यकुब्जादिप्रदेशेषु अस्या व्यवस्थाया वर्णनं कविः विशेष-रूपेणाकार्षीत् । तं च प्रदेशं विजित्य जलौकः तत्रत्यां वर्णाश्रम-व्यवस्थां कश्मीरेषु न्यवेशयत्—

जित्वोर्वीम् कान्यकुब्जाद्यां तत्रत्यं स न्यवेशयत् ।
चातुर्वर्ण्यं निजे देशे धर्म्यांश्च व्यवहारिणः ।। 1–117 ।।

पार्थिवो गोपादित्यः अपि वर्णाश्रमं प्रवर्तितं कृत्वा आदियुगस्योदयं प्रादर्शयत् । आदियुगं वैदिकयुगमस्ति । ततः प्रभृति वर्णव्यवस्था प्रारब्धेति कल्हणस्य कथनेन निश्चीयते ।

जुगोप गोपादित्योऽथ क्ष्मां सद्वीपां तदात्मजः ।
वर्णाश्रम-प्रत्यवेक्षाद्दर्शितादियुगोदयः ।। 1–339 ।।

चतुर्णामेव वर्णानां कार्याणां कर्तव्यानाञ्च संकेतः राजतरंगिण्यामवाप्यते ।

**ब्राह्मणः** —वर्णेषु ब्राह्मणो मूर्धन्य आसीत् । आर्यदेशजः, गान्धारो ब्राह्मणः, गौडब्राह्मणः, कान्यकुब्ज-ब्राह्मण, इति नैकविधा ब्राह्मणाः कविना संसूचिताः । ब्राह्मणानां कर्तव्यं स्मृतिग्रन्थेषु वेदाध्ययनमध्यापनं यज्ञादिसम्पादनं चोपदिष्टम् । तेषां गौरवपूर्णम् स्थानं तत्र, वेदेषु च प्रतिपादितम् । राजतरंगिण्याः समाजे अपि ब्राह्मणानां प्राचीनकालवत् सम्मानः अक्षुण्ण आसीत् । पावनास्ते अमन्यन्त । उग्रतेजसां द्विजानां विभूतयः अचिन्त्या अमन्यन्त । प्रथितयशसां, प्रज्वलत्प्रतापानामपि पार्थिवनानां प्रभावं ताः धूलीसात्कर्तुमशक्नुवन् ।

तपो विभूतयोऽचिन्त्या द्विजानामुग्रतेजसाम् ।
तादृशामपि ये कुर्युः प्रभावस्य विपर्ययम् ।। 1–160 ।।

ब्राह्मण-प्रभावः एकस्यां कथायामित्थं वर्णितः कविना । एकदा श्राद्धार्थमुद्यतं दामोदरं नाम नृपतिं विप्रा भोजनमयाचन्त, राजा तु "**भोज्यं ददामि नास्नातो विप्रा सर्पत**

**साम्प्रतम्"** इत्यभिधाय ते अवधीरिता, कुपिताश्च ते सर्पो भवेति अशपन् तथा चासौ वभूव ।

ब्राह्मणानां प्रकोपात् त्रैलोक्यस्यापि विप्लवः भवितुमर्हति कविमते । इत्थं चाकथनीय आसीत् द्विजोत्तमानां प्रभावः । किन्तु आदियुगवत् गाम्भीर्यम् न दृश्यते तेषु ब्राह्मणेषु । प्रकृत्या बहवश्चपला वर्णिताः सन्ति । **"चापलात् विप्र-सुलभात्"** प्रायेण च ते राज्यकर्मसु अनावश्यकं हस्ताक्षेपं कर्तुमुद्यता विलोक्यन्ते, क्वचित्तु स्वप्रधानं कर्तव्यमध्ययनमध्यापनं च विहाय, समाजस्य अन्येषां कृत्येषु वृथैव स्वप्रभावं जनयन्त इव ते दृष्टिपथमायान्ति । हठप्रवृत्तिस्तेषां पदे-पदे अनुमीयते । उचितानुचिकार्य-सम्पादनाय, यद्वा, विद्रोहिप्रेरणया देशे विप्लवोत्पादनाय ते प्रायोपवेशान् चक्रिरे ।

समाजे राजसभायां च तेषां महती प्रतिष्ठा आसीत् । राजानः प्राणान् दत्त्वापि तेषां रक्षां चक्रुः । तद्रक्षार्थं च तापसा अपि निहन्यन्ते स्म । अकाले च द्विजे मृते राजा स्वात्मानं दोषीति अमन्यत । त एव वस्तुतः राज्ञां निर्वाचनं चक्रुः । ब्राह्मणः खलु ब्रह्मतेजस आगारा आसन्, तेषां धैर्यम् साहसञ्चाकुंठितमासीत्, भ्रष्टान् दुष्टान्, भूपान्, जनान् वा क्षणे एव स्वब्रह्मतेजसा अघ्नन् । तत्तेजसैव जयापीडे स्वर्णदंडः अपतत् । राज्ञः करवालो लेशमात्रमपि तेषु भयं नोत्पादितवान् । ते वै स्वप्रभावेण स्वर्गम् धरां शैलं च क्षणे एव विनाशयितुं समर्था अभूवन् । अद्वितीयः आसीत् तेषां मंत्राणां प्रभावः येन ते देवानपि वशे चक्रुः ।

राजानः प्रजाश्च दानादिभिः ब्राह्मणान् सत्कुर्वन्ति स्म । तेषां हत्या निषिद्धा आसीत् **द्विजत्वात् वधवर्जितम्,** ब्रह्महतकः पशुमारं मार्यते स्म, प्राणदंडेनैव स निहन्यते स्म । ब्राह्मणस्य हत्यया प्रजाः रुष्टा अभवन्, सुज्जिः यदा कंञ्चित् ब्राह्मणमपशब्दैः तिरस्कृत्य तस्य हत्यां चकार तदा जनतासु तस्य निन्दा अभवत् । घृणितः स अमन्यत । प्रायोपवेशादिकार्येषु ब्राह्मणाः कुशलाः आसन् । अभिचार-क्रियां ते अजानन् अतः कदाचित् दुष्टान्, तया क्रियया निहन्ति स्म ।1

**ब्राह्मणानां कर्तव्यम्**— प्राचीन-कालवत् तदापि तेषां कार्यं प्राधान्येनाध्ययनमध्यापनमेवाभूत् । यज्ञादिकार्याणां सम्पादनमपि तेषां कर्तव्यमभूत् । विविधा संस्कारास्तैरेव समपाद्यन्त । **"द्विजेन्द्रैः निरवर्त्यन्त जातकर्मादिकाः क्रियाः ।"** राज्ञां राज्याभिषेकमपि त एव कुर्युः । **"द्विजैः कृष्णोऽभ्यषेचयत् ।"**

ब्राह्मणानां प्रधानं कर्तव्यन्तु यद्यपि वेदपाठः अध्यापनं संस्कारादिक्रियासम्पादनं चाभूत् तत्त्यागे च तेषां निन्दाभूत् तथापि विपदायां समागतायां ते कृषिप्रभृतीनि कार्याणि अपि अकार्षुः । कदाचित् च ते वैश्याश्चापि युद्धाय सज्जा अभवन् । जयसिह-

---

(1) 3–86, 89, 91, 8–2139, 4–656, 651, 645, 631, 442,

राज्ये, विपदि ब्राह्मणाः वेदपाठं संत्यज्य करवालं करे चक्रुः। अष्टमतरंगे एकः ब्राह्मणः दृष्टिपथमायाति यो वै युद्धे नैकक्षतानि प्राप। कविना ब्राह्मणानां केचित् अपरिहार्य-गुणा अपि उल्लिखिताः सन्ति। तन्मते द्विजः अनसूयः, निरुत्सेकः, सूनृत-वाक्, गुणवत्सलः, निर्लोभः, वक्ता, उदार-हृदयः वेदविज्ञो विद्वांश्च भवेत्। एतादृश एव ब्राह्मणः आत्मनः समाजस्य राष्ट्रस्य च कल्याणं कर्तुम् शक्नोति। स वै भिक्षा-कणैरेव स्ववृत्ति चालयेत् (**भिक्षाकणभुजां**) यद्वा दक्षिणायां प्राप्तेन धनेनोदर-वृत्ति कुर्यात्।

ब्राह्मणानां भोजनं पवित्रमभूत्। दुर्गन्धिवस्तु तत्कृते अभक्ष्यममन्यत। अत एव लशुनभक्षिण आचार-शून्याश्च ब्राह्मणाः राज्ञा तत्प्रजाभिश्च तिरस्क्रियन्ते स्म। गोपादित्यो नृपतिः लशुनाशिनो द्विजान् निर्वास्य पवित्र-ब्राह्मणेभ्यः अग्रहारान् ददौ।[2]

**क्षत्रियाः**—प्रजानां रक्षणं पालनं देशस्य सुरक्षा च क्षत्रियाणां परोधर्मः मतः शास्त्रेषु, त एव अन्येषां वर्णानां सर्वेषामाश्रमवासिनां च कृते सुख-शान्तेः व्यवस्थायै उत्तरदायिनः अभवन्। न्यायप्रियः वीरः कर्मकुशलः, नेतृत्वगुणयुक्तः एव सुक्षत्रियः, सत्क्षत्रियो वा निगदितः भोजः एतादृशः एव क्षत्रियः कथितः। तादृशः एव क्षत्रियः स्वर्गम् सूर्यलोकं वा याति।

क्षत्रियस्य जीवनं निष्फलं नो चेत् स देशकल्याणाय युद्धसंलग्नो भवेत्, वस्तुतो युद्धेषु एव क्षत्रियाणां जीवनं ययौ। युद्धे एव मरणं ते श्रेयस्करममन्यत। देशस्य स्वस्य च स्वाभिमानस्य, यशसः प्रतिष्ठायाः च रक्षायै युद्धमकार्षुः, तत् खलु तेषां धर्म अभिहितम् "**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते**" इति गीता-वाक्यं स्मरन्त ते अपकीर्तिम् मरणममन्यन्त, अतस्ततः पूर्वम्, अवमानात् पूर्वम् च ते प्राणत्यागायोद्यता अतिष्ठन्। युद्धे च स्त्रमृत्युं सुखदामचिन्तयन्, तत्र स्वपराक्रम-प्रदर्शनं गौरवम-पश्यन्। युद्धत्यागमधः पतनमकल्पयन्। युद्धे चापि समबले एव पराक्रमं ते प्रादर्शयन् "**महान् महत्स्वेव करोति विक्रमम्**" इति पंचतंत्रवाक्यं ते पालयन्ति स्म। प्रायेण क्षत्रिया एव राजानः भूत्वा राजकार्यम् चक्रुः।

समये समागते, विपदि वा, क्षत्रियाः कृषिकार्यमपि अकार्षन्। (**शस्त्रिणः-कर्षकप्रायाः**) सुस्सलराज्ये क्षत्रिया अपि कृषिकार्येषु निरता दृश्यन्ते।

क्षत्रियगुणयुक्ताः नार्यः अपि दृष्टिपथमायान्ति। ताः अपि क्षत्रियवत् युद्धादिकं चक्रुः। क्षात्रधर्ममाचरन्ती नारी वीरांगना सुक्षत्रिया च निगदितास्ति।[3]

**वैश्याः**—समाजे वैश्यानामपि महत्त्वपूर्णम् स्थानमभवत्। देशस्य आर्थिक-दशां

---

122, 5–96, 105, 8–2060–61, 709, 4–88, 112, 124। (2) 1–125, 75, 70, 341 से 43, 60, 62, 65, 215, 72, 1–75, 70, 6–276, 8–3018, 2518, 4–87, 644। (3) 8–2621, 3077, 2623, 2622, 7–1459, 7–1449, 1434, 1402, 1442, 1403, 1404, 1407, 1426,

सुदृढ़ां विधातुं त एव उत्तरदायिन आसन् प्राधान्येन। राष्ट्रस्य सर्वविधः व्यापारः प्रायेण तेषामेव हस्ते अभूत्। त एव अन्न-धनाद्युत्पादनं व्यदधुः। **आर्थिक-जीवनं** इति शीर्षके ये अपि व्यापारा उद्योगाः कार्याणि वा उल्लिखितानि सन्ति सर्वेषां तेषां संचालका वैश्या एवाभवन्। समाजे तेषां महती प्रतिष्ठाभूत्। विपदि समागतायां वैश्याः शस्त्रं गृहीत्वा युद्धमपि चक्रुः। वैश्यशब्दस्तु बहुशः समागत एव राजतरंगिण्यां किन्तु ते व्यवहारिणः (**धर्म्यांश्च व्यवहारिणः**) पदेनापि वर्णिताः सन्ति।[4]

**शूद्राः**—शूद्र-शब्दः राजतरंगिण्यां क्वचित् क्वचिदेव दृश्यते। हीनजन्मा, स कथितः। ते वै शूद्रा गृहेषु सेवाकार्यम्, हीनानि वान्यानि कार्याणि सम्पादयामासुः। नाधिका प्रतिष्ठासीत् तेषां समाजे, शूद्राणां स्त्रियः प्रायेण धात्रीकार्यमकुर्वन्। हीन-जातीनामपि तेषां समाजे आवश्यकतानुभूयते स्म।[5]

**आश्रम-व्यवस्था**—वर्णव्यवस्थावत् आश्रमव्यवस्थापि भारतवर्षे तदाविद्यत। ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासाः इति चत्वार आश्रमाः सन्ति। कालिदासः रघुवंशिनां वर्णनं कुर्वन् लिलेख—

शैशवेऽभ्यस्त-विद्यानां यौवने विषयैषिणाम्।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥

रघुवंश-प्रथम सर्गस्य एकस्मिन्नेवास्मिन् पद्ये आश्रमव्यवस्था, विविधाश्रम-वासिनां च कर्तव्यं प्रतिपादितं कविशिरोमणिना। एतादृशी सुन्दरा आश्रम-व्यवस्था न दृश्यते राजतरंगिण्या भारते। तथापि तस्याः सत्ता आसीदित्यत्र न संशयावकाशः।

**ब्रह्मचर्याश्रमः**—प्रथमः आश्रमः ब्रह्मचर्याश्रमः निगद्यते, अस्मिन् आश्रमे छात्राः नगरात् दूरं वनस्थेषु आश्रमेषु निवसन्तः, ब्रह्मचर्यव्रतपालनं कुर्वन्तश्च विद्याभ्यासं चक्रुः। वस्तुतः अयमेव मानव-जीवनस्य आधारः अस्ति, आसीत् च। ब्रह्मचारीःशब्दः सकृदेव समागतः राजतरंगिण्याम्। व्रती, लिंगी शब्दः अपि समागतः यश्चापि ब्रह्म-चारिपदपर्याय एवास्ति अस्मिन्नाश्रमे निवसन् ब्रह्मचारी, कोपीनं दंडं च दधौ। गुरु-सेवा एव प्रधानं तस्य कर्तव्यमभवत्। सर्वविधा विद्याः स अस्मिन्नेवाश्रमे गुरु-मुखात् लेभे। विद्यायां समाप्तायां स गुरवे दक्षिणां दत्त्वा, तदनुज्ञया आश्रमं तत्याज। षोडश वर्षाणां, अष्टादश-वर्षाणां वा ब्रह्मचर्यकालः भवति स्म।

**गृहस्थाश्रमः**—द्वितीय आश्रमः गृहस्थाश्रमो निगद्यते। विद्यां समाप्य ब्रह्मचारी आचार्यानुज्ञामवाप्यस्मिन्नाश्रमे प्रविवेश। अयं हि सर्वोत्कृष्टः आश्रमः मन्यते स्म प्राचीन-भारते, कालिदासः इमं सर्वोपकारक्षममाह, गृहस्थाश्रमे निवसन् पुरुषः गृहस्थी कुटुम्बी च न्यगद्यत, उभावपि शब्दौ राजतरंगिण्यां समागतौ। पुत्रः पशुः स्त्री च

---

1715, 3–283, 284, 7–1582, 662, 661, 752, 8–709, 3064।
(4) 7–208, 207, 212, 215, 1–117। (5) 7–38, 5–77।

गृहस्थिनः सम्पत्तिः आसीत् । गृहस्थी एव अन्येषामाश्रमाणां पालकः पोषकश्चासीत् । ब्रह्मचारिणः शिक्षा-दीक्षायाः सम्पूर्णमुत्तरदायित्वं गृहस्थाश्रमे बभूव । वानप्रस्थिनां, सन्यासिनां च सुखचिन्तनमपि गृहस्थी एव चकार । तस्मात् गृहस्थाश्रमस्य अतीव-गौरवपूर्णम् स्थानमासीत् भारते सम्प्रति चाप्यस्ति । ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां कर्तव्यानि अपि गृहस्थाश्रमे निश्चितानि अभूवन् ।[6] पंचाशत् वर्षाणां वयो यावत् गृहस्थाश्रमः अभवत् ।

**वानप्रस्थाश्रमः**--तृतीय आश्रमः वानप्रस्थाश्रमो वरीवर्ति । गृहस्थाश्रमसुख-मुपभुज्य गृहस्थी, वैराग्यं प्राप्य गृहं च संत्यज्य वनं जगाम । तत्र च कुटीरं निर्माय ससुखमुवास । वने निवसन्तः वानप्रस्थिनः **वनौकसो** न्यगद्यन्त । विरक्तानां तेषां भोजनं भिक्षाटनेन प्राप्तमन्नं फल-पुष्प-पत्राणि कन्दमूलानि चासन् । स्थण्डिला भूमि-स्तेषां शय्या । अभवत् । वनवासिनस्ते मुनिवेषं धारयामासुः । तस्मिन् वेषे ते सिद्धाः तपस्विनश्च अकथ्यन्त । गुहासु अपि ते न्यवसन् । धौतवाससो निरुष्णीषास्ते अभवन् । शरीरं तेषां भस्मलिप्तम्, करौ च रुद्राक्षमालायुक्तौ अभूताम् । जटाभिस्ते शोभिता अभवन् । तीर्थानां जलं तेषां प्रियमासीत् । प्रातः सायं नदीषु सरोवरेषु च स्नानं, विधाय, नदीसंगमेषु, नदीकन्दरासु वोपविश्य ते सन्ध्याञ्चक्रुः । तेषां कुटीरं मुनिनिलयं अभाष्यत । तप एव तेषां धनमासीत्, तस्मात् ते तपस्विनस्तपोधनाश्चोच्यन्ते स्म । वानप्रस्थिनः स्वाध्याये तपसि एव च स्वसमयं नीतवन्तः, सन्यासाश्रमप्रवेशात् पूर्वम् सर्वशास्त्राणां सारं ते मनसि अकुर्वन्, येन, तुर्याश्रमे, जनकल्याणं कुर्तुम् सज्जिता अभवन् । सन्यासाश्रमस्य सज्जारूप आसीदयमाश्रमः । वानप्रस्थाश्रमः पंचसप्तति-वर्षाणामायुषि समाप्ति ययौ ।[7]

**सन्यासाश्रमः**- तुर्याश्रमः सन्यासाश्रमः अस्ति । अस्मिन्नाश्रमे आगत्य पुरुषः सन्यासी कथ्यते स्म । सर्वम् वस्तुजातं सन्यस्य वानप्रस्थी जनः अस्मिन्नाश्रमे प्रवेशं प्राप । सन्यासाश्रमे प्रवेशाय कश्चित् नियतः कालो नासीत् । मनुः ब्रूते यत् "**यदहरेव विरजेत् तदहरेव प्रव्रजेत्**' । अर्थात् यस्मिन् दिवसे मनः संसारात् विरक्तं स्यात् तस्मिन् दिवसे एव सन्यासो ग्राह्यः इममाश्रमं प्रविशन् सन्यासी सर्वस्वं विहाय तीर्थस्थाने पवित्रे वा आश्रमं गत्वा सन्यासदीक्षां जग्राह, काषायवस्त्रं च दधौ । तदा च स एव यतिरकथ्यत । सन्यासाश्रमे प्रवेशस्य समये यज्ञः समभवत् । कश्चित् वैरागी विद्वान् तेजस्वी सन्यासी एव सर्वम् क्रियाकलापमकारयत् । सन्यासी भूत्वा पुरुषः समाज-हितायेतस्ततः बभ्राम । सर्वत्र च वेदोपदेशं, शस्त्रोपदेशं च ददौ । जनकल्याणमेव सन्यासिनः प्रधानं कर्तव्यमासीत् । पुत्रैषणा-वित्तैषणा-लोकैषणानां परित्यागः तत्कृते अनिवार्यः आसीत् ।

---

(6) 1–319, 4–519, 3–12, 5–469 । (7) 2–169 से 171, 165,

धनस्यान्नस्य वा संग्रहस्याज्ञा नासीत् सन्यासिनां कृते । भिक्षाटनेनैव ते जीवन-वृत्तिमकार्षुः । अत एव सन्यासी भिक्षाभुक् निगद्यते स्म । भिक्षायां प्राप्तमन्नं यथेच्छमुपभुज्य अवशिष्टं स व्यतरत् । राजतरंगिण्यां उल्लिखिताः कुम्भयोनि-अगस्त्य-विश्वामित्र-वसिष्ठ-प्रभृतयः ऋषयः तादृशा एव सन्यासिन आसन् । तपस्विनः सन्यासिनो मुंडितमुंडा अभवन् ।

जीवनस्यान्तिमेषु वत्सरेषु ते सन्यासिनो मुक्तिं प्राप्तुं यतन्ते स्म । तत्कृते यतन्तः अपि कदाचित् ते विश्रामं न चक्रुः। जनानां कल्याणायैव ते जीवनं समापयन्ति स्म ।[8] इत्थं च वर्णाश्रमव्यवस्था भारतवर्षे विद्यमानासीत् तथापि तथा सुदृढ़ा नाभूत् यथा वैदिकयुगे, रामायण-काले वा ।

## समाजे विवाहः

चतुर्षु आश्रमेषु गृहस्थाश्रमः सर्वोत्कृष्टः अभिमतः विदुषाम्, षोडशसंस्कारेषु च विवाहसंस्कारस्य गौरवपूर्णम् स्थानमस्ति । विवाहेनैव गृहस्थजीवनं सुफलं सफलं च भवति । अतः जीवने विवाहानां महत्त्वपूर्णम् स्थानमंगीकृतं भारतीयैः सम्प्रति चाप्यंगीक्रियते । उपयमः, उद्वाहः परिणयः, परिणायनः, पाणिग्रहणम्, दारपरिग्रहः, दारकर्म, पाणिपीडनम्, करग्रहः इत्यादयः शब्दा विवाहस्यैव पर्यायवाचिनः सन्ति । शास्त्रेषु इमे शब्दाः स्थाने स्थाने प्रयुक्ताः सन्ति । (एवमुपयमन-पाणिग्रहण-शब्दवत् परिणयन-शब्दोऽपि दंडिन्यायेनैव कर्म-समुदाये शास्त्रेषु प्रयुज्यते) ।[1]

**विवाहस्य-अर्थः प्रयोजनम् च**—वि उपसर्गात् वह् धातोः घञ् प्रत्यये कृते विशिष्टं वहनं इति व्युत्पत्या विवाहशब्दो निष्पन्नः । ऋग्वेदानुसारं विवाहस्योद्देश्यं गृहस्थाश्रमे प्रविश्य, देवकार्याणां सम्पादनाय अधिकार-प्राप्तिः, वंशानुक्रम-प्रवर्तनाय च सन्तति-प्राप्तिरस्ति । **"गृभ्णामि त्वा सौभगत्वाय ।"** ऐतेरेय-ब्राह्मणे शतपथ-ब्राह्मणे च ऋषिभिः सन्तानप्राप्तिमेव विवाहस्य पूर्णतां मत्वा तन्महत्त्वं प्रतिपादितम् । आपस्तम्ब-धर्मसूत्रे प्रयोजनद्वयमुक्तं विवाहस्य (1) भार्यायाः सहयोगेन धार्मिक-कृत्यानां सम्पादनम् (2) सन्तान-प्राप्तिश्चेति । भगवान् मनुः अपत्यं, धर्मकार्यसम्पादनक्षमता, उत्तमरतिः, पितरेभ्यः आत्मनश्च स्वर्गप्राप्तिरिति चत्वारि उद्देश्यानि भणति । **अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा । दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ।** राजतरंगिण्याः समाजे अपि विवाहस्येमान्येव प्रयोजनानि स्वीक्रियन्ते स्म । कह्लणः

---

4–168, 2–165, 161, 170, 2–127, 141 । (8) 7–482, 3–320, 297, 7–1546, 3–321, 325, 373, 467, 512, 387, 390, 2–154, 4–549, 718, 7–1474, 4–647, 6–134, 102 ।

(1) अपरार्क पृ० 91 ऋग्वेद 10–85, 362, 3, 2, 5, 28, 3 ऐतरेय ब्राह्मणे 33, 1, 1 का 2, 4, शतपथब्राह्मण 5–2–1, 10 आपस्तम्बधर्मसूत्रे 2 का 5, 11,

प्रत्यक्षमप्रत्यक्षं चैतेषां संकेतमकार्षीत् । सन्ततिप्राप्तिरूपं प्रधानमुद्देश्यं बहुशः वर्णितं कविना । (7–1954) ॥

**वरवध्वोः चयनम्**—वरेषु केषां गुणानामनिवार्यतास्तीति विविधग्रन्थेषु प्रतिपादितं ननु । आश्वलायन-गृह्यसूत्रमभिदधाति "**बुद्धिमते कन्यां प्रयच्छेत्**" । आपस्तम्ब-धर्मसूत्रं, वरस्योच्चकुलं, सच्चरित्रं, स्वस्थतां विद्यां चेति सर्वमनिवार्यमभणत् । बौधायनधर्मसूत्रन्तु सर्वगुणानेव सर्वस्वं मनुते । स्मृतिचन्द्रिकायां सत्कुलं सच्चरित्रं, यशः, विद्या, धनं, इष्टमित्राणां, बान्धवानां च सहयोगमिति सप्तगुणान् विवाह-निकषायामारोपयति । मनुः याज्ञवल्क्यः आश्वलायनश्च एते त्रयः अपि समस्तगुणेषु सत्कुले एवाधिकं बलं ददति । कल्हणः अपि वरगुणेषु उक्तानामेव संकेतमितस्ततः करोति । तन्मते पुरुषस्य आकृतिः उदारता, संद्दशः, तारुण्यं, वेषश्च, कन्यां आकर्षति स्म । विवाहयोग्यस्य वरस्य चयने कन्या स्वतंत्रासीत् । अत एव कल्हणस्तां बहुशः (पतिवराम्) इति भणति । स्वयंवरेषु चापि कन्या एव उपयुक्तं, उक्तगुणयुक्तं च युवकं स्वीचकार ।[2]

**वधूचयनम्**—वधूचयन-प्रसंगे, तस्या अपि रूपं, शीलं, चरित्रं, स्वास्थ्यं कुलं च विलोक्यते स्म । मनुराह—

अव्ययांगीं सौम्यनाभीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वंगीमुद्वहेत स्त्रियम् ॥

भारद्वाजः कन्यायाः विद्यां, वित्तं रूपं, बुद्धिं च महत्त्वपूर्णम् वदति "**चत्वारि विवाहकारणानि वित्तं रूपं प्रज्ञा बान्धवमिति च**" गौतमः वसिष्ठः याज्ञवल्क्यश्च वरात् कन्या कनीयसी स्यादित्याहुः । कामशास्त्रानुसारमिदं वयसः अन्तरं वर्षत्रयस्य भवेत् । गौतम-वसिष्ठ-मनुयाज्ञवल्क्यानां मनीषिणां मते कुमारी, सजातीया अपि असपिंडा एव कन्या परिणेया । वेदव्यासमते तु सैव कन्या परिणेतव्या यन्मातुः गोत्रं, वरस्य च गोत्रम् भिन्नं भवेत् । कल्हणः अपि कन्याया इमान् गुणानितस्ततः व्यस्त-रूपेण संकेतयति ।

**कन्यायाः सौन्दर्य-ज्ञानम्**—वर्तमानसमयवत् पुरापि वरपक्षस्य जनाः कन्यां दृष्टुं प्रयान्ति स्म । यद्वा तस्याश्चित्रं वीक्ष्य तत्सौन्दर्य-ज्ञानं प्राप्नुवन् । राजतरंगिण्याः समाजे अपि तथैवाभूत्, तदा वै दूताः दूतिकाश्च कन्यासौंदर्य-स्वभावज्ञानाय ययुः ।

---

12 मनुस्मृतौ 9 का 28 । (2) आश्वलायनः 1, 5, 2 वधुशीललक्षणसम्पन्नः श्रुतवानरोग इति वरसम्पत्, आप० गृ० सू० 1–3, 20 स्मृतिचन्द्रिका 1 पृ० 78 मनुस्मृति 4–244, 3, 6, 7, 63, 65 या० स्मृतिः विवाह प्रकरण 3–54, 55 आश्वलायनः 1–5, 1 राज० 8–1537, 7–202, 2–147 । (3) मनुस्मृतिः 3–10 भारद्वाज गृ० सू० 1–11, गौतम ध० सू० 4–1, वसिष्ठ ध० सू० 8–1,

कन्यायाश्चित्राणि चाप्यानीयन्ते स्म । कन्यायाः कस्यचिदंगस्य चिह्नेनापि तस्या सौन्दर्यपरिज्ञानमभवत् ।[4]

**विवाह-योग्या-अवस्था**—वैदिक-काले वेदानां शिक्षाया अनन्तरं पुरुषाः विवाहं कृत्वा गृहस्थाश्रमे प्राविशन् । कल्हणस्य वर्णनान्यपि तदेव प्रतिपादयन्ति । प्रायेण अष्टादशवर्षाणां ब्रह्मचर्यव्रतमंगीकृत्य परिणयः व्यधायि । कन्याया अवस्था षोडशवर्षेभ्यः न्यूना नाभवत् । युवकानां कृते प्रायेण आयुषः बन्धनं नाभवत् । वंशसंचालनाय प्रायेण ते विवाहमकुर्वन् । पुत्राभावे द्वितीया कन्यापि परिणेतुं योग्याभवत् । कस्यामप्यवस्थायाम् कन्यानां विवाहाय तासु विवाह-विषये ज्ञानस्यावगमनस्य च बुद्धिः, अनिवार्यामन्यत । अपक्वबुद्धेः विवाहविषयकं ज्ञानं न सुलभम् । सा च बुद्धिः युवावस्थायामेव संभवति । बालविवाहस्य प्रथा तदा नासीत् । राजतरंगिण्यां कन्या विवाहोत्का पतिंवरा च निगदिता वर्तते । इदं च शब्दयुगलं कन्यायाः तरुणावस्थां, विवाहविषये तस्याः परिपक्वज्ञानं च संकेतयति । स्वयंवरे अपि कन्या स्वयमेव पतिं वृणोति स्म, तस्मात् कन्यायाः परिपक्वबुद्धेः कल्पना जायते, तस्मात् षोडष्याः, तदुत्तरावस्थाया वा विवाहः अभवदिति निश्चीयते । स्वपरिचयं ददत्याः नागकन्यायाः **"पित्रा विद्याधरेन्द्राय प्रदातुं परिकल्पितेति"** वचनं तां व्यतिगतबाल्यकालां साधयति । उभयोः नागकन्ययोः शृंगारवर्णनमपि न तत्बाल्यं, अपक्वबुद्धिं वा प्रकटयति, किन्तु यौवनमेव तेन द्योत्यते, तारुण्ये एव तथाविधशृंगारस्येच्छा जायते ।[5] ऋग्वेदकाले स्त्रियः स्वयमेव स्वपतिचयनमकार्षुः । बहुशश्च तस्य संकेताः तत्र प्राप्यन्ते, काणे-महोदयस्य सम्मतौ कन्याविवाहस्तरुणावस्थायाः किंचित् पूर्वम् किंचिदनन्तरं वाभूत् । धर्मसूत्राणि गृह्यसूत्राणि चापि विचारस्यास्य पुष्टिं कुर्वन्ति । प्रायेण सर्वेषु गृह्य-सूत्रेषु निगदितं यत् विवाहानन्तरं दम्पतिः रात्रित्रयं ब्रह्मचर्यपालनं, कृत्वैव संभोगं कुर्यात् । अनेन चानुमीयते यत् रजस्वलावस्थायाः पूर्वम् पश्चात् वा विवाहः अभवत् ।

अपि च समस्तगृह्यसूत्रेषु विवाहान्तरं चतुर्थीकर्म-संस्कारस्य उल्लेखो वरीवर्ति । अयं संस्कारः गर्भाधानसंस्कारादभिन्न एव । गर्भाधानसंस्कारस्य च चतुर्थे दिवसे संपादनं तरुणावस्थामेव द्योतयति । अतः युवावस्थायां, रजस्वलावस्थायां वा विवाहः अभवत् कन्यानां, सा चावस्था षोडश्या एव संभवति ।[5]

**अन्तर्जातीय-विवाहाः**—वैदिकसाहित्ये नैकस्थलेषु अन्तर्जातीयविवाहानामुल्लेखा वर्तन्ते । गृह्यसूत्रन्तु स्वजातावैव विवाहमादिशति । मनु-वसिष्ठ-प्रभृतयः उच्चवर्णस्य ब्राह्मणादेः निम्नवर्णस्य शूद्रादेः कन्यास्वपि विवाहं स्वीकुर्वन्ति । तथापि सुजातौ परिणयः श्रेष्ठः मन्यते स्म इत्यत्र न संशयावकाशः । एकस्मिन् स्थाने भगवान् मनुः भणति यत् शूद्रया सह विहितोद्वाहः ब्राह्मणो नरकं प्रयाति । एतस्मिन् विचारे सत्यपि, एतद्विधा विवाहा पूर्वकाले समभवन्नेव ।

---

या० स्मृति० 1–52 । (4) 1–250 से 255 । (5) 1–68, 66, 214, 206

कविवर्यः कल्हणः अपि यद्यपि समानवंशे जातौ एव च विवाहमुचितं मनुते, असमान् विवाहांश्च धिक्करोति तथापि, उच्चजातीयानां निम्नजातिषु विवाहा अभूवन्नेव तत्काले। (7–10)। भारते अपि च अन्तर्जातीयविवाहानां सत्ता आसीदेव। यादवानां वृष्णिानां वा गान्धारेषु विवाहा अजायन्त। गान्धारनरेशः स्वकन्यास्वयंवरे वृष्णीनपि निमंत्रितवान् (1–66)। द्विजानां नागादिषु नीचजातिष्वपि पाणिग्रहणमभूत्। विशाखाख्यस्य द्विजन्मनः नागकन्यया चन्द्रलेखया सह विवाहः समजनि। परन्तु एतादृशा विवाहा अनुचिताः अमन्यन्त (सम्बन्धायोग्यमपि) नागानां विद्याधरैः सहापि विवाहोल्लेखः स्पष्टं वरीवर्ति। नागकन्यां इरावतीं तत्पिता विद्याधरेन्द्राय दातुमकल्पयत्। "**पित्राविद्याधरेन्द्राय प्रदातुं परिकल्यिता, इरावत्यहमेषा**", ब्राह्मणानां क्षत्रियेषु, क्षत्रियाणां वैश्यशूद्रेषु, वैश्यानां च शूद्रेषु, क्षत्रियाणां ब्राह्मणेषु विवाहस्य बहवः उल्लेखाः प्राप्यन्ते राजतरंगिण्याम्। इत्थमसंशयमिदं यत् अन्तर्जातीयविवाहाः भारतीयसमाजे प्रावर्तन्त।

**बहु-विवाहः**—एकस्यैव पुरुषस्यानेककन्याभिः समं विवाहा वैदिककालादद्यावधि भारतीय-समाजे विलोक्यन्ते। एते एव च बहुविवाहा निगदिताः। राजतरंगिण्यां बहुविवाहानां शताधिका उल्लेखा विद्यन्ते। **'सपत्नीनां'**, **'नृपांगनाः'**, **द्वैमातुरः** **'सपत्नी'** प्रभृतयः शब्दाः बहुविवाहानामेव सूचकाः सन्ति। कलशस्यान्तः पुरे एकसप्ततिः योषितः आसन् अधिकाश्च तासु कृतविवाहा अभूवन्। उच्चलः स्वराज्ञां जयामत्यां सत्यामपि वर्तुलनृपतेः कन्यया सह विवाहं चकार। मल्लार्जुनः पद्मरथस्य कन्यया सोमालया, नागपालस्य च कन्यया समं विवाहं चकार। जयापीडस्य कल्याणदेवी कमला चेति द्वे महिष्यौ आस्ताम्। मेघवाहनस्य अमृतप्रभा यूकदेवी इन्द्रदेवी प्रभृतयः भार्याः आसन् याश्च स्वनाम्ना विहारान् मन्दिराणि च कृतवत्यः। इत्थं च बहु-विवाह-प्रथाया बहवो दृष्टान्ताः सन्ति। राजपरिवारेष्वेव केवलं न, सामान्यजनेष्वपि बहुविवाहः अभूत् "**दरिद्रयोषितः**" पदं तत्र प्रमाणम् भार्यासु च कनीयसी प्रियतमाभवत्।[7]

**विवाह-प्रकाराः**—सूत्रग्रन्थेषु स्मृतिषु च अष्टविधानां विवाहानां स्पष्टमुल्लेखः स्फुटतया दृश्यते। विष्णुपुराणे ते इत्थं संगृहीताः सन्ति।

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्व-राक्षसौ वापि पैशाचश्चाष्टमोऽधमः ॥ 3–10 ॥

---

से 209। पारस्कर गु० सू० 1–8, 10, आपस्तम्ब 8–8, 9 मानव गृ० सू० 1–14, 14। (6) आ० ध० सू० 2–6, 13–13 मानव ध० सू० 1–7, 8 गौतम ध० सू० 4–1 धर्मशास्त्रका इतिहास पृ० 448 मनुस्मृति 3, 12, 13; वसिष्ठ 1–25 बौद्धायन 1–8, 2 मनु-स्मृति 3–15, राज० 7–10, 5–387, 1–66, 204, 242, 243, 218, 7–11, 7–12। (7) 7–724, 6–195, 7–347,

आपस्तम्ब-धर्मसूत्रे षण्णामेव वर्णनं विद्यते। एतेषु च आद्याश्चत्वारो ब्राह्मणस्य, गान्धर्व-राक्षसौ राज्ञः, आसुरो विवाहः वैश्यशूद्रयोः वर्णिताः। पैशाचो विवाहः सदैव गर्हितः अस्ति। तथा च गरुड-पुराणे —

चत्वारो ब्राह्मणास्त्वाद्यास्तथा गान्धर्वराक्षसौ
राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ।।

**ब्राह्म-विवाहः**—श्रुतिशीलवन्तं वरमर्चयित्वा प्रासाद्य च तस्मै यथान्यायं यत्र वस्त्राभूषणालंकृता कन्या प्रदीयते स ब्राह्मो विवाहः प्रकीर्तितः।

**दैवः**—यज्ञं कुर्वते पुरोहिताय धनादिदान-पुरस्सरं वस्त्रालंकारशोभिता दुहिता यत्र दीयते स दैवो विवाहो निगद्यते।

**आर्षः**—अस्मिन् विवाहे जनकः वरादेकं गोयुगलं गृहीत्वा विधिवत् तस्मै कन्यां प्रायच्छत्।

**प्राजापत्यः**—उभावपि सहैव धर्ममाचरतामित्युपदिश्य, वरं पूजयित्वा, कन्या-दानं प्राजापत्यो विधिः प्रोक्तः।

**आसुरः**—आसुरे विवाहे पिता वरगृहात् यथाभिलषितं द्रविणं गृहीत्वा कन्यां प्रददाति।

**गान्धर्वः**—कन्यायाः वरस्य च स्वेच्छया, कामभावनया च अन्योन्य-संयोगात् जातो विवाहः गान्धर्वो ननु।

**राक्षसः**—हत्वा जित्वा भित्वा वा कन्यामपहृत्य यदा सा आनीयते, तया सह विवाहश्च विधीयते स राक्षसो विवाहो निगदितः।

**पैशाचः**—अचेतना, प्रमत्ता वा कन्या यदा छलात् एकान्ते नीयते कामपरवशेन, हठाच्च संभोगं कृत्वा विवाहः विधीयते स पिशाचः अस्ति।

प्रथमेषु चतुर्षु विवाहेषु वराय कन्यादानं विधीयते। काणे-महोदयस्य मते दानस्याशयः पितुरुत्तरदायित्वस्य, वरस्योत्तरदायित्वे स्थानान्तरणमस्ति। यत्र च कन्यादानं भवति तत्र सा वस्त्राभूषणालंकृतैव दीयते। ब्राह्मविवाहः सर्वोत्कृष्टः मन्यते, यतः कन्यापिता अत्र कमपि उपहारं वरात्, नैव गृह्णाति। आर्ष-विवाहो द्वितीयं स्थानं लभते, यतः कन्यापिता गोयुगलं स्वीकरोति। दैवो विवाहः ब्राह्मणेष्वेव संभवः। प्राजापत्ये, एकस्यां भार्यायां जीवितायां पुरुषः अपरां नैवांगीकर्तुम् शक्नोति। अवशिष्टाश्चत्वारः निन्दनीयाः वर्तन्ते। आसुरे विवाहे कन्या विक्रीयते स्म। गान्धर्व-विवाहे जनकस्य न भवति कथंचित् सहयोगः। नापि पवित्रतावशिष्यते।

---

337, 1473, 3–11, 7–521, 8–287, 291, 8–1975, 4–470, 3, 9 से 13, 5–285। (8) 8–1535, 724, 7–515, 8–1638, 3–443, 8–359, 8–2389, 7–10, 3–445, 2–147, 148, 2–8, 48, 3–123, 307, 7–1198, 8–1969, 3394, 1939, 1922, 1923, 8–1537, 4–468।

राक्षसपैशाचविवाहयोः नापि पितुः प्रायेण, नापि च कन्यायाः सम्मतिः भवति। संक्षेपतः अष्टविवाहा भागद्वये विभाजयितुं शक्यन्ते। प्रथमवर्गे ते विवाहा आयान्ति यत्र पितुरेव समस्तमुत्तरदायित्वं भवति, स एव यथेच्छं योग्यं वरं चान्विष्य तस्मै कन्यां प्रयच्छति। ते च विवाहा ब्राह्म-प्राजापत्यदैवार्षाः सन्ति। द्वितीये वर्गे विवाहाः सन्तिः यत्र पिता कन्यायै तदभीष्टं वरमन्वेष्टुमनुमतिं ददाति। केनचित् वा अपहृयते। गान्धर्व-राक्षस-विवाहयोः कन्यायाः इच्छापि भवति तस्मात् पितापि किंचिदुत्तरदायित्वमंगीकरोति। स्वयंवरस्य स्थानमपि द्वितीये वर्गे वर्तते। यत्र कन्यायाः इच्छा एव प्रधाना भवति। उक्तानां सर्वेषां विवाहानां संकेताः राजतरंगिण्यां विद्यन्ते। तेषु च युगानुसारं चरमचतुर्णान्तूल्लेखाः बाहुल्येन विद्यन्ते। विशाखब्राह्मण-नागकन्ययोः जयापीडकल्याणदेव्योः (4–468) इरावती-विद्याधरेन्द्रयोः, सुज्जी-भागिककन्ययोः हंसी-चक्रवर्मणोः (5–387) विवाहाः तद्भेदानामेव द्योतकाः सन्ति।

**विवाह-विधि** :—वधू-वरचयनान्तरं विवाहतिथिः निश्चिताभवत् वाग्दानानन्तरं, शुभे मुहूर्ते लग्ने च विवाहयात्राभूत् सा वै वरयात्रा निगद्यते स्म। तस्यां वरयात्रायां वरः अश्वारुढः कन्यागृहं ययौ। तेन समं बहवः सम्बन्धिनः मित्राणि, परिचिताश्चाभवन् सर्वे अपि, सुन्दराणि महार्णाणि च वस्त्राणि दधुः ते वै जन्याः (बराती) न्यगद्यन्त। यदा च वरयात्रा वधूगृहं प्राप तदा आसन-जलान्नमिष्टान्नादिभिः तस्याः सत्कारः अभवत्, नार्यः मंगलगीतान्यगायन्। संगीतज्ञाः संगीत-वाद्यानां मधुरं रवं च चक्रुः। आतिथ्यसत्कारानन्तरं, एकस्मिन् सुसज्जिते विवाहमंडपे अग्निं पुरस्कृत्य विवाहसंस्कारः अभवत्, वेदप्रतिपादितमंत्राणाञ्चोच्चारणमक्रियत। एकः पुरोहितः सर्वम् कृत्यं समपादयत् कन्यादानं, ध्रुवदर्शनं, अश्मारोहणं लाजाकर्म, सप्तपदी-प्रभृतयः विधयः विवाहसंस्कारे प्रमुखाः आसन्। संस्कारे वधूः महार्हैः परभरमणीयैराकर्षकैश्च वस्त्रैरलंकारैश्चालंकृताष्ठित्। चन्दनाद्यालेपः तदंगेष्वभवत्, सम्बन्धिनः अपि तत्रैव तस्थुः सप्तपदीविधेरनन्तरं यज्ञविधिं च समाप्य समुपस्थिता जनाः पुष्पैः लाजैश्च वधूवराभ्यामाशीर्वादं ददुः अथ प्रीतौ पितरौ पुरोहिताय भूरिदक्षिणां ब्राह्मणेभ्यः मन्दिरादिभ्यश्च दानं ददुः। निमन्त्रिताः जनाश्च दम्पतिभ्यामुपहारान् ददुः।

राजपरिवाररेषु स्वयंवरस्य प्रथाभवत्। विशालायां राजसभायां नैकदेशीया राजानः आगच्छन्। राजपुत्री च वरमालां गृहीत्वा क्रमशः एकैकसमीपे ययौ। तस्याः सखी प्रत्येकं राज्ञः राजसूनोश्च परिचयमदात्। यञ्च राजतनया योग्यममन्यत तस्य कंठे मालां प्रत्यर्पयति स्म। तदनन्तरं प्रमोदोत्सवाः समभवन् महता समारोहेण च समं विवाहसंस्कारो बभूव।

विवाहानन्तरं वध्वाः पालनं ध्यानेन तत्परतया चाभवत्। "इयमस्तु पोष्या" इति वेदवाक्यं सदैव पत्युः मनसि अतिष्ठत्। पत्नी अपि पतिं दैवमिव मत्वा तस्य सेवायां संलग्नाभवत्। पत्यौ दिवंगते सा स्वजीवनं शून्यं मत्वा अग्नौ आत्मोत्सर्गम्

कृत्वा सती बभूव । विधवानां विवाहस्योल्लेखः राजतरंगिण्यां न प्राप्यते । एकस्मिन् पद्ये एव केवलं "पुनर्भुवम्" शब्दः तस्य संकेतमात्रं करोति ।[8]

## समाजे-नारी

भारतीय-संस्कृतौ नार्या अत्यन्तगौरवपूर्णम् स्थानमतिष्ठत् । वेदेषु **"द्यौरहंपृथ्वी त्वम्, इमा नारी अनश्रवा अनमीवाः सुरत्नाः सुमंगलीः प्रतरणी गृहाणां"** इत्यादिनैकमंत्रांशैः तन्महत्त्वं प्रदर्शितम् । काव्येषु च तासां महत्त्वपूर्णस्थानस्य चर्चा वर्तते-तथा चाह-महाकविः भवभूतिः—

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो
रसावस्या स्पर्शो वपुषि बहुलश्चन्दन-रसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ।।

कालिदासः नारीं लक्ष्मीं, सखीं, सचिवं चाभणत् । '**या देवी सर्व-भूतेषु मातृरूपेण संस्थिता** । इत्यादि-वाक्यानि तस्याः सम्मानस्य सूचकानि । भगवान् मनुः तत्पूजामनिवार्याम् मनुते । तन्मते यस्मिन् गृहे स्त्रियः पूज्यन्ते तत्र देवा निवसन्ति—**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः** ।

नार्याः तादृश एव सम्मानः राजतरंगिण्यामपि विलोक्यते । सा पूज्या तत्र भणिता । कविमते प्रजाभिः दिव्यदृष्टिः नारीदेवतेव सम्मान्या **"प्रजानां भातरस्तास्तामयशयन् देवतामिव"**, तस्यै देवी पदं बहुशः कविना प्रयुक्तम् । नासौ केवलं भोगसाधनममन्यत । सा शक्तिरूपे कल्पिता कविना, तुंजीनपत्नी विष्णुशक्तिरमन्यत (3–391) कविः कथयति यत् साध्वी नारी समस्तविपदः दूरीकर्तुम् समर्था अस्ति । नार्याः चतुर्विधं रूपं विलोक्यते (1) **कन्यारूपं**, यदा शृंगारोदधिकौमुदी (3–484) सा स्वचरित्रं रक्षन्ती पित्रोः सेवातत्परा दृश्यते । (2) **पत्नी-रूपं** –यस्मिन् स्थिता पतिं देवमिव मत्वा स्वगुणैः सेवापूजादिकर्मभिश्च पतीन् पोषयन्ती दृष्टिपथमायाति — **तं पतिं पति-देवता, अतोषयत् परार्ध्यश्रीः, शीलाचारादिभिर्गुणैः ।।**

गृहस्थाश्रमे स्थिता नारी **"गृभ्णाभि त्वा सौभगत्वाय"** इति वेदोक्तविवाहोद्देश्य–पूर्तिमकार्षीत् अन्वयतरोरंकुरं पुत्ररत्नं प्रसूय सा वंशवृक्षमवर्धयत् । पत्यौ च दिवंगते सा जीवनं व्यर्थं मत्वाग्निज्वालासु स्वांगमपातयत् । पतिं दुखिनं वीक्ष्य सा सान्त्वनामदात् । एतादृशीनां पतिव्रतानां लोकोत्तरः प्रभावश्चरित्रं च कविना पौनः पुन्येन वर्णितम् । कविमते पतिव्रतायाः प्रभावेण त्रैलोक्यविनाशः अपि सुकरः आसीत् । तन्मुखात् निर्गतः शब्दः सफलीबभूव । तस्याः प्रभावात् दुर्भिक्षः अपि शान्तः अभवत् । अन्तःपुरे सा अधिदेवतासीत् (3–436) नरस्य नागकन्यायाश्च दीर्घाम् कथां दत्त्वा कविरस्मान् शिक्षयति यत् नारी केवलं भोग्या

एव नास्ति । तथा चेत् मत्वा नरः व्यवहरिष्यति तर्हि तस्य नाशः सुनिश्चित एव । भोगाय नागकन्याया अपहरणं कुर्वतो नरस्य, राज्यं परिवारः वंशश्च विनष्टम् । नार्याः तृतीयं रूपं। **(3) नेतृरूपे दृश्यते ।** भारतीय-समाजे नार्याः कर्तव्यं केवलमध्ययने गृहस्थ-धर्मपालने एव वा न समाप्यते किन्तु समाजं प्रति अपि बहूनि तत्कर्तव्यानि वर्तन्ते । वेदाः ताभ्यः सर्व-क्षेत्रेषु समानाधिकारान् ददुः । अद्यापि भारते नारीणां पुरुषवत् अधिकाराः सन्ति, अत एव श्रीमती इन्दिरा-गान्धी प्रधानमन्त्रिपदमलंकरोति । कल्हणेन चित्रिता नारी अपि तादृशी अस्ति । सा राजनीतौ अपि निपुणा दृश्यते । समये समागते तासां तत् नेतृरूपं पुरतः समायाति । समाजस्य राष्ट्रस्य च सर्वविधकार्येषु ताः सहयोगं चक्रुः स्वपतीनां, वाक्पुष्टा-अमृतप्रभा-यूकदेवी-इन्द्रदेवी-प्रभृतयः एतादृश्यः आसन् । राजतरंगिण्यां राजपदमधिष्ठिताः नैकाः नार्यः दृष्टिपथमायान्ति । दामोदर-पत्नी यशोमती पुत्राभावे स्वयमेव ब्राह्मणैः राज्यपदे अभिषिक्ता, सती राज्यकार्यम् चकार । **"राज्ये यशोमतीं कृष्णोः द्विजैरभ्यषेचयत्"** महाराज्ञी दिद्दा, सुगन्धा चापि शासनकार्यम् चक्रतुः । महांश्चासीत् तयोः प्रभावः प्रजासु ।। (1–70) नार्याः **(4) चतुर्थम् रूपं** मातृरूपमासीत् यदा सा स्वीयं सुखदुःखं विस्मृत्य सन्ततेः पालनपोषणे तत्सुखाय निरताभूत् । अस्मिन् रूपे एव वस्तुतः नारी देवीरूपे पूज्यते स्म ।

किन्तु यथैव चतुर्विधमिदभद्भुतं रूपं सच्चरित्रं च कविना वर्णितं, तथैव नार्याः भ्रष्टरूपमपि कविना नैव तिरोहितम् । प्रथमतरंगे सा अबला अभिहिता कविना । कविः प्राह कान्ताकृतिं निधाय नारी पुरुषमत्यासंगाय प्रेरणां ददौ । स्वविलासैः तं वशे चकार । अनंगलेखा (3-497) सुगन्धा, दिद्दा च एतादृश्य एव वर्णिताः सन्ति । पतिविरहे अन्यपुरुषैः सहासीत् तासां सम्बन्धः, सुगन्धायाः, दिद्दायाश्च भ्रष्टचरित्रं कविना पौनः पुन्येन वर्णितम् । शतशः स्थलेषु कविः तादृशां नारीणां वर्णनं व्यदधत् याः व्यभिचाररताः, लुण्ठनपराश्च दृश्यन्ते । रूपं स्वीयं विक्रीय ताः वित्तार्जनं चक्रुः । एतादृशी नारी कुलटा, सम्बन्धकी, वेश्या, पुंश्छली (3–504) अभण्यत । दुर्जराणां क्रोडे सा प्रमोदं प्राप (3–507) अस्मिन् रूपे नारी अनुरक्ता विवेकशून्या च भणिता (3–503) विधवाःस्त्रियः अपि उन्मत्ताः सत्यः दुराचाररता अभूवन् । (5–230) शंकरवर्धनस्य पत्नी सुगन्धा तथैवासीत्, कदाचित् स्त्रियः योगेश्वरी-रूपं निधाय पुरुषं छलकपटेन वशीकर्तुम् कामवासनाश्च पूरीकर्तुमुद्यता दृष्टिपथमायान्ति । गृहस्थजीवने अपि तादृशः स्वर्गः न दृश्यते यादृशः वेदकाले रामायणकाले वा. प्रबन्धस्य तृतीये तरंगे अस्माभिः बहुशः दृष्टं यत् नारी स्वार्थसाधनाय पतिं तर्जयन्त्यपि न संकोचमकरोत् । पत्युः पुत्रस्य वा घाताय नैकाः स्त्रियः उद्यता दृष्टिपथमायान्ति । एतादृशीनां दुराचारिणीनां पापानाम् नारीणां बहवः दृष्टान्ताः सन्ति राजतरंगिण्याम् ।

अद्य तावत् पूर्वतः अपि विकृतरूपं नार्याः समजनि अत एव कश्चित् आह —

नारी जीवन हाय तुम्हारी यही कहानी ।
आंचल में है दूध और आंखों में पानी ।।

अत्र वर्णिता दशा एव राजतरंगिण्याः समाजे विलोक्यते। पुरुषाः तां भोग्य-वस्तु अमन्यन्त, पुरुषैः ताः कठोराः चंचलाः अविश्वास्याः मताः अद्य तु प्रायेण जना तथैव चिन्तयन्ति। नारीणामपि तत्सच्चरित्रं सम्प्रति विलुप्तम्। किन्तु सम्प्रति नारीणामधः पतने कारणं पुरुष एवास्ति मन्मते। एतादृशा सच्चरित्रा देवीतुल्याः वर्तन्ते काश्चन नार्यः यासां जीवनस्य प्रत्येककोणे प्रेम एव प्रवहति, चरित्रमेव तिष्ठति, किन्तु आत्मनः पडितम्मन्यमानाः, भ्रमरा इव कामलोलुपाः इतस्ततो विचरणशीलास्तद्रस-स्वादाय तदुपरि भ्रमन्ति। नार्या अबलत्वस्य दुरुपयोगं च कुर्वन्ति।[9]

## जाति-प्रथा

भारतवर्षे नैकजातीनां प्रचारः प्राचीनकालादेव विद्यते। ऋग्वेदे तावत् सर्वप्रथमं चतुर्वर्णानां संकेतो विद्यते—

ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः।
ऊरु तदस्य यद्वैश्यो पद्भ्यां शूद्रो अजायत॥

एतेषां वर्णानामेव परस्परं सम्मिश्रणेन नैकजातयः समुत्पन्नाः तासां च विविधरूपं अथर्ववेदे विलोक्यते। तदनन्तरन्तु सततं विकास एवाभवत्। राजतरंगिण्यां तु नैकजातिभिः सह उपजातीनां, वर्गाणामुपवर्गाणां च अभ्युदयः संजातः। जाति-प्रथायाः पूर्णविकासः कल्हणेन प्रदर्शितः इमाः खलु विद्यन्ते स्म प्रमुखाः जातयः—

**(1) यादवजातिः** – यदुकुलोद्भवा एव यादवा निगद्यन्ते स्म, यादव-शब्दः– यदोरपत्यं पुमानिति व्युत्पत्या-यदु-शब्दात् अण् प्रत्यये निष्पद्यते शब्दरत्नावल्यां यादवः श्रीकृष्णः उक्तः–भगवद्गीतायां कृष्णः यादव इत्यभिहितः खलु—

"सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण ?
हे यादव। हे सखेति॥"

श्रीभागवते लिखितमस्ति यत्–ययातेर्ज्येष्ठपुत्रो यदुस्तस्य वंशश्च यादव इति ख्यातिं प्राप। यथा—

**"ययाते ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ॥"**

यादवा एव तत्र माधवा वृष्णयश्चोक्ताः खलु **"माधवा वृष्णयो राजन् यादवाश्चेति संज्ञितम्"**॥ इति श्रीभागवते 9 स्कन्धे 23 अध्यायः।

राजतरंगिण्यामपि यादवः वृष्णिरित्याभिहितो ननु। **"निमन्त्र्य शुश्रावानीतान् वृष्णीन् दर्पोष्णदोर्द्रुमः"** (1–66)॥ अयञ्च वृष्णिशब्दः वृष्धातोः "सृवृषिभ्यां कित्"

(9) 1–131, 73, 74, 72, 720, 21, 245, 272, 70,2–45, 47 50, 52, 54, 56,57, 3–9, 10, 1–206 से 215, 230, से 233, 2–155, 3–69, 8–365, 366।

इति उणादिसूत्रेण (4–49) निःप्रत्यये कृते सिद्ध्यति शब्दरत्नावल्यां वृष्णि यदिव एव कथितः महाभारतेऽपि यादवानां कृते वृष्णिशब्दः प्रयुक्तः।

यथा हि सर्वास्वधापत्सु पासि वृष्णीनरिन्दम।
तथा ते पांडवाः रक्ष्याः पाह्यस्मान्महतो भयात् ।महा ५।७२।४।[1]

इत्थंच यादव-वृष्णिशब्दौ पर्यायाविति निर्विवादम्।

राजतरंगिण्यां यादवानामुल्लेखः केवलं प्रथमतरंगे केषुचित् श्लोकेष्वेव वर्तते यादवानां नेता कंसारिः भगवान् कृष्णः अभूत् स एव यदुकुलोद्वहो निगद्यते। स च कृष्णः मधुसूदनः अपि कथितः (1–70)। यादवा वीरा योधारः अभूवन् मथुरायां ते जरासन्धेन सह युध्यन्तो दृश्यन्ते। प्रथमन्तावत् जरासन्धसैनिकैः पृथुबलैः मथुरामाक्रम्य यादवीहसितैः सह यादवानां धवलं यशो निमीलितम्। किन्तु पराजित-प्रायान् यादवान् वीक्ष्य लागंलध्वजो बलरामः जरासन्धेन सहायतायै आहूतं काश्मीरेन्द्रं गोनन्दं संगरे संरुरोध। भीषणं जन्यं तत्राजनि काश्मीरनरपतिश्च रणागंण एव वीरसुलभां गतिं प्राप बलरामश्च जयश्रियमालिलिङ्ग।

अथ तस्मिन् सुक्षत्रिये गोनन्दे द्युलोकङ्गते सति तत्सूनुः श्रीमान् दामोदरः क्षितिपतिपतिर्बभूव। स खलु पार्थिवः पितृवधं स्मारं स्मारं न निर्वृतिं लेभे। अतः राज्यमवाप्य स स्वयंम्बरे निमन्त्रितान् निशम्य, तानाक्रन्तुमुद्यतः यात्रां प्रारेभे। अथ यादवास्तेन सह भीषणाहवनिरता दृष्टिपथमवतरन्ति। तत्र च भीषणः चक्रायुधसंग्रामः समजायत, यत्र यादवाश्च विजयिनो बभूवुः।

यादवा लोभशून्या आसन्, कश्मीरनरेन्द्रं दामोदरं विजित्यापि यदुवंशतिलकः कृष्णः तत्पत्नीं द्विजैर्राज्ये अभ्यषेचयत् न च स्वप्रभुत्वं तत्र स्थापितवान्। ते शिक्षां प्रति अप्रमत्ता आसन् पुराणादिग्रन्थानां सम्यगध्येतारस्तेषां शिक्षाया अनुकर्तारश्चा-भूवन्। यशोवत्या राज्याभिषेकसमये रुष्टान् सचिवान् वीक्ष्य कृष्णः पौराणिकं श्लोकमपाठीत्। पुराणशिक्षानुसारमेव तन्मते राजा हरांशजः अमन्यत। राजमातरं ते देवतामिव चापश्यन्।

यादवा राजकार्ये अपि निपुणा बभूवुः कंसारिः कृष्णस्तेषां नृपतिरासीत्। यो हि मथुरानगर्याञ्चि राज्यम् चकार। यादवानां निवासस्थलं मथुरानगरी कथितास्ति कल्हणेन।[2]

**(2) कायस्थ-जातिः**—साम्प्रतं भारतवर्षे कायस्थजातिः परितः प्रसिद्धा वरीवर्ति। प्राचीनकाले कायस्थानां जातिरूपे परिचयः न क्वापि दृश्यते। कल्हणकाले सम्भवतः जातिरूपे कल्पना सुमुद्गता। कल्हणस्तान् दास्याः पुत्रान् आह—**मूर्खेण येन कायस्था दास्याः पुत्राः प्रवर्तिताः**" (5–180)। एतेन कल्हणचेतसि कायस्थाख्या

---

(1) श० क० द्रु० च० भागः पृ० 39, 491। (2) 1–57 से 73।

निम्नजातिरासीदिति कल्पयितुं शक्यते। कह्लणानन्तरं निर्मितेषु कोशेषु कायस्थविषये विस्तृतं वर्णनं विलोक्यते। कायस्थः "नटजातिविशेषः" इति मेदिनीकोषे, कूटकृत् पंजीकरः इति त्रिकाण्डशेषे, करणः पंजिकारकः इति जटाधरकोषे प्रतिपादितम्।

कायस्थानामुत्पत्तिविषये अग्निपुरोणे खलु लिखितं यत् पुरा प्रजापतिमुखाद् विप्राः, बाह्वोः क्षत्रियाः ऊर्वोर्वैश्याः, पादात् शूद्राः तेषां त्रयाणां सेवकः लिपिकारकः कायस्थश्च सम्भूतः **"यस्य ग्रहणमात्रेण कायस्थो विप्रसेवकः। शूद्रात् कनीयसी जातिरभवत् विप्रसेवकः।"** वह्नि-पुराणे पाशुपतदानाध्याये वधबन्धादिनिपुणेभ्यः कायस्थेभ्यः प्रजारक्षणस्योपदेशो विद्यते।

चारचारणचौरेभ्यो वधबन्धभयादिभिः।
पीड्यमानाः प्रजा रक्षेत् कायस्थेभ्यो विशेषतः॥

इत्थं पुराणानां कोषाणाञ्च वर्णनं प्रतिपादयति यत् कायस्थाः लेखककार्यर्तृणाम् क्रूरस्वभावानां लुब्धकानां जनानां वर्गविशेषः अवर्तत। शूद्रादपि कनीयसी तेषां जातिरमन्यतेति। स्टीन-महोदयः स्थाने-स्थाने तान् "क्लर्क" इत्यलिखत्। पंजीकरः शब्दः अपि तस्यैव पुष्टिं करोति[3]।

**कायस्थानां चरित्रम्**—कायस्था निसर्गत एव क्रूरा लुब्धका वंचकाश्चाभूवन्। कस्मिंश्चित् ग्रन्थे तेषां दुर्वृत्तमित्थं खलु वर्णितम्।

"कायेस्थेनोदरस्थेन मातुर्मांसं न भक्षितम्।
न तत्र करुणाहेतुस्तत्र हेतुरदन्तता॥ 1॥
काकाल्लौल्यं यमात् क्रौर्यं स्थपतेरथ कृन्तनम्।
आद्यक्षराणि संगृह्य कायस्थ इति निर्मितः॥ 2॥

इदं हि पद्ययुगलं कायस्थानां चरितादिकं सम्यक् वर्णयति तच्चेदं सर्वं राजतरंगिण्यामपि बहुशः पुष्टं जायते। कह्लणस्तान् दासीपुत्रानुक्त्वा तदधः जातित्वं प्रकटीकरोति।

कायस्थानां क्रूरस्वभावः स्थाने-स्थाने विलोक्यते। चतुर्थतरंगे जयापीडस्य राज्ये क्रूरकर्मसु निरताः, भूपांश्च तथा चरितुं प्रेरयन्तस्ते दृष्टिपथमायान्ति। राज्यधनस्यात्यल्पभागं कोषाय दत्त्वा ते हि लुब्धकाः सर्वस्वहराः कायस्था अवशिष्टं स्वयमेवोपभुंजते स्म।

क्रूरप्रकृतिकैस्तैः प्रेरितः राजा हर्षः महादण्डव्यवस्थया विविधकरैश्च प्रजाः पीडयामास। अष्टमतरंगे कायस्थचरितं स्वभावश्च सम्यगवगम्यते। कविस्तत्राह "कास्यस्था निसर्गतो वंचका जायन्ते तादृग्गुरूपदिष्टाश्च ते विषबाणादपि भयंकारा भवन्ति। इमे हि विशूचिका-शूलसन्यासादिरोगेभ्योऽपि भयावहा वर्तन्ते। प्रजानां कल्याणनियुक्ता अपि प्रजारोगा इव ता घ्नन्ति। उपकारिणं ते कृतघ्ना वेताल इव

(3) श० क० द्रु० 2 पृ० 93 स्टी० 5, 90 टि० 5–180।

लीलया विनाशयन्ति। एते खलु स्वार्थसाधनकुशलाः प्राप्तावकाशाः मातरं पितरं पुत्रादिकं वापि छिन्दन्ति। यमाश्रित्य ते वर्धन्ते विषवृक्षवत् तमेव समूलमुच्छिद्य चिह्नमात्रमपि न तदवशेषयन्ति। चरित्रशून्या ननु ते स्वार्थसाधनाय मातरं भार्याम् तनयां वापि सामन्तानां परितोषाय सुरताय प्रेषयामासुः निजमायापाशेन द्विजानन्यांश्च वध्वा ते तान् पीडयामासुः श्मश्रुधारणादधिकं भीषणास्ते अदृश्यन्त। क्रूरतादिकारणात् राजभिस्तिरस्कृताः पाण्डित्यं प्राप्तुकामाः, राज्यान्निष्कासिता अपकृता वा भारत-स्तवादिस्तोत्राणि कायस्था अपठन्, दुर्गोत्तारिणी-विद्याजपं वा चक्रुः। अपवित्रास्ते सर्वैःरमन्यन्त। अत एव तन्निवासभूतस्य नगरस्य परिष्कारो व्यधीयत। एतादृक्चरिता दुष्टस्वभावाः पिशाचवत् क्रूरा लुब्धकाः स्थार्थिन उत्कोचग्रहिणः पण्डितमन्याः कायस्था नीतिविशारदै र्दण्ड्या मन्यन्ते स्म।

न हि शूद्राश्वकायस्थपिशाचाविष्टवैरिणाम्।
शसन्त्यन्तरितं दण्डं दण्डनीति-विशारदाः॥ 8–114॥

अत एव राज्ञा उच्चलेन ते समूलमुच्छिन्ना दंडिताश्च।

**येन संपठता श्लोकं कायस्थोन्मूलनं कृतम्** ॥ 8–87।

स हि अनेकान् तत्कार्यादपसार्य भंगासूत्रमयं वस्त्रं परिधाप्य कारागारे निक्षिप्तवान्। कैश्चित् सभायां चारणजनोचितं, वेश्यावत्, वाद्यादिकं कर्म चेत्याकारयत् कांश्चित् मुंडितमुंडान् विधाय कुम्भवादनैरुपहास्यं कारितवान्। **ते कुम्भवादनैः मुंडमुंडनैः**। 8–98। स्टीन-महोदयः कायस्थान् ब्राह्मणान् आह। किन्तु नेदं समीचीनं प्रतिभाति। यं श्लोकमधीत्य स्टीनमहोदनः एतत् निष्कर्षं गृहीतवान् स एव तद्विचारं खण्डयति पंक्तयस्तस्येमाः खलु।

तदन्तरे शिवरथो द्विजः प्रचुरचक्रिकः।
काथस्यपाशः पाशेन गलं वध्वा व्यपद्यत॥

शिवरथः अत्र द्विजो निगदितः अतः कायस्थपाशश्च ततो भिन्नस्यैव सिद्ध्यति। किंच कायस्थानां क्रूरकर्माणि लिखता मया कायस्थानां पाशैर्बंधनमप्युल्लिखितम्। अपरञ्च ब्राह्मणानां कायस्थानां स्वभावे अपि महदन्तरमस्ति। द्विजानां कार्यमध्ययनमध्यापनं नन्वस्ति कायस्थानाञ्च राजसेवा, उत्कोचप्रभृतिभिर्धनापहरणञ्चेति कायस्थान् ब्राह्मण-भिन्नान् करोति।[4]

**कायस्थानां कार्यमाजीविका च**—कायस्थाः प्रायेण राजकार्यं कृत्वा स्वोदरवृत्तिमकार्षुः, राजकर्मसु नियुक्तास्ते शंकरवर्मणः राज्ये लब्धप्रभावा दृश्यन्ते। तद्राज्ये ते उच्चपदेष्वासीना आसन्। कायस्थाः ग्रामेषु 'पटवारीति' भाषायां प्रचलितं ग्राम-

---

(4) 106, 10, 4–629, 8–121, 88 से 96, 102, 2383 टि० 5–180।

कायस्थपदमपि प्रापुः। किन्तु उच्चपदेषु स्थितास्ते हि जनशोषणमकार्षुः, सर्वदा प्रजापीडनरताश्च तस्थुः **कायस्था रुद्रपालाद्याः प्रजानां पीडनं व्यधुः** अनुचितोपायैः जनान् वंचयित्वा लुंठयित्वा च आत्मवृत्तिसंग्रहमकार्षुः अपकीर्तिभाजनानि च राजानोऽभूवन्। आपत्तौ चारणोचितं कार्यमन्यच्चाधर्मकार्यमपि चक्रुः। अत एव कविः स्थाने-स्थाने तेषां भर्त्सनां चकार, हीनवृत्या स तानवालोकयत्। पापिनश्च तानमन्यत।[5]

(3) **डोम्ब-जातिः**—दासकर्मकर्तॄणां नीचजातिरासीत्। राजतरंगिण्यां डोम्ब एव चण्डाल अपि अकथ्यत, चाण्डालाश्च डोम्बा अपि अभिहिताः अशुचयस्ते आसन्, तेषां स्पर्शमात्रेणैव जनाः, गृहाश्च अपवित्रा अमन्यन्त, वह्निना च तेषां शुद्धिरजायत। ते वे गायनकार्यम् चक्रुः। स्वगीतैश्च सर्वेषां मनोरंजनं चक्रुः। पंचमतरंगे क्रूरराज्ञः चक्रवर्मणः सभायां रंग नामा प्रख्यातः वैदेशिको डोम्बगायनः समायातः तद्गीत-श्रवणाय भूपतिना बहिरेव वितानं वितानितम्। अथ स्ववृन्दानुगतः डोम्बगायनः सभायां प्राविशत्। तस्य च चारुलोचने हंसी, नागलता चेति द्वे कन्ये सभां चित्रार्पितां चक्रतुः। नृपगुणसूचकैः जयजीवेति शब्दैः सभास्थलं गुंजितम्। उभे अपि रंगकन्ये रागविशेषस्य गायनं कुर्वन्त्यौ पंचमस्वरालापमादत्ताम्। डोम्बा वेणुप्रभृति-वाद्यान्यपि अजानन्। गायनसमये विविधाङ्गविलासस्तैः प्रदर्श्यते स्म। उक्तसभायां भ्रूविलास-शिरश्चालन-कटाक्ष-विक्षेपादिशोभित एव गीत-ध्वनिरजृम्भत। बालाभ्यां विविधहावभाव-विलास-स्मितादिभिः गीतमधिकं स्निग्धं सम्पादितम्। ते कन्यके कदाचित् कपोलं कटे निधाय कटाक्षैः जनान् मोहयतः स्म, कदाचित् मुखमधः कृत्वा अगायताम्, कदाचित् विविधं स्वरप्रयोगं अकुरुताम्।

मधुरगायनैः प्रसन्ना जना उपहारे हार-केयूरकुंडलादिकं ददुः ते डोम्बा नृत्येष्वपि निगुणा बभूवुः। चण्डतांडवचतुरास्ते दृश्यन्ते। नृत्यसमये उत्तेजकपद्यानि ते अपठन्।[7]

डोम्बा श्वपाकाः श्वपचा वापि निगदिताः। तच्च नाम तन्निम्नजातित्वं प्रकटयति। ते खलु आजीविकां केवलं गानैरेव न संचालयामासुः। अपितु राज्य-कर्माण्यपि अकार्षुः। मन्त्रिप्रभृतिषु उच्चपदेष्वपि आसीनास्ते दृश्यन्ते। सामन्ते-भ्योऽप्यधिकं ते अभिमानिनोऽभवन्। बहुशः खलु राजसेवायां निरता विलोक्यन्ते डोम्बाः, राज्ञां मृगयाकाले, अश्वसमुदयं जालं, च गृहीत्वा अग्रे अग्रे प्राचलन्।

डोम्बानाम् विवाहसम्बन्धः केवलं स्वजातावेव न समजनि अपितु उच्चकुले-ष्वपि बभूव। रंगस्य उभे अपि कन्ये, गायननृत्यमुग्धस्य राज्ञः प्रासादं प्रापतुः। रागान्धेन नृपतिना एका च कन्या महादेवी-पदे प्रतिष्ठापिता।

---

(5) 5–170, 75, 80, 81, 4–620, 439।

(6) 4–475, 66, 182, 5–354, 59, 60, 62। (7) 5–363, 64,

डोम्बा भूषणप्रियाः आसन् । हारकंकणकेयूर-कटकादिभिरलंकारैरते शृंगारं चक्रुः । सामान्यजनेषु ते न खलु सम्मानं प्रापुः । तेषामुच्छिष्टभोगिनः अशुचित्वं ययुः ।[8]

(4) **द्रविड़-जातिः** – साम्प्रतं दक्षिणभारते, प्रसिद्धा द्रविडजातिः तस्मिन् समये अपि विख्याता आसीत् । द्रविड़देशोत्पन्ना एव नरा द्राविड़ा उच्यन्ते स्म । "**द्राविड़ो देशोऽभिजनः अस्येति । अण् ते**", इति तत्व्युत्पतिरस्ति, कोषेषु पंचद्रविड़ा निगदिताः सन्ति ते च "**कर्णाटश्चैव तेलंगा गुज्जरा राष्ट्रवासिनः । आन्ध्राश्च द्राविडाः पंच विन्ध्यदक्षिणवासिनः** ।। साम्प्रतं तु केवलं मद्रासप्रान्तस्था एव द्रविडा कथ्यन्ते । समस्ते अपि भारतवर्षे ते प्रसृता अभूवन् कश्मीरेष्वपि महानासीतेषां प्रभावः । द्राविड़ा ब्राह्मणा जनानां सम्मानभाजनानि बभूवुः । कश्मीर-राजस्य छत्रछायायां तैरत्यन्तसम्मानोऽधिगतः । भूपास्तेभ्यो भूमिदानं विधाय कश्मीर-मंडलोपनिवेशिनः तानकार्षुः ।

द्रविड़ा मान्त्रिककार्यकुशला आसन्, मन्त्रशक्ति ते अजानन् । आश्चर्योत्पादिका अचिन्त्याश्च खलु आसन् शक्तयस्तेषां मंत्रेषु, मंत्रबलेन ते मान्त्रिका द्रविड़ा बाणैः सरोवरजलमशोषयन् तच्छोषयित्वा च मानवाकृतीन् नैकसर्पान् ते उत्पादयामासुः । मंत्रबलेनैवोरगान् ते वशीचक्रः । तद्बलेननैव शुष्कं सरः सजलमकार्षुः । तेषामिन्द्रजालपरितुष्टा नृपास्तेभ्यः पुरस्कारे प्रभूतं द्रविणं ददुः । इन्द्रजालेनैव प्राधान्येन ते वृत्तिं प्रापुः । दिव्याकृतीन् नागेन्द्रान् मरुत्थले नीत्वा ते विक्रयमकार्षुः अर्थलाभाय ।[9]

(5) **चंडाल-जातिः**— चण्डालशब्दः राजतरंगिण्यां नैकस्थलेषु वर्तते । कस्तस्य शब्दस्याभिप्रायः इति कुत्रापि नोल्लिखितम् । शब्दकल्पद्रुमे चंडाल-विषये इत्थं निरूपणमस्ति—"**चण्डते कुप्यतीति । चडिकोपे पतिचण्डिभ्यामालच् । उणां 1–116 इत्यालच् । यद्वा चण्डं विकटमलंकारो यस्य इत्युज्वलदत्तः वर्णसंकर-जातिविशेषः-चांडाल इति भाषा । स तु ब्राह्मणीगर्भे शुद्रौरसाज्जातः इतिपराशरपद्धतिः । तत्पर्यायः मातंगः निषादः श्वपचः, जनङ्गमः, जलंगमः** "इति । रामायणे चाण्डालानामाकृतिरित्थं वर्णिता ।।

अथ रात्र्यां व्यतीतायां तस्यां राजा बभूव ह ।
चण्डालदर्शनो राम । सद्य एव दुराकृतिः ।।
नीलपीताम्बरधरो रक्ताम्बर-कृतोत्तरः ।
संरब्ध-ताम्र-घोराक्षः करालो हरिपिंगलः ।।

---

66, 71, 72, 74, 80, 81 । (8) 5–383, 87, 90 से 93, 95, 59, 73, 80, 89, 96, 6–69, 80, 89, 96, 6–89, 84, 182 । (9) श० क० द्रु०

अनेन प्रतीयते यत् चंडाला घोराकृतयो भवन्ति। तत्र रामायणे सा जातिः तिरस्करणीया हीना. अपवित्रा च निगदितास्ति। रजरंगगिण्यां चतुर्थतरंगे सर्वप्रथमं चण्डाल-शब्दः समायाति। "**श्रीदेवीग्रामचंडाल**"—इत्यादि श्लोकस्य टिप्पण्यां स्टीन-महोदयो लिलेख यत् चांडालपदेन, नीचा. दासकर्मकर्त्री जातिरभिप्रेतास्ति।

चाण्डालाः नक्तं यामिककर्म चक्रुः। तत्कर्म कुर्वन्तस्ते हस्ते असिं दधुः। तत्समीपे च कुक्कुरा अभवन्। डौम्बवत् ते अपि अपवित्रा अस्पृश्याश्चासन्। तत्संपर्कदूषिताः पदार्थाः अग्निना शोध्यन्ते स्म। चौरवत् ते लुंठनकर्मनिरता अभूवन्। अध्वनि अध्वनीनानां ते वित्तमपाहरन्। कम्बलेश्वरग्रामपथि गच्छन्तमुच्चलं लुण्ठनाय शस्त्रधारिणः चण्डाला सज्जा अजायन्त।

चंडाला निसर्गतः कलहप्रिया बभूवुः। अन्येषां हत्यादिकार्ये, तत्परास्ते दृश्यन्ते। सङ्घेन प्रेरितास्ते। उच्चलहत्यां चक्रुः। चिह्नविशेषं धारयित्वा ते इतस्ततो बभ्रमुः।

चंडालाः राजसेवायामपि संलग्ना दृष्टिपथमायान्ति। प्रासादेषु प्रायेण द्वारपाल कार्यम् ते अकार्षुः। वधकर्मणि अपि ते राजभिः नियुज्यन्ते स्म।[10]

**(6) भौट्ट-जातिः**—वर्तमान-काले भूटानदेशनिवासिनो भूटानी जना एव राजतरंगिण्यामुल्लिखिता भौटा विद्यन्ते। त एव भुट्टा अपि निगदिताः सन्ति। बाहुल्येन ते भारतवर्षे विशेषतश्च कश्मीरेषु न्यवसन्। भौट्टा अशुचिकर्माणि चक्रुः। धर्मनाशे ते सर्वदोद्यता अतिष्ठन्। भौट्टानां मुखं पाण्डुरं वर्णितम्। वनौकसस्ते समभवन्। वानरवदासीत् तत्स्वभावः। निसर्गत एव क्रुद्धास्ते वर्णिताः।

भौट्टानां देशः भुट्टराष्ट्रं निगदितमस्ति। स्टीन-महोदयमते तिब्बतदेशीया एव भौटा अभूवन्। तन्न समीचीनं प्रतिभाति, यतो हि नामसाम्यं भूटानी-भूटादिशब्दं भौट्टस्यापभ्रंशं सूचयति। स्टीनमते तेषां निवासः कश्मीराणां पूर्वभागे पूर्वोत्तरभागे च आसीत् यत्र सम्प्रति लद्दाख-निवासिनो विद्यन्ते अन्यत्रापि तन्मतस्य पुष्टिर्जायते।

युद्धकर्मणि ते कुशला आसन्। ललितादित्येन समं तेषां युद्धं कविना वर्णितमस्ति। यत्र ते वारद्वयं पराजयं प्रापुः। मध्यभारतस्य भूपतेः यशोवर्मणः साहाय्येन ललितादित्यो भौट्टदेशस्य सर्वानपि मार्गान् जज्ञौ।

कल्हणस्तेषां प्रदेशविषये स्थितिविषये तु स्पष्टं न किंचिल्लिलेख, किन्तु श्रीवरस्य काव्ये वयं "**सूक्ष्म-वृहत्भुट्ट-देशौ**" इति पदं प्राप्नुमः, येन तेषां देशद्वयस्य कल्पना कृता विज्ञैः, कल्हणः अपि भौट्टराष्ट्रपदेन संभवतस्तत्संकेतं चिकीर्षति।[11]

---

भा० 21 8–2444, 4–594 99 600 से 604 4–591 92 93। (10) श०क०द्रु०भा० 1, 4–475, टि० 6–77, 78, 79, 7–309, 6–192, 8–251, 52, 304 से 19, 1104। (11) 1–168, 312 तथा टि०, 8–2887 स्टी० भा० 1 पृ० 91 भा० 2 पृ० 435, श्रीवर 1–71. 82. 3–12.401. 45।

(7) **शकजातिः**— शकजातिः वैदेशिकी ग्रासीत्, किन्तु भारतवर्षे ग्रस्याः बहवो जना न्यवसन्। पुराणेषु प्रतिपादितं यत् सगरो नाम नृपतिः शकानामर्धम् शिरो मुंडयित्वा तान् वेदबाह्यान् चकार। कल्हणो न तद्विषये विस्तारेण किंचित् लिखति।

तेन विक्रमादित्यस्तेषां शत्रुरभिहितः "**शकारिः विक्रमादित्यः**" स च शकानां विनाशं विधाय म्लेच्छनाशायावतरिष्यतः हरेः कार्यभारं लघूचकार, राजतरंगिण्यां शका म्लेच्छा निगदिताः ते च म्लेच्छा मांसभक्षका ग्राचारहीनाश्च निगदितास्तस्मात् शका ग्रपि मांसभक्षकाः सदाचार-शून्याश्चानुमातुं शक्यन्ते। प्रतीयते यदस्या जातेः विस्तारः सर्वप्रदेशेषु नाभूत्।[12]

(8) **दार्व-जातिः**–दार्वजातेरुल्लेखः पृथक् दार्वशब्दरूपे तु न दृश्यते राजतरंगिण्यां किन्तु दार्वाभिसारप्रदेशस्योल्लेखेन दार्वजातिसत्ता स्पष्टा जायते। दार्वाभिसारः वितस्ताचन्द्रभागानद्योर्मध्ये ग्रासीत्। शंकरवर्मणा तत्राक्रमणम् कृतम्। नरवाहनस्तस्याधिपतिरासीत्। तस्यैव पिता भारद्वाजो नृपो नरः ग्रभूत्। ग्रस्यां जातौ भगवता मैत्रीभावना नोत्पादितेति कविमतमस्ति। दार्वाभिसारे रत्नादेव्या स्वपति-सौन्दर्यतुल्यं स्वनामांकपुरं च कृतम्। ग्रस्या जात्याः स्पष्टमुल्लेखः वृहत्संहितायामास्ते।[13]

(9) **लवन्यः**—पुरुषाणां वर्गविशेष ग्रासीत्। राजतरंगिण्याः सप्तमाष्टमतरंगयोः वर्णितेषु ग्रान्तरिककलहेषु तैः लवन्यैः विशेषं भागो गृहीतः। प्रतीयते च तस्मिन् समये तैः कश्मीराणां ग्रामीणजनतासु स्वीयः पृथक् जातीयवर्गः निर्मितः ग्रभूत्। गतशताब्दीं यावत् प्रचलितः लूनशब्दः लवनस्यैवापभ्रंशरूप ग्रासीत्। कल्हणकृतेः नैकपद्येषु समूहरूपे, व्यक्तिरूपे, च लवन्यानां प्राप्यते उल्लेखः किन्तु क्वापि तदुत्पत्तिविषये किंचिदपि न ज्ञायते। एतावन्मात्रन्तावदवगम्यते यत् तेषु कैश्चित् भूस्वामिरूपे प्रभावकारिण्यवस्था लब्धासीत्। यत्र वयं लवन्यान् मडवराज्ये उपद्रवनिरतान् पश्यामः तत्र ते पोनः पुन्येन डामरा निगदिताः सन्ति। तेषां व्यवसायः प्रथाश्च यवनकृषकेभ्यो भिन्ना नासन्। समस्ते कश्मीरमंडले ते विस्तृता ग्रभूवन्। जोनराज-समयं यावत् तैः पूर्वतः ग्रप्यधिकं महत्वपूर्णम् स्थानं लब्धमासीत्। श्रीवरः सकृदेव तेषामुल्लेखमकार्षीत्।

कश्मीरेषु विद्रोहप्रसारणे महत्स्थानमभूत् तेषां लवन्यानाम्। हर्षराज्ये डामराणामुपद्रवस्योल्लेख ग्रास्ते, तेषां समूलमुच्छेदाय हर्षेण ग्रादिष्टः मण्डलेश्वरः ग्रानन्दः, मडवराज्यन्तः स्थितस्य होलडाप्रदेशस्य बहून् डामरानास्कन्द्य ग्रवधीत्। एते वे डामराः लवन्याः कथिताः सन्ति। ते वै उद्धकुलन्तलाः, विकटवेशधारि-

---

(12) 2–6, 3–128। (13) 1–180, 4–712, 5–141, 209, 7–282, 8–

णश्चासन् । आनन्देन तेष्वनेके शूलमारोपिताः । तेन च शूलारोपितामेकां लवन्यवधूं वीक्ष्य मडवराज्यस्थाः सर्वे अपि इतरे लवन्याः सर्वदिक्षु पलायितवन्तः ।

आनन्दः उपहाररूपे अनेकलावन्यमुंडमालां हर्ष—समीपं प्रेषयामास । अन्ये जना अपि लवन्यमुंडमालां निर्मीय ताभिः तोरणद्वारमलंकुर्वन्ति स्म । लवन्यविनाशकः क्रूरकर्मापि जनानां स्तुत्योऽभवत् । प्रायेणाक्रमणोद्यता एवते दृष्टिपथमायान्ति । कमपि दुर्बलं वीक्ष्य तमवास्कन्दन्त, पृष्टतः आगत्य ते कृतसंदोहा आक्रमणं चक्रुः । तत्प्रकृतेः भूपतयोऽप्यबिभ्यन् ।

सुस्सलस्य विद्रोही सेनापतिः तिलकः बद्धशिविरः विजयेश्वरे अतिष्ठत्, तथापि तन्मनस्यपि लावन्यानामक्रमणभयमभूत् ।

लवन्यायां विप्लववर्णनं सप्तमाष्टमतरंगयोः स्थाने-स्थाने दृश्यते । तद्विप्लवः तीव्रव्यथादायकः आसीत् । विप्लवप्रसंगे ते गृहादिदहनमकार्षुः । पराजिताश्च सन्तः पलायने मंगलममन्यन्त निसर्गतस्ते कस्यापि वचने विश्वसुः । विश्वासं प्रापिताः ते विद्रोहिणां सहयोगाय तत्परा अजायन्त । सुस्सले षण्मासानन्तरं पुनः राजधान्यां प्रविष्टे सति, तद्विरोधी भिक्षुः पलायितः स च पुनः क्षिप्तिकातटे लवन्यैः सह दृश्यते । सुस्सलः सपृथ्वीहरः पारेनंद गत्वा मार्गे बहुभिः लवन्यैरनुकृतश्च प्रत्यागतः । सोहार्दे प्रदर्शिते लवन्या अपि सोहार्दं प्रादर्शयन्, क्षिप्तिकातटे, पृथ्वीहरेण सह युद्धे राजा सुस्सलः-लवन्यानामपकारं नाकार्षीत्, ते अपि च तदप्रियं नाचरन् । राजभक्ता लवन्या भर्तृश्मश्रून् निगृह्य नृपान्तिकमानिन्यिरे, जय्यको लवन्यो विसलाटान्तरात् जयश्री-वकादीन् नृपान्तिकमानयत् । हत्यादि-कार्ये महती रुचिरासीत् लवन्यानाम् । ग्रामीणान् निहत्य, विलुण्ठ्य च ते दुर्भिक्षस्थितिमुत्पादयन्ति स्म । सुस्सलो नृपतिः तैरेव निहतः तेन क्रुद्धः जयसिंहः सर्वान् लवन्यान् भिक्षाचरं च जघान ।

लवन्यानां भोजनं मांसमासीत् । गोमांसमपि ते रुच्या बुभुजिरे । अरघंट-घरट्टादिकं चालयित्वा ते स्वजठर-वृत्ति-मकार्षुः लवन्यानां निवासस्थलं प्रायेण लोहराचले मडवराज्ये आसीत् । नदी तीरेषु अभूवन् तेषां गृहाणि ।[14]

**तुरुष्क-जातिः—परिचयः**—तुरुष्कजातिः म्लेच्छजातेरेवैका उपजातिरासीत् इति म्लेच्छजाति—प्रसंगे सम्यक् प्रतिपादितं मया । तुरुष्का एव लोके सम्प्रति "तुर्क" इति प्रसिद्धाः खलु तैश्च गान्धारदेशेषु शासनमक्रियत स्टीनमते ।

शब्दकल्पद्रुमे शब्दरत्नावल्याञ्च तुरुष्कशब्दपर्यायेषु यवनोऽप्यस्ति । आदर्श—हिन्दी—संस्कृतकोषे तुरुष्कस्यार्थः "तुरक" इति कृतः तुरकशब्दपर्यायेषु च तुरक्कः, तुरुष्कः, यवनः, टर्की-तुर्किस्तान-निवासिनः इति वर्तन्ते । मेदिनीकोषे तुरुष्को

---

1531, 2440 । (14) 7–1171, 1227 से 41, 1378, 5–284 टि०, 8-747 76, 910, 55, 56, 1010, 32, 1268, 1541, 2538, 3447, 1541

म्लेच्छजातिविशेषो भणितः। हेमचन्द्रः लिखति तुरुष्कशब्दार्थे यत् '**तुरक्इति भाषा**'। **तुरकस्थान इति पारस्य भाषा तत्पर्यायः शाखिः**। विश्वकोषे तुरुष्कः श्रीवासवृक्ष इति लिखितम्। अश्ववैद्यके तुरुष्कः घोटक-विशेष इति लिखितः खलु—'**तुरुष्कः कीर्तितो वाजी स्थूलवक्रमुखश्च यः**" राजनिर्घण्टे "यवन" शब्दपर्यायेषु गोधूमगूर्जरतृणं तुरुष्कश्चेति शब्दाः सन्ति। शब्दरत्नावल्यां यवनशब्द-व्युत्पत्तौ-यौति मिश्रीभवतीति "यु सुमुरुवृन्यो युच्" इति उणादिसूत्रेण (युच्) जाति-विशेष इति प्रतिपादितम्। मत्स्यपुराणे यवनाः म्लेच्छजातिषु परिगणिताः सन्ति।

रघुनन्दनभट्टाचार्यः यवनशब्दविषये लिलेख यत् सगरराजेनैषां सर्वशिरोमुंडनं सर्वधर्मराहित्यं, च कृतं, ते चात्मधर्मपरित्यागान्म्लेच्छत्वं ययुरिति विष्णुपुराणोक्तत्वात् यवनः मोसलमानेगंरेजोभयजातिवाचकः। यवनशब्दश्च वर्गतृतीयादिरिति।[15]

इत्थं कोषैः ज्ञायते यत् तुरुष्कः यवनः तुर्कः मुसलमानः सर्वे अपि प्रायेण पर्यायवाचकाः खलुः म्लेच्छजातौ च परिगण्यन्त इति। किन्तु मम मते तुरुष्कपदेन केवलं तुर्कजनाः तुर्किस्तानिवासिनो वा मन्तव्याः। यवन-तुरुष्काणां भिन्नं-भिन्नं कार्यम् तत् चरित्रं व्यवहारश्च तत्भिन्नत्वं प्रतिपादयति।

तुरुष्काणां मुखं धूम्रवर्णं भवतीति मेदिनी-कोषे प्रतिपादितम्। ते स्वबाहून् पश्चात् दधुः, अर्धमुंडितमुंडास्ते बभूवुः। विष्णुपुराणे तेषां सर्वधर्मराहित्यं प्रतिपादितम्। निसर्ग-क्रूरास्ते अभवन्, "**स्ववृत्तये च क्रूरतामचरन्**। कन्यकानामपहरणं विधाय तद्विक्रयमकार्षुः। **क्रीतास्तस्य तुरुष्केभ्यो**।"

**तुरुष्कराजनीतिः रणकौशलञ्च**—तुरुष्का राजकर्माण्यप्यकार्षिषुः नैके तेषां नरपतयो नयनगोचरतामायान्ति। हुष्क-जुष्क-कनिष्काख्यास्त्रयो राजानस्तुरुष्कान्वयोद्भूता एव अभण्यन्त, तैश्च स्वनाम्ना हुष्कपुरजुष्कपुरकनिष्कपुरेति त्रीणि नगराणि विनिर्मितानि। पुण्यचरितास्ते पार्थिवाः शुष्कलेत्रादिक्षेत्रेषु मठचैत्यादि चक्रिरे। निर्मलधीः जुष्कः जुष्कपुरविहारं जयस्वामिपुरं च निर्ममौ। अन्येषामपि बहूनां तुरुष्कनरनाथानां स्पष्टं संकेतो वरीवर्ति राजतरंगिण्याम्। **दरतुरुष्काधिपोः** सप्तमतरंगे एकस्मिन्नेव श्लोके अनेकेषां तुरुष्काधीशानामप्युल्लेखो दरीदृश्यते। तुरुष्काः समरनिपुणयोधारः अवर्तन्त। विश्वोत्पाटनपटवस्ते बभूवुः। तेषां विक्रमकर्माणि विख्यातान्यासन्, युद्धविधिश्च तेषां विश्वविश्रुता बभूव। तस्याश्च ज्ञानायान्यैरपि प्रयासः क्रियते स्म। कपटाहवप्रवीणा ननु ते अभिहिताः। तुरुष्कानीकनायकाः प्रायेण

---

श्रीवर 1–282, 7–1171, 1228। वृत्तये यैः क्रौर्यदिन्यन्न शिक्षितम्। (15) 8–885, 87, 2843 स्टी०रा० इंडैक्स पृ० 546. 4–140 से 53 टि०,श०द्रु०भा० 2 पृ० 634, 35 तदेव भा० 4 पृ० 24 आ०हि० सं० को० पृ० 257, 60, 4–179, 8–3346 7–520। (16) श०क०द्रु० भा० 4 पृ० 24, 1–168 से 70,

छलसमरविशारदा अभूवन् । बलिष्ठानां तुरुष्कभटानां तुलना वनवराहेण सममकारि कविना । "**दरतुरुष्काधिपोर्यः केसरिवराहयोः**"—राजतरंगिण्यां तुरुष्काः प्रायः युध्यन्त एव वर्णिता विद्यन्ते । पंचमतरंगे दरतुरुष्कयुद्धं वर्णितमस्ति तत्र च शाहिवंशोद्भवो लल्लियः उभयोरपि नृपयोर्मध्ये तथा पतितो यथा हिमगिरिविन्ध्ययोर्मध्ये आर्यावर्तः । सप्तमतरंगे हम्मीरस्य सैनापत्ये ननु तुरुष्कसैनिकाः संदृश्यन्ते समर-संलग्ना । तत्र च तुरुष्कबलेन तुंगकटको भंगमाययौ । पराजितश्च तुंगनरेशस्स्वदेशं प्रविवेश । अथान्ये बहवस्तुंगोपजीविनः समरांगणे आजग्मुः ते अपि च तुंगवत् पलायाम्बभूवुः । अन्ततश्च तुरुष्कानीकनीपतिः वीरहम्मीरो विजयश्रियमालिलिंग । तुरुष्कास्तुरंगायोधननिपुणा अभूवन् तुरंगमांश्चारुह्य समरांगणे ययुः । तुरुष्काः शस्त्रैः सह पाशमप्यनयन् युद्धे अरिनिग्रहाय, निगृह्य च तं पाशेनाकर्षन् । कदाचित्तु भयावहशत्रुत्रस्तानां तेषां करेभ्यस्ते पाशा अस्खलन् ।

तुरुष्कयोधानामाक्रमणोदन्तेन, उपद्रववृत्तान्तेन, विद्रोहवृत्तेनैव वा सपत्नमनस्सु भीतिरुत्पद्यते स्म । विद्रवश्चाभूदरिदले । हर्षस्य दण्डनायकस्तुरुष्कास्कन्दजन्यां विभीषिकां हर्षाय ददौ, लुप्तधैर्यश्च स नृपःससैन्यो निश्चक्राम नगरात्, साध्वसाच्चाध्वन्येव विपुलकोषनिधिं परितत्याज । तुरुष्काच्छादितं मण्डलं वीक्ष्य लोकाः कृत्स्नामपि भुवं म्लेच्छादितामिवामन्यन्त । अष्टमतरंगे भिक्षाचरसेनायां तुरुष्का प्रधननिरताः समवलोक्यन्ते सुस्सलेन सह विरोधे । पाशहस्ताः घोटकारूढास्ते सुस्सलविरोधिना सोमपालेन विम्व-सहायकाय किलानीताः । सल्लारे च ते प्रतिज्ञामकार्षुर्यत् पाशेनाकृष्य कालकवलितं करिष्यामः सुस्सलमिति । अथविम्बसुस्सलसैन्ययोर्दारुणो रणस्समजनि, अरिदलदलनदोर्दण्डश्च सुस्सलः पाशहस्तान् तुरुष्कान् कालपाशैर्बबन्ध । सोमपालः अपि तुरुष्कैस्समं यमलोकं ययौ । विम्बानुयायिनश्चराजशरणं जग्मुः[16] ।

**तुरुष्काणामुदरवृत्तिः**—नानादिक्संभवाः हृतकन्यका आनीय ते तुरुष्काः वणिग्भ्यस्ता विक्रीणन्ति स्म । प्राप्तधनैश्च निजजठरपूर्तिम् चक्रुः । राज्ञां सेवावृत्यापि पुष्कलवित्तं ते प्रापुः । काश्मीरनृपतिहर्षः सेवाकर्मनियुक्तान् शतशस्तुरुष्कान् धनादिभिरपोषयत् । शिल्पेनापि तुरुष्का उदरपूर्तिमकार्षिषुः । एकस्मिन् श्लोके एकस्तुरुष्कदेशजः शिल्पी वर्णितोऽस्ति, मन्दिरेषु छत्ररचनाकलानिपुणा ननु तुरुष्का अभूवन् । ते ताम्रे कांचनारोपणकलामपि अविदन् किन्तु तां कलां गुप्तामेव न्यदधुः ।

सहस्रशस्तुरुष्काः सैनिककार्याणि कुर्वन्तो नेत्रपथमवतरन्ति स्वनायकेभ्यश्च धनमाप्नुवन्निति, निस्संदेहमनुमीयते ।

इत्थं च कन्यानां क्रयविक्रयः, राज्ञां सेवा, शिल्पकला, सैन्यवृत्तिश्चेति बहूनि जठरपूर्तिसाधानान्यासन् तुरुष्काणाम् ।

**तुरुष्काणां भोजनं देशश्च**—तुरुष्कभोज्यं किमभूदिति स्पष्टमुल्लेखे मौनमाकलयति कविः किन्तु सप्तमतरंगस्यैकस्मिन् पद्ये ग्रामशूकरोल्लेखो वरीवर्ति । तत्र

तुरुष्कपरिवृतो दुर्बुद्धिर्हर्षः जीवनावधि ग्राम्यशूकरान् बुभुजे। प्रसङ्गेनानेन राजनि तुरुष्कप्रभावमनायासेनैवाकलय्य तुरुष्कभोजनं शूकरमांसमभूदिति मन्मतमस्ति।

म्लेच्छजातिप्रसंगे तुरुष्का म्लेच्छा एवासन् नापरे इति मया प्रतिपादितं, म्लेच्छश्च गोमांसभक्षको भणितस्तदनेन तुरुष्काणां गोमांसभक्षणमपि संसिद्धम्।

राजतरंगिण्यां केवलं सकृदेव "तुरुष्कदेश" इत्युल्लिखितं कल्हणेन—"**तुरुष्कदेशजः शिल्पी राज्ञोऽभ्यर्णमाययौ**" 6–35 स्टीनमते तुर्किस्तान् तेषां देश उच्यते। कोषग्रन्थैरपि तदेव प्रमाणीभवति। किंच प्राग्वर्णितेषु हुष्कपुरजुष्कपुरकनिष्कपुरेष्वपि तुरुष्काणामवस्थितिरसंशयमनुमीयते।

यद्यपि प्रायेण विग्रहप्रिया अभवन् तुरुष्कास्तथापि केचित् पुण्याचारा अप्यभूवन्। हुष्कजुष्ककनिष्काख्यास्त्रयोऽपि पार्थिवाः पुण्यशालिनो बभूवुः जनकल्याणाय च चैत्यविहारादीन् ते चक्रुः[17]।

**(10) म्लेच्छजातिः**—राजतरंगिण्यां चित्रिते सहस्रद्वयवर्षाणां काले भारतवर्षे म्लेच्छाःसर्वत्र व्याप्ता विलोक्यन्ते। कश्मीरमंडलन्तु सर्वथा म्लेच्छाच्छादितमभूत्, अशोकः म्लेच्छाच्छादितं स्वदेशं वीक्ष्य तन्नाशाय, भूतेशमधिकृत्य तपश्चकार। स च तस्मै तनयमदात्। जलौकराज्ये अपि वसुधा म्लेच्छजनाकीर्णाभूत्। स च भूपस्तान् समूलं चिच्छेद। यत्र च स तान् उच्भटितवान् तत्स्थानं कल्हणसमये अपि उच्चभटडिम्बं इति प्रसिद्धमासीत्। उत्पलाक्ष-हिरण्याक्ष-हिरण्यकुल-वसुकुल-मिहिरकुल-समये अपि कश्मीरमंडलं म्लेच्छाच्छादितमासीत्। मिहिरकुलः दुष्कर्मकर्तॄन् म्लेच्छादीन् उच्छिद्य स्वप्रदेशे पुण्याचारप्रवर्तनं चकार। आर्यांश्च संस्थापितवान्।

**परिचयः**—म्लेच्छ-शब्दस्य पौनः पुन्येन दर्शनं भवति राजतरंगिण्यां, किन्तु तदर्थः न स्फुटो जायते। कोषानुसारं म्लेच्छशब्दः म्लेच्छधातोरच्प्रत्यये निष्पद्यते। **म्लेच्छयति म्लेच्छति वा, असंस्कृतं वदतीति म्लेच्छः** इति तस्य व्युत्पत्तिरस्ति पामरभेदः पापरक्तः अपभाषणं, इति तत्पर्यायाः, हरिवंशपुराणे म्लेच्छादीनां सर्वधर्मराहित्यमुक्तं ननु। विष्णुपुराणे शकयवनादयः म्लेच्छा एवाभिहिताः। बोधायनो ब्रवीति तथा कृतान् यवनादीन् उपक्रम्य ते चात्मधर्मपरित्यागात् म्लेच्छत्वं ययुः। प्रायश्चिततत्वे गोमांसभक्षकः प्रलापी सदाचारविरहितश्च म्लेच्छो निगदितः—

गोमांसखादको यश्च विरुद्धं बहुभाषते।
सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते॥

श्रीभागवते वेदबहिष्कृता जना म्लेच्छाःकथिताः। महाभारते ते म्लेच्छा बहवः अभिहिताः—

---

5–152, 55, 7–51, 56, 57, 59, 64, 70, 118, 1158, 8–886, 87, 919, 2843, 923। (17) 7–520, 28, 29, 58, 1149, 149, 1–168,

पौण्ड्रान् किरातान् यवनान्, सिंहलान् वर्व्वरान् खशान् ।
चिबुकांश्च पुलिंदांश्च चीनान् हूणान् सकेरलान्–ससर्ज
फेनतः गौर्म्लेच्छान् बहुविधानपि सा वसिष्ठस्य धेनुः ।।

अमरकोषे म्लेच्छमुखं ताम्रं कथितमस्ति, गरुड़पुराणे अपि तदेवोल्लिखितम् । अनेन वर्णनेन निश्चीयते यत् विदेशस्य सर्वा यवनादयो जातयः भारते म्लेच्छा इति न्यगद्यन्त । चरित्रशून्याश्चासन् ताः, ब्राह्मणैः बहिष्कृताश्च । ये चान्ये भारतीया अपि सदाचारं विहाय न्यवसन् ते अपि म्लेच्छसंज्ञां प्रापुः । इमे एव विचारा राजतरंगिण्यां प्राप्यन्ते[18] ।

**म्लेच्छानां स्वभावः**—म्लेच्छा प्रकृत्या क्रुरा अभवन् । सर्वतो वसुधामाच्छाद्य ते क्रूर-कर्माणि चक्रुः । कमपि देशमाक्रम्य धर्मनाशं ते अकार्षुः । तदुच्छेदाय च महत्तपस्तप्यते स्म । भगवान् शिवश्चापि तन्नाशायावतारं गृहीतुकामः अभूत् । "**म्लेच्छोच्छेदाय वसुधां हरेरवतरिष्यतः**" 3-128, तपसा परितुष्टः असौ देवः तेषां नाशाय तनयं ददौ । ललितादित्यापरनाम्नो वज्रादित्य-नृपतेः कार्याणां तुलना म्लेच्छकार्यैः सह कविना कृतास्ति । वज्रादित्यः, क्रूरचरितः, दुर्वासा इव कुपितधीः प्रजापीडकः, लुब्धः, दुराचारी, पितृणां निधेरपहर्ता, रागान्धः, बहुभार्यश्चाभूत् । दासविक्रयकार्यम् कुर्वन् स नृपतिः निजराज्ये म्लेच्छोचितां वृत्ति प्रावर्तयत् । वज्रादित्यस्यानेन वर्णनेन म्लेच्छानामपि स्वभावः चरितं कार्यम् च सम्यगवगम्यते । ते अपि निसर्गक्रूराः, दुष्टचरिताः दुराचारिणः, कुपितमतयः, दस्युकर्मकर्तारः, विलासिनः, स्त्री-धनादीनामपहर्तारोऽभवन् । पुरुषाणां क्रय-विक्रयं विधाय ते स्वोदरवृत्तिं व्यदधुः अरघट्टघरट्टादि चालनमपि कृत्वा जठरपूर्तिम् चक्रुः । म्लेच्छभूमिषु गोमांसं सुलभमासीत् तदेव च म्लेच्छानां प्रियं भोज्यमभूत् । अमरकोषे उद्धृतप्रायश्चितत्ववचने अपि, तेषां भोज्यं गोमांसमभिहितम् । शब्दरत्नावल्यां यावत्कः, त्रिकाण्डकोषे च गोधूमः तद्भोजनं कथितम् । लशुनमपि म्लेच्छानां प्रियं खाद्यमासीत् । भावप्रकाशेनापि तत्पुष्टिर्जायते—

लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् ।
अरिष्टो म्लेच्छकन्दश्च पवनेष्टो रसोनकः[19] ।।

**म्लेच्छानां रणकौशलम्**—पदे-पदे म्लेच्छा युद्धोद्यता युध्यन्तो वा दरीदृश्यन्ते । जगदुच्छेदकुशलास्ते भणिताः । रुद्रपाल-ब्रह्मराजप्रसंगे रुद्रपालतिरस्कृतः ब्रह्मराजः सप्तम्लेच्छभूपान् तत्सैन्यं च गृहीत्वा कश्मीरेष्वाक्रमणाधिया विनिर्ययौ । क्षीरपृष्ठस्थाने रुद्रपालस्तत्समक्षमाययौ संग्रामाय । ब्रह्मराजे म्लेच्छसेनायां च तुमुलं जन्यमजनि । अस्त्रसंघर्षाच्चाग्निः प्राज्वलत् । तस्मिन्नाहवे केचित् म्लेच्छराजानः

70। (18) श०कं०द्रु०भा० 2, 1–107,115,16,289,332,13 । (19) 1–107.

वधं, अपरे च बन्धनं प्रपेदिरे। अरिदले आक्रमणोत्सुका म्लेच्छाः तुरगप्रयोगमकार्षुः प्रधावन्तः, दिशो रुन्धन्तः सपत्नशिविरं परितः परिवारयन्ति स्म। म्लेच्छजनाकीर्ण-सेनायाः प्रयाणकाले जगति क्षोभः अभूत्। सेनापतयश्च महीं हस्तगताभिवामन्यन्त। वाजिभिः प्रयान्ती म्लेच्छसेना, लोकं तर्जयन्तीव स्कन्धावारं, निर्बबन्ध। दुर्जेयां म्लेच्छवाहिनीं लब्ध्वा सेनापतिः सपत्नं कालकवलितमिवामन्यत। युद्धात् पूर्वम् काश्मीरिक-खश-म्लेच्छादीनां योधानां संदोहः एकत्रितः अभवत्[20]।

**नैक-जातयः**—म्लेच्छपदेन नैकजातयो गृह्यन्ते। "**म्लेच्छैः संच्छादिते देशे**" इत्यत्र ,'**स रुद्धवसुधान् म्लेच्छान्**" इत्यादौ च म्लेच्छपदेन ग्रीकवासिनः गृहीताः सन्ति स्टीनमते। अथ "**म्लेच्छगणाकीर्णे, आक्रान्ते दारदैः भौट्टैः म्लेच्छैः**" इत्यादौ स्टीनमते श्वेत-हूणा वर्णिता वर्तन्ते।

म्लेच्छोच्छोदाय वसुधां हरेरवतरिष्यतः।
शकान् विनाश्य येनादौ कार्यभारो लघूकृतः ॥ 3–128 ॥

अस्मिन् पद्ये म्लेच्छपदेन स्पष्टमेव शकाः गृहीताः सन्ति। तुरुष्का अपि म्लेच्छा अवर्ण्यन्त। भिक्षाचार-प्रेषितयोः बिम्बसोमपालयोरनीकिन्यां तुरुष्का एव प्रायेणासन्। तैस्तुरुष्कैर्जितान् देशान् वीक्ष्य, लोकैः समस्तापि वसुदा म्लेच्छावृतेवावबुध्यत। एतेन तुरुष्का म्लेच्छा एव नापरे इति निश्चितम्। सिन्धुघाटेः मुख्या अपि म्लेच्छा एवाभण्यन्त स्टीनमते। पूर्वमुद्धृतं **पौण्ड्रान् किरातान्**—इत्यादि पद्यमपि म्लेच्छानामनेकत्वं साधयति[21]।

**म्लेच्छानां निवासस्थानम्**—भरतः वर्णाश्रमरहितं देशं म्लेच्छदेशमाह।

चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते।
म्लेच्छदेशः स विज्ञेयः आर्यावर्तस्ततः परम् ॥

कह्लणः तत्स्थानविषये "म्लेच्छभूमिषु" पदेन संकेतं चकार। यत्र गोमांसमधिकं प्राप्यते स्म। सिन्धु-घाट्यामपि ते न्यवसन्[22] ॥

**राज्यकार्याणि**—म्लेच्छा राजनीतौ अपि लब्धप्रवेशाः संलक्ष्यन्ते। बहवस्तेषां भूपतयः अपि दरीदृश्यन्ते। रुद्रपाल-ब्रह्मराजयुद्धे सप्तम्लेच्छभूपालैः ससैन्यैः ब्रह्मराज-सहायता कृता। "**सप्तभिर्म्लेच्छभूपालैः, म्लेच्छराजाः प्रपेदिरे, हिमाद्रिकच्छैर्म्लेच्छेशाः, म्लेच्छराजैश्च बलमूर्जितम्**", म्लेच्छपार्थिवैः इत्यादिपदेषु समरोन्मुखा म्लेच्छनृपतयो दृश्यन्ते।[23]

**(11) तुःखारजातिः**—तुःखाराणां सर्वप्रथममुल्लेखः चतुर्थतरंगे समागतः

---

15, 16, 312, 93 से 97, 7–1232। (20) 8–887, 7–167, 68, 75, 8–2764, 82 से 85। (21) 1–107 टि० 15, 289 टि० 312, 8–884, 283, 99, 2745, 84। (22) 7–1232। (23) 7–167, 75, 8–2764,

यत्र ते अश्वान् परित्यज्य पर्वतश्रेणीं प्रति पलायन्तो दृश्यन्ते। तुःखारा एव राजतरंगिण्यां भुःखारा एव अपि निगदिताः। तेषां **भुःखारदेशः** अपि उल्लिखितः। तत एव समायातश्चंकुणः ललितादित्यनृपतेः साचिव्यं प्राप अपि च **'तुःखारदेशात्'** पदेन पुनः तेषां स्थानं कविना सूचितम् तुःखारदेशपदेनः च तुःखारिस्तान गृह्यते यस्य सत्ता यवनकाले अप्यासीत्।

तुःखारजातिः प्रकृत्या भीरुरासीत्। राज्ञा ललितादित्येन पराजिताः तुःखाराः उन्नतगिरिशृंगेषु पलायितवन्तः। युद्धसमये ते आश्वानां प्रयोगमकार्षुः।

तुःखारा राजसेवानिरता अपि दृष्टिपथमायान्ति। योग्याश्च तेषु राजभिः उच्चपदेषु नियोज्यन्ते स्म। केचित् धर्मपराः धर्मकार्यमकार्षुः। तुःखारश्चंकुणो ललितादित्यस्य महामात्यपदं प्राप्य, स्वमाम्ना चंकुणविहारं निर्ममे यस्यावशेषा मया कश्मीरेषु दृष्टाः 1967 खवीष्टावदे।* एकः स्तूपः अपि तेन निर्मितः नैकजिनमूर्तीश्च स स्थापितवान्। तेन अधिष्ठानान्तरे अपरः अपि स्तूपो विरचितः।

तुःखारा शिक्षामप्यगृह्णन्। गुणोन्नतः चंकुणः रससिद्ध आसीत्। रासायनिकरसेन स्वर्णम् रचयन् ललितादित्यकोषं स पूरितवान्। स वै विविधविद्या-निधानो बभूव। मणिविद्यामपि स आज्ञासीत्। तया च नदीजलमपि विभक्तमकरोत्। मणिनैव च पुनः तज्जलं पूर्ववत्चकार ललितादित्येन समं तस्य संवादा तद्विद्वत्तां द्योतयन्ति।

तुःखारा बौद्धमतानुयायिनः अभूवन्। चंकुणेन परिहासपुरे बौद्धविहारः स्थापितः। प्रसन्नं भूपं स बुद्धप्रतिमां ययाचे। तस्य पांडित्येन प्रभावितश्च पार्थिवः जिनप्रतिमां तस्मै ददौ। तां च चंकुणः स्वविहारे स्थापितवान्[24]।

इमाः आसन् विश्रुताः जातयः राजतरंगिण्यां चित्रिते समाजे। एतदतिरिक्त-मनेकेषां वर्णानामपि वर्तते उल्लेखः,वर्णसंकरात् समुत्पन्नानां कासांचित् अल्पजातीनां, वनवासिनां भिल्लानां (भील इति), खश-निषाद-नाग-प्रभृतीनां च वहवः संकेताः सन्ति। न खलु विद्यते तेषामधिकं महत्त्वं तस्मात् विस्तरशः तेषां वर्णनस्यावश्यकता नास्ति।

## सती-प्रथा यौतुक-प्रथा च

**सती-प्रथा**—भारतवर्षे सती प्रथा अति प्राचीनकालात् प्रवर्तते। अद्य तावत् सा प्रथा लुप्तप्राया एवास्ति। नारी पतिं बिना स्वजीवनं व्यर्थं मनुते स्म। एकाकिनी सा स्वस्था असुरक्षां मत्वा सतीत्वरक्षणाय अग्नौ तनुं भस्मसात् अकरोत्। उच्चले मृते तस्य पत्नी जयमती सती बभूव, सुस्सले दिवंगते तस्य देवलेखा तरललेखा

---

84, 2899। (24) 4–166 टि० 211, 15 टि० 46, 47 49 50 से 52, 61 62। * विलोक्यतां चित्रम्।

जज्जला राजलक्ष्मीः चेति चतस्रः राज्ञः प्रासादे चितां निर्माय स्वशरीराणि भस्मसात् चक्रुः । एतादृशीनां सतीनां शतशः दृष्टान्ताः सन्ति । चितारोहण-समये बहवः जनाः समुपस्थिता अभवन् सत्याः दुःखे च दुखं प्रदर्शितवन्तः ।क

**यौतुक-प्रथा**—भारतीय-समाजे यौतुक-प्रथा प्राचीनकालात् वर्तते । कल्हणस्य भारते अपि सा विद्यमानाभवत् । विवाहसमये योतुके महती धनराशिरयाच्यत । यौतुकाभावे कदाचित् विवाहा अपि नैवाभूवन् । कदाचित् तु कन्या तत्पिता वा आत्महत्यां चकार धनाभावे । अनेके विवाहास्तु केवलं धनप्राप्ति-लोभेनैवाभवन् । साम्प्रतं यौतुक-प्रथा-कारणात् प्रतिवर्षं शतशः युवत्य आत्महत्यामाचरन्तीति दृश्यते श्रूयते च ।

## भाग्य-कर्मफल-विश्वासः

**भाग्यम्**—जनानां भाग्ये विश्वास आसीत्, कविः कथयति, दैवस्य महिमा अपारः अचिन्त्यश्च भवति । यो वै दैवसत्तां शक्तिम् च न मन्यते तस्य नामाप्यस्तं जायते । "दैवं खलु योग्यमयोग्यं, अयोग्यं च योग्यं विदधाति । दैवमेव विधिरित्य-भिधीयते, स वै पूर्वन्तु आनुकूल्यं प्रदर्श्य प्रियं करोति । ततश्च प्राणिनः अप्रियमा-चरति । **व्यंजन् यः प्रियमुत्कटं घटयते जन्तवे क्षणादप्रियम्**" धनमपि दैवाधीनमस्ति "**भाग्याधीनं धनं ध्यात्वा**" । निःसारो भवति प्रभावः भाग्यस्य अतएव न हि कश्चित् सर्वदा सुखमाप्नोति । "**भाग्यप्रभावे निःसारे सुखमेकान्ततः कुतः ।**" भाग्यवारिदे विद्योतमाना संपदस्थिरा खलु । भाग्यमेव वेधाः वर्तते, स वै यथेच्छं मतिपरिवर्तनं विदधाति । अचिन्त्या खलु तस्य गतिरस्ति "**गतिं को वेत्ति वेधसः**" तत्प्रभावात् कदाचित् अशिवमपि कर्म कल्याणकरं भवति । परिहासपुरात् तुंगस्य विरोधे समुत्पन्नः विप्लवः विधिवशात् तस्य शुभायैवाभूत् । **स दैवयोगात्तुङ्गस्य शुभाय प्रत्युताभवत्** । तुंगस्य अधः पाताय विरचिताः सर्वे पड्यन्त्राः उद्योगाश्च तदुपुकारका एवाभवन् । "**दैवानुकूल्येन प्रत्योद्रेचकोऽभवत् ।**"[1]

पुरुषस्य जीवनं मरणं चापि दैवायत्तमस्ति उन्नतिः अवनतिश्च तत्कारणादेव जायते । कलशो नृपतिः विधिवशादेव जीवनं प्राप "**देवान्न प्रलयं ययौ ।**" । रुद्रो-पेन्द्रमहेन्द्राद्या अपि नियतौ उपस्थितायां मरणमुपयान्ति । भाग्योदये सति सर्वसम्पदः शतशो भूत्वा प्राणिनं प्रविशन्ति । "**अर्था भाग्योदये जन्तुं विशन्ति शतशः स्वयं ।**" नैकद्वारैश्च ता सम्पदः पुरुषसमीपं समायान्ति । "**भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः सम्पदः**" कलशस्य सम्पत्तौ अभ्युदये च तत् दैवमेव प्रधानं निमित्तमभूत् ।[2]

---

(क) 7–724. 1447, 1551 1490 से 94, 1486, से 1488, 2–56. 57, 8–367, 386, 1472 448 । (2) 7–11 ।

(1) 3–491, 93, 4–545 7–205 6, 26 7–7 4, 28, 35 । (2) 7–313. 504 5 1418 ।

भाग्योदये खलु धी-शौर्य-वीर्य-धैर्य-प्रभृतयो गुणाः मनुष्ये इन्द्रं पराजेतुं शक्तिं जनयन्ति । प्रतिकूले च दैवे पुरुषः सर्वथा पंगुः जडः अन्धः विमूढश्च भवति लक्ष्मीविद्युल्लता कीर्तिवलाका शौर्यगर्जितम् प्रतापशक्रधनुश्चेति सर्वम् भाग्यवारिदे एवाश्रितम् । दैवस्य लीलयैव असंभवं दुष्करमपि च कर्म सुकरं भवति । कुष्ठार्तचरणः मयूरः बहुपदं सर्पम् गृह्णाति । पादसहस्रयुक्तं भानुं अनूरुः संचालयति बलवन्तः अबलैः वंच्यन्ते । सर्वमिदं दैवस्य लीलायितं ननु ।[3]

सर्वविधं शिवमशिवं वा फलं (विध्यधीनं फलं) कार्यस्य सिद्धिः असिद्धिर्वा यशः अपयशो वा दैवायत्तमेव । तत् हि सर्वम् मोहयति । दैवस्येच्छया अकिंचनः श्रीमान्, श्रीमांश्चाकिंचनो जायते । पलायनेनापि नियतिः न परित्यजति मानवम् । "**पलायनै र्नापयाति भवितव्यता ।**" नियतिनियता भोगास्तु अवश्यमेव भोक्तव्या भवन्ति । विधिरयं कदाचित् जीवितं मारयति कदाचिच्च मृतप्रायं जीवयति । यस्य मृत्युः दैववशादागता स लक्षैरपि न जीवयितुं शक्यते । यस्य च जीवनमवशिष्टं स लक्षैरपि न हन्यते । शक्तिमन्तो राजानोऽपि दैववशात् नियतिवल्लर्या सहसा दृष्टनष्टा भवन्ति । त्रैलोक्य-विजयी रावणः वानरैः पराजितः । कुरुपति दुर्योधनश्च दैवलीलया एव तिरस्कारं प्राप ।[4]

अनिर्वचनीया खलु विधातुः शक्तिः इच्छा च, स एव काष्ठपुत्तलिकेव सर्वान् नर्तयति । विपरीतश्च भूत्वा पुरुषस्य पौरुषं नैष्ठुर्यम् शठतां च पराभवति । न विद्यते तस्य गतेर्नियमः । यो वै विधिना अन्यथात्वं नीतं कार्यम् सनाथं चिकीर्षति स दुर्दशामाप्नोति । आरब्धंकार्यमपि भाग्यं सफलम् विदधाति, कार्यसिद्ध्यै च प्रयत्नपरमपि जनं स वृथाप्रयासं करोति । पुरुषस्योत्थानं पतनं च भाग्याधीनमेव । दैवे विपरीते विजिगीषोरपि कृत्यं विपरीतं जायते "**कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ**" कदाचित्तु प्रत्यनेन कार्यम्-समाप्य कृत्यकृत्यमात्मानं मन्यमानाय भारातिशय-समर्पणम् विदधाति विधाता । '**विधिर्विधत्ते दीर्घान्यकार्यभार-समर्पणम्**" । समस्तमिदं विधातृलीलालायितं वीक्ष्य, संदर्श्य च निर्णयम् ददाति कल्हणः यत् चंचलनिश्चयस्य विधातुः विचित्रनियमानां कृत्यानां न करणीयो विश्वासः । "**वैचित्र्य-संसृति-विधे र्नियमेन कृत्ये न प्रत्ययः क्वचन चंचलनिश्चयस्य**" ।।

इमे खलवासन् भारतीयानां भाग्यविषये विश्वासाः ये च कल्हणेन भिन्नेषु शब्देषु प्रकारान्तरेण प्रदर्शिताः स्वकृतौ[5] ।

---

(3) 7–1455, 56, 959 ।

(4) 7–1378, 79, 1402, 1652, 8–221 से 225, 334 35, 607, 1274, 75 ।

(5) 8–1470, 1590, 91, 92, 1790, 91 ।

**कर्म-विषये-विश्वासः**—भारतीय-संस्कृतौ क्रियमाणे, कृते वा कर्मणि तत्फले च विश्वासः पुराकालादद्यावधि स्वीक्रियते। कर्मफले विश्वसन्ति समे अपि भारतीयाः। भगवतो वेदस्योपदेशः अस्ति यत् —"**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः** (यजु 40–2) 'चरैवेति चरैवेतीति' उपनिषदां सारः खलु, भगवद्गीतायां कर्मण एव महत्त्वं प्रतिपादितं ननु। "**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन**" (2–47) इति गीतायां सूत्रे उपदेशो वर्तते।

कर्मणां फलमपि निश्चितममन्यत। सत्कर्मणां फलं शुभं, असत्कर्मणां चाशुभं फलमवाप्यत। कर्मफल-विषये वर्तमानो विश्वासः कविना नैकविधवाक्येषु प्रदर्शितः। सदसत्कर्माण्येव सदसत्कुलस्य ज्ञापकानि भवन्ति। "**सदृशं यत्सदसतोर्ज्ञापिकं जन्म-कर्मणोः**" निर्मलं शुभं च कर्म भवसागरात् पारं नयति "**निर्मलं कर्म संसारोत्तरक्षमम्**" मठमन्दिरादीनां, जीर्णोद्धारादिकर्मभिः रिल्हणस्यानुजः प्रतिष्ठां प्राप। उज्वलकृत्यः बालादित्यः सत्कर्मभिरेव शिवलोकं प्राप। दुर्लभको नृपतिः पुण्यकृत्यैः निर्मितैः सोपानैः दिवं प्राप। "**पुण्यनिःश्रेणिभिः पुण्यमारुरोह दिवं शनैः**"।

दानादिशुभकृत्यैः द्वितीये जन्मन्यपि शुभफलं संभाव्यते, राजा यशस्करः भाविष्वपि जन्मसु साम्राज्यकामः राज्यलक्ष्मीं दाने ददौ। '**प्रादान्निरातंकां राज्यलक्ष्मीं द्विजन्मने**[6]।

अपुण्यकर्मभिः दुःखमवाप्यते, मनोरथः दुष्कर्मभिरेव तिरस्कारं, कारागारदंडं मृत्युञ्च प्राप। दुष्कर्मभिः दुःखानि अवश्यं भोग्यानि भवन्ति। "**युज्यतेऽवश्यभोग्यानां दुःखानामप्रकाशनम्**" नरः नृपतिः कन्यापहरणप्रभृतिभिः दुष्कृत्यैरेव सकुलं सराज्यं सनगरं च क्षयं ययौ। "**दुर्नयेन क्षयं ययौ**" महान्तं परिश्रमं विधायापि अवश्यं भोग्यैः दुष्कर्मभिः प्रापणीयं मर्मच्छेदकं फलं पुरुषो प्राप्नोत्येव, राजा चित्ररथः दुष्कर्मानुरूप-मेवाष्टमासैः भीषणदुःखं भुक्त्वा तनुं तत्याज।

अवश्यभोग्य-दुष्कर्म-दत्तमर्मव्यथश्चिरम्।
कथावशेषोऽभवच्चित्ररथो मासैरथाष्टभिः॥

सड्ढः कुकृत्येनैव दुर्गतिं प्राप। "**गतिं कुकृतिनामगात्**"। इत्थं च कर्मणः फलमवश्यं प्राप्यते कामं तत्सुखकरं स्यात् दुःखकरं वेति। "**प्राप्तव्यं प्राप्तवान् सर्वो निजैः कृत्यैः शुभाशुभैः**" कर्मफलं वै त्रैलोक्यस्य मुखं यावद्याति "**क्रियातिपत्तिर्लोकेऽत्र त्रैलोक्यन्तु मुखेऽर्प्यते**" भवतिव्यता तु भीतं पलायितं वापि न परित्यजति। "**पलायनै र्नापयाति निश्चला भवितव्यता**" नियत्या निर्धारिता भोगाः अग्नि-विष-बाण-प्रयोगैः पलायनैः अभिचारैर्वापि न शमं यान्ति। प्राणिनां ते भोगा उच्छ्वासवत् नियता एव "**भोक्तव्यभोग-नियतोच्छ्वसितस्य जन्तोः**" आयुषः क्षये मृत्युरायात्येव, कर्तव्यानुसारं सम्पद्भिरपि जीवन-दिनानि न वर्धयितुं शक्यन्ते। "**न संपत्स्वल्पपुण्यानामनपायित्व-**

(6) 7–1693, 97, 8–2355 से 58, 3–526, 4–44, 6–86।

**मायुष**"। जलप्रवाहवत् धनस्य व्ययः अपि कर्मानुसारं प्राप्तं मृत्युं न निवारयितुं पारयति, प्रतीहारः लक्ष्मकः अकस्मादेव मृत्युं प्राप स्वकृत्यानुरूपम्।

विचित्रा खलु कर्मणो गतिः तत्पुरतः स्वप्नेन्द्रजालमाया अपि अगण्या जायन्ते। दिद्दया भिक्षुक इत्याख्यया पालितः शिशुः कर्मगत्या एव प्रतिष्ठां प्राप्तान्[7]।

**दैवात् कर्म बलीयः**— कर्मणः गतिं महत्त्वं च प्रदर्श्य कल्हणः उपदिशति यत् मनुष्यैः सदा सत्कर्माण्येव करणीयानि दैवे एव विश्वासं कृत्वा न प्रमत्तेन निष्क्रियेण च भाव्यम्। यो वै भाग्याधीनस्तिष्ठति स प्रबुद्धानां सम्मतिं द्वेष्टि परिणामे च दुःखमवाप्नोति। दैवात् कर्म बलीयः प्रधानं चास्ते। दिद्दया पालितेन शिशुना स्वकर्मभिः या प्रतिष्ठा लब्धा सा दैवेनापि लघुत्वमानेतुं नाशक्यत। "**दैवं हि दैवमिति कापुरुषा वदन्ति**" इति पंचतंत्रवाक्येन कल्हणः सम्मतः प्रतीयते। अतः भाग्ये, विश्वासाधिक्यं विहाय कर्मणि एव जीवनं योज्यं पुरुषैः, कर्म चापि निष्कामभावेनैव सम्पादनीयम्। "**निष्कर्म-व्यवहारः व्यभाव्यत**"।

## पुनर्जन्मनि विश्वासः

कर्मफल-सिद्धान्ते एव पुनर्जन्म-सिद्धान्तस्तिष्ठति, कर्मानुसारमेव जन्म प्राप्यते इति पुराकालादद्यावधि भारतीयानामभिमतमस्ति। पूर्नजन्मनः कृत्यानुसारं जन्मान्तरं जनो लभते। पितरौ तु जन्मदातृत्वेन निमित्तमात्रौ स्तः। सत्सु कर्मसु सम्पादितेषु शुभं फलं प्राप्यते। यशस्करः जन्मान्तरस्य शुभकर्मभिः एव साम्राज्यं प्राप द्वितीये जन्मनि। "**शुभकर्मभिः। जन्मान्तरीयं साम्राज्यं मया प्रापीति**"। भाविजन्मस्वपि राज्यं प्राप्तुकामः स दानादिकर्म चकार "**साम्राज्यकामो नृपतिर्भाविष्वपि स जन्मसु**"।

पर्वगुप्तः पूर्वजन्मनि संचितैः शुभकर्मभिरेव सुरेश्वरी–क्षेत्र-तीर्थे प्राणान् मुमोच। "**प्राक्तनैः शुभैः। कैश्चित् सुरेश्वरी-क्षेत्रे परासुः समपद्यत**"।

इह लोके परलोके च स्वविश्वासं प्रदर्शन् कल्हणो भणति यत् विधाता चेत् इह जन्मनि उत्कट-पापानामनुरूपं मृत्युरूपं वा फलं दत्वा, परलोके प्राप्यानां कष्टानामनुमानं नाकारयिष्यत्, तर्हि को नाम जनः शुभकर्मसु निरतः अभविष्यत्। पूर्वजन्मनः अपुण्यकर्म-प्रभावेन हानिरेव जायते जन्मान्तरे। तुंगः पूर्वजन्मनः पुण्यकर्मणां क्षयादेव भ्रष्टमतिरजायत। "**प्राक् पुण्यक्षयात्तुङ्गः शनैस्त्वासीत् स्खलन्मतिः**"। पूर्वजन्मनः वासना जन्मान्तरे अपि गत्वा स्वप्रभावमुत्पादयन्ति। राज्ञः उच्चलस्य गर्गे प्रीतिः प्राक्तन-वासनानां कारणादेवाभूत्। ताः वै वासना गर्भवास-समये पुरुषं प्रयान्ति,

(7) 7–1697, 1–226, 73, 7–2547, 55, 222, 23, 1999, 2000, 234, 35।

(8) 3–220, 21, 22, 25, 33, 3–468, 5–474, 7–74, 44, 69, 1291, 3–230।

"**पूर्वसंकल्प-वासनाः प्रयान्ति प्राप्तजनुषां गर्भवास-स्पृहा इव**"। राजतरंगिण्यां विद्यमाना इमे विचाराः तत्कालस्य जनेषु पुनर्जन्मनि विश्वासं दृढ़ीकुर्वन्ति।

## शकुने अपशकुने विश्वासः

शकुनेष्वपशकुनेषु चापि जनानां विश्वासः अवर्तत। शकुनमेव निमित्तमभ्यधायि। तानि वै शुभमशुभं वा शंसन्ति। "**निमित्तैः शुभशंसिभिः**" शुभशकुनानि वीक्ष्य सर्वकार्येपूत्कंठा आविर्बभूव। काश्मीरान् गच्छन् मातृगुप्तः इमानि शुभ-शकुनानि अपश्यत्। स वै सर्पफणौ खंजरीट-पक्षिणम्, स्वप्ने च जलपोतमारुह्य उल्लंधित-सागरमात्मानं ददर्श। निमित्तमिदं वीक्ष्य स भाविनं शुभमचिन्तयत्। फलस्वरूपं च राज्यासनं प्राप।

इमानि खलु वस्तूनि शुभान्मन्यन्त–मांगल्यदधिपात्रम्, शुभस्वप्नाः, दैवी-चमत्काराः, विद्युत्द्योतनम्, जीमूतगर्जनं, जलपूर्णघटदर्शनम् मृतशशदर्शनम् इत्यादि।

हर्षः एतादृशैः निमित्तैरेव उत्कर्षसूचनां प्राप। "**स तेन सुनिमितेन प्राप्तां मेने नृपश्रियम्**", यथैव स आसन्नश्रीकः आसीत्, विविधानि निमित्तानि तत्भाग्योदय-सूचनां ददुः। विजयमल्लः अपि शुभशकुनैराहितोत्साहः लक्ष्य-प्राप्त्यै कार्यम् चकार। उच्चलः निहतं शशं वीक्ष्य रिपुश्रियं प्राप्तां मेने। यशस्करः सुस्वप्नैः स्वशुभमकल्पयत्। रणादित्यः अपि शुभ–स्वप्नैः चमत्कारैश्च सिद्धिफलं प्राप्तुं दृढनिश्चयो बभूव। शकुनानि खलु उदयसूचनां ददुः[9]।

**अपशकुनानि**—अशुभानि निमित्तानि एव अपशकुनानि भवन्ति। विजयमल्ल-स्याक्रमणसूचनायै गच्छन् उत्कर्षस्याननन्यभक्तः दुर्निमित्तैरेव बाधामकल्पयत्, प्राप च। लूनांगः अमंगलशंसी अमन्यत। घ्राणहीनं पुरषमेकं पुरस्कृत्य गच्छन् कलशः मृत्युमुखे पपात। कथंचिच्च प्राणरक्षां चकार। पार्थिवः "**कालीकटाक्षाच्च दैवान्न प्रलयं गतः**। दुर्निमित्तानि विपत्तेरागमनं सूचयन्ति। राजा हर्षः दुर्निमत्तैरेव आपदागमनमनुमेने। "**निमित्तज्ञेन राज्ञैव दुर्निमित्तैस्त्वशंक्यत**" कलशराजस्य वसतिं प्रस्थितः उच्चलः दुर्निमित्तैरेव शंकितः सन् कांचिदापदमनुमीय गुप्तषडयन्त्रमेकं जज्ञौ। **प्राग्दुर्निमित्तैः तत्कृत्यमाणैरथ विबोधितः**। पुरुषस्य वामनेत्रस्य बाहोश्च स्फुरणामपि अपशकुनममन्यत। राजा हर्षः भोजदेवमरणवृत्तं, वामांगस्फुरणादिदुर्निमित्तैः सत्यं मेने।

(9) 7–768, 4–304, 7–312, 13, 1257, 5–575।

# भारतस्य-ग्रार्थिक-समृद्धिः

राजतरंगिणी ग्रत्यन्तसमृद्धस्य धनधान्यसंकुलस्य भारतस्य हृदयावर्जकं चित्रं प्रस्तौति । ग्रार्थिकदृष्ट्या, समृद्धेः कारणम्-मुद्राः पशुधनं वनसम्पत्तिः धातुभंडाराः, वापीकूपतडागजलाशयाः विविधमणि'रत्नप्रभृतीन्यासन् ।

पुराकालादेव भारतं "**सोने की चिड़िया**" इति ख्यातिं प्राप्तमस्ति । ग्रस्य देशस्य ऋद्धिः समृद्धिरेव च कारणमस्याः ख्यातेः । स्वर्णभंडारस्य वयमुल्लेखं पश्यामः, यत्र ग्रगणिता रत्नराशिः व्यराजत ।

भस्मकूलतलात्तावल्लब्धं स्वर्णादिभूभुजा
कथापि यावतो हन्त ग्रथयत्यद्य कौतुकम् ।।7–416।।

स्वर्णरत्नादिपूर्णस्य कोषस्यापि नैकशः वर्णनं विलोक्यते ।

प्राविशन्मन्त्रिभिः सार्धं कोषं हेमादिसंश्रयम् ।।7–818 ।।

**स्वर्णनिर्मितवस्तूनिः—स्वर्ण-कलशः**—ग्रनेकेषां स्वर्णरचितानां वस्तूनां प्रायेण उल्लेखो विद्यते । मन्दिराणां शिखरेषु, प्रासादेषु च स्वर्णकलशाः स्थाप्यन्ते स्म । "**प्रासादं सस्वर्णामलसारकम्**" ।[1क] ग्रभ्रंलिहानां सदनानां शिखरेष्वपि स्वर्णकलशाः दृष्टिपथमायान्ति स्म । "**सौवर्णामलसाराढ्या राजधान्यो धरापतेः** ।[1ख]

**स्वर्णपात्राणिः**—गृहेषु विशेषतश्च राजप्रासादेषु नैकविधानि स्वर्णनिर्मितानि पात्राणि खलु वर्णितानि । '**स्वर्णभाजनम्, हेमभोजनभाण्डादि**', '**सोवर्णैभाजिनैरपि**', '**धनं सुवर्णभाण्डादि**', '**ताम्बूलं स्वर्णभाजने**', '**पृथुस्वर्णभाजि**',[2क] इत्यादीनि बहूनि पदानि स्वर्णपात्राणामेव सूचकानि । केषांचित् स्वर्णपात्राणां नामापि प्रदत्तं कविना । **स्वर्णभृंगारः, स्वर्णकलशः, स्वर्णस्थाली**[2ख] इत्यादि तत्र प्रमुखमस्ति ।

**विविधवस्तूनि**—केषांचिदन्येषां स्वर्णरचितवस्तूनामपि उल्लेखो विद्यते । तत्र च स्वर्णदंडः '**द्वारं कनकदंडेन**', '**रुक्मदण्डैः सशम्पेव**', **स्वर्णरूप्यकं**, **कांचनदीन्नाराः**, **स्वर्णेष्टिकाः** '**सौवर्णीरिष्टिकाः कृत्वा**', **स्वर्णत्सरुः** '**स्वर्णरूप्यत्सरुश्रेणिपूर्णा**', **कनकसंनाहम् स्वर्णछत्रम्**, **स्वर्णघटिकाः** '**निःसंख्यहाटकघटी.....**', **स्वर्णप्रतिमाः** '**सौवर्णीः प्रतिमा व्यधात्**' स्वर्णरूप्यादिघटिता **गीर्वाणाकृतयः**[3], इत्यादीनि स्वर्ण-निर्मितानि वस्तूनि प्राचीनभारतवर्षे स्वर्णागारस्य सूचनां ददति । स्वर्णसंचयप्रवृत्तिः भारतवासिषु पुराकालादद्यावधि दृश्यते । '**स्वर्णसंचयैः**' पदमेतस्यैव पुष्टिं करोति[4] ।

ग्रपि च स्वर्णदानस्यासकृदुल्लेखः ग्रपि भारते विद्यमानमसंख्यं स्वर्णकोषं पोषयति ।[5] राज्ञी दिद्दा कंकणवर्षिणी निगदितास्ति "**रमणीस्वर्णवर्षिणी**',

---

(1-क) 7–526 । (1-ख) 7–938 ।
(2-क) 3–161, 5–10, 7–1194, 8–811, 1124, 3070 ।
(2-ख) 1–128, 7–526, 938, 1227 ।
(3) 7–92, 946, 6–45, 7–1118, 8–639 7–1517, 8–25, 42, 45, 7–525, 28, 31, 8–3365, 70, 7–527, 715, 1093 ।
(4) 7–175, 190 । (5) 6–224, 339 ।

सुवर्णाख्यः नृपतिरपि, अर्थिनां स्वर्णदः अभिहितः। (**तस्य सूनुः सुवर्णाख्यस्ततोऽभूत्स्वर्णदोऽर्थिनाम्**)[6] । अनेकस्थलेषु स्वर्णमुद्राः प्रचलिताः दृष्टिपथमायन्ति ।[7]

**रजत-वस्तूनि**—स्वर्णवत् रजतस्यापि नैकवस्तूनां वयं वर्णनं पश्यामः, **रजतमुद्राः रजतसिंहासनं** (रूप्यपीठम्), **रजतस्नानद्रोणिः**, **रजतप्रतिमाः**, **राजतस्थालः**, इत्यादीनि रजतवस्तूनि राजतरंगिण्यां वर्णितानि विद्यन्ते। एवमेव ताम्र-कांस्य विनिर्मितवस्तूनामपि वर्णनं तत्रास्ते ।

**मणिरत्नजातम्**—शतशः रत्नमणिप्रभृतीनामुल्लेखो वरीवर्ति । तत्र च सूर्यकान्त-चन्द्रकान्त-चूडामणि-स्फटिकप्रभृतीनि विशेषमुल्लेखनीयानि सन्ति । मौक्तिकानामपि संकेतस्तत्र प्राप्यते । (**मौक्तिकैः पूगविच्छेदे**) ।।[9]

**काचः**—एतावदेव न किन्तु काचवस्तूनामप्युल्लेखो विद्यते, काचकलशाः, काचकुम्भाश्चात्र प्रमुखाः सन्ति ।[10] काच-वस्तुनिर्माता रोजकः अभिधीयते स्म ।
इत्थं च प्राचीनभारतस्य आर्थिकदृष्ट्या, ऋद्धिः समृद्धिश्च स्फुटमेव दृष्टिगोचरा भवति ।

अन्यच कस्यापि देशस्य समृद्धौ, उद्योगानां विविधवस्तूनां व्यापारस्य च महन्महत्त्वं भवति । कल्हणकाव्ये चित्रिते भारते अपि समृद्धेः कारणं बहव उद्योगा एवासन् । अधस्तना उद्योगा भारते प्रचलिता अभूवन् ।

**1. स्वर्णरजतोद्योगः**—अस्माभिः स्वर्णस्यानेकवस्तूनामुल्लेखो दृष्टः । स्वर्णरजतनिर्मितानामलंकाराणामपि शतशः वर्तन्ते संकेताः तैश्च, संकेतैः स्वर्णोद्योगस्य स्वर्णकाराणां च स्पष्टमेव सूचनावाप्यते । रजतवस्तुषु स्वर्णरसारोपणोल्लेखः अपि वरिवर्ति । वेण्या अलंकरणे अपि स्वर्णरजतप्रयोगः अभूत्, स्वर्णपरीक्षा कषाश्मे व्यधीयत, तस्य शुद्धिश्च अग्नौ ((**हेम्न इवोज्ज्वलयं प्रविश्याग्नि तयार्पितम्**) ।[11]

**2. मणिरत्नोद्योगः**—शतशः स्थलेषु मणीनां, रत्नानाञ्च वर्णनं, छत्रेषु, विविधवस्तुषु च, मणिरत्नादीनामारोपणम्, मणिरत्नादिदानञ्च मणिरत्नोद्योगस्यैव सूचकं खलु । रत्नाकरशेखरः नानारत्नाकरः कथितः । रत्नैः लिंगस्थापनमप्यभूत् ।[12] मणिदीपकानामपि बहवः संकेता उपलभ्यन्ते ।[13]

---

(6) 6–301, 1–97 ।
(7) 3–57, 256, 6–45, 7–1198 ।
(8) 8–2363, 5–46, 7–1083, 5–12 ।
(9) 3–296, 6–294, 8–2028, 3043, 4143, 3119, 3025, 1947 ।
(10) 8–2011, 3229, 7–192 ।
(11) 7–929, 8–2638, 7–859 ।
(12) 5–15 । (13) 5–15 ।

3. **काचोद्योगः** –काचकलशस्य, काचकुम्भस्य[14] चोल्लेखः, स्फटिकस्य, स्फटिकनिर्मितानां वस्तूनां भित्तिप्रभृतीनां च वर्णनं काचोद्योगं सूचयति ।

4. **खानोद्योगः**––स्वर्ण-रजत-ताम्र-कांस्य-अयस्-प्रभृतीनां धातूनां पौनः पुन्येन वर्णनं खानोद्योगस्य सूचनां ददाति । कह्लणेन खनि-शब्दस्य प्रयोगः अपि विहितः, खनिकानाञ्चापि वर्तने बाहुल्येन वर्णनम् । स्फटिकश्वेतप्रस्तरः (संगमर्मर इति भाषा) प्रभृतयो अपि खनिभ्यः एव प्राप्यन्ते स्म ।

5. **वस्त्रोद्योगः**—परिहासपुरे वस्त्रोद्योगस्य ख्यातिः कविना उल्लिखिता वर्तते । वस्त्राणि बाह्यदेशेभ्यः अपि आययुः । चीनांशुकस्य सिंहलांशुकस्य च कविना वर्णनमसकृत् कृतम् **'संवीतसिंहलांशुककंचुकाम्'** भारते निर्मितं वस्त्रमपि देशात् बहिर्ययौ ।

6. **वाजिविक्रयः**–अश्वपालने पुराकालादेव भारतीयानां रुचिरासीत् । अद्यापि च दृश्यते । काम्बोजप्रभृतिभ्यो देशेभ्यो वाजिनःअत्र आनीयन्ते स्म । परिहासपुरे प्रवर्तितेषूद्योगेषु पशुविक्रयोद्योगः महत्त्वपूर्ण आसीत् **"ख्यातिहेतुः पट्टवानं पशूनां क्रयविक्रयौ"** ।[15]

7. **चर्मोद्योगः** –पौनः पुण्येन चर्मकाराणां चर्मनिर्मित-कवच-दृति-उपानहप्रभृतीनां वस्तूनां वर्णनं चर्मोद्योगस्य विस्तारं द्योतयति । व्याघ्रचर्म-मृगाजिन-सिंहतनुप्रभृतीनां शरीरे धारणस्योल्लेखः अपि चर्मोद्योगे उन्नतिं सूचयति ।

**व्यापारः**—विविधवस्तूनां क्रयविक्रयकारिणामनेकेषां व्यवसायिनां वणिजां कविना उल्लेखः कृतः । ते वै व्यवसायिनः समूहेषु देशात् देशान्तरं ययुः । व्यापारञ्च चक्रुः **'नानादिगन्तरायाते तत्तत्क्रयिक-संकुले'** ।[16] कदाचित् ते नौभिः स्ववस्तूनि बहिर्नगरं प्रेषितवन्तः वित्तार्जनं चाकार्षुः । व्यापार एव वाणिज्यं न्यगद्यत । समये समागते क्षत्रिया अपि वाणिज्यं चक्रुः ।[17] वाणिज्यकर्तारश्च वणिजः अपि न्यगद्यन्त । लुब्धप्रवृत्तयस्ते धनं ऋणे दत्त्वा तस्य व्याजं गृहीत्वा स्वकोषवृद्धिं कृतवन्तः । ते हि स्वर्णाभूषणानि, अन्यानि च वस्तूनि न्यासरूपे (धरोहर) निधायापि धनं ददुः । देशान्तरं गत्वा वित्तं तत्र चार्जयित्वा स्वदेशं प्रत्याजग्मुः । **"सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितम् । गृहीत्वा श्रुतसौराज्यः स्वदेशमयमागतः ।। 6–45 ।।**

**राजकोषः**—नृपतेः आयस्य प्रधानं साधनं करव्यवस्था अभूत् । नृपतिः कृषेः षष्ठांशं स्वीचकार अन्येषूद्योगेष्वपि करं निधायासौ निजकोषमवर्धयत् । संगृहीतं धनं नृपतिः जनकल्याणाय व्ययीचकार ।[18]

---

(14) 8–2011, 3229 ।
(15) 1–294, 5–162 ।
(16) 4–11 ।
(17) 8–2482 ।
(18) 7–1225, 26, 27 ।

**वनसम्पत्तिः** – काननानामुत्पादनेन, पूर्णतया अर्थलाभः उपलभ्यते स्म । वनेषु खलु राजकीयाधिकारः अभवत् । गोचर-श्मशानभूमि-रूपे तेषां प्रयोगः अभूत् । इन्धनस्य अजस्रस्रोतांसि तानि वनान्यभूवन् । चन्दनादि-महार्हकाष्ठास्तत्रैव प्राप्यन्त । कुठारेण वृक्षछेदनस्योल्लेखः अपि लभ्यते, तत्कर्मकर्ता च कुठारिको न्यगद्यत ।[19] काष्ठाः विक्रीय स उदरवृत्तिं चकार । वनैः वृत्तिं कुर्वाणा वनोपजीविनोऽकथ्यन्त । गृह-रथ-शयनासन-यज्ञसामग्रीप्रभृतीनां निर्माणाय वनसम्पत्तेरधिकाधिकमुपयोगो गृह्यते स्म । अनेक-स्थानेषु विशेषतश्च कश्मीर-नगरेषु प्रायेण गृहाणि अपि काष्ठनिर्मितानि अभूवन् । अद्यापि च प्रायेण प्रत्येकस्मिन् गृहे सर्वापि बहिराकृतिः काष्ठनिर्मिता प्राप्यते । 'हाऊस बोट' इति प्रसिद्धानि डलप्रभृतिजलाशयेषु विद्यमानानि प्राचीन-गृहाणामेवाधुनिकरूपाणि वर्तन्ते । वस्तुतः कश्मीर-प्रदेशस्य तु वित्तार्जनस्य प्रधानं साधनं वन-काष्ठाः, तन्निर्मितवस्तूनि चाभूवन् । अद्यापि च वर्तन्ते । वनानां फलपुष्पै-रेव मुनिजनाः स्ववृत्तिकार्षुः । वनेभ्य एव मारीच-नारिकेल-तमालप्रभृतीनि अवाप्यन्त । चन्दनकेसरसदृशाः प्रसाधनपदार्था अपि वनेभ्य एवालभ्यन्त । वनौकसो मुनयः शरीरा-च्छादने वल्कलानां प्रयोगं चक्रुः ।

**विनिमय-साधनम्**—सर्वदेशेषु सर्व-वस्तूनां सर्वविधोद्योगानां, क्रयविक्रयसाधनं, विनिमय-साधनं वा काचित् मुद्रा एव भवति । राजतरंगिण्यां चित्रिते भारते दीन्नारः, गौः, वराटकः, रूप्यकं धान्यञ्चेति पंचविधं विनिमय-साधनमवर्तत ।

**दीन्नाराः**— पदे 2 कल्हणकाव्ये दीन्नाराणामुल्लेखो वरीवर्ति । जनव्यवहारे व्यापारे च तेषामेव बाहुल्येन प्रयोगो बभूव । "दीन्नारः" एको मुद्राविशेष आसीत्, दीन्नारनिर्माणं स्वर्ण-रजत-ताम्रधातुभिः, मिश्रितधातुभिर्वाजायत । राज्ञः हर्षस्य राज्यकाले सर्वविधानामेव व्यवहारः प्रकर्षेण दृश्यते ।

रौक्मैश्च राजतैश्चासीद्व्यवहारस्तदा घनः
मण्डले विरलेऽमुष्मिन् दीन्नारैस्ताम्रजैः पुनः ।। 7–950 ।।

द्विधा लभ्यते दीन्नारपदप्रयोगो कल्हणकृतौ ।

1. तेषामुल्लेखः मूल्यपरिमाणोल्लेखं विना सामान्य-रूपे कृतः अस्ति । यद्वा

2. यथार्थमूल्यरूपे तेषां वर्णनं विद्यते, तत्र च शतं, सहस्रं, लक्षं वा संख्यापि प्राप्यते ।

प्रथमप्रकार-दीन्नारपदप्रयोगः मुद्रारूपे वा विहितः खलु । उपरितने श्लोके तदेव रूपं लभ्यते ।

द्वितीयप्रकारस्य अवतरणानां कृते वयं शब्दकोषानां टिप्पणिषु महत्त्वपूर्णम्

---

(19) 5–311, 7–39, 8–2509 ।

प्रमाणं प्राप्नुनः । षष्ठतरंगे 'दीन्नाराणां दशशती' [20] इति शब्दयुगलं स्फुटीकुर्वन् शब्द-कोषकारो भणति, "अत्र 'दीन्नारं' पदेनाभिप्रायः कश्मीरीभाषायाः 'दयार-पदेन वरीर्वति ।" इदं पदमत्र कस्यचित् विशेषप्रकारकस्य मौद्रिकमूल्यस्य नाम नास्ति, किन्तु सामान्यमहत्त्वस्य विद्यते, तच्च भाषायाः 'चलन' अथवा 'नकदी' पदस्यानुरूप-मास्ते ।[21]

केषुचिदवतरणेषु दीन्नार-शब्द-पुरस्सरं यथार्थमूल्यकथनं तथैवाभिहितं यथा द्रव्यमूल्यं निगद्यते । चतुर्थतरंगे उद्भटस्य वेतनप्रसंगे **'विद्वान् दीन्नारलक्षेण प्रत्यहं कृतवेतनः"** इति पद्यार्धे तत् प्राप्यते । क्वचित् दीन्नारशब्द-प्रयोगं विनैव वास्तविक-मूल्यं निगदितम् यथा —**'कृतप्रत्यह-निर्वाहः सार्धलक्षेण भभुजा'** । [22]

प्रथमे पद्यार्धे दीन्नारपदपुरस्सरं मूल्यमभिहितं, द्वितीये तद्विनैव सूचितम् । अपि च उच्चल-राज्यकालस्य एकस्य वणिजः घटनायामपि उक्तमेव वक्तव्यं पुष्टं भवति । वर्णनेन इदमपि स्पष्टं जायते यत् वस्तूनां क्रय-विक्रये, वेतने दीन्नारा एवादीयन्त —

'ऊर्णापलस्य दीन्नारैः क्रयः षड्भिरजायत' ।। 7–1221
'दीन्नाराणां धान्यखारिः प्राप्याभूत् पंचभिः शतैः
दीन्नारेणाभवल्लभ्यं मार्द्वीकस्य पलद्वयम् ।। 7–1220 ।।

इत्यादीनि पद्यानि क्रय-विक्रये दीन्नारव्यवहारं प्रदर्शयन्ति । एकस्य दीन्नारस्य किं वास्तविकमूल्यमासीदिति न राजतरंगिण्यामुक्तं कल्हणेन ।

**वराटकः** —वराटकानां प्रयोगः अपि देशे मुद्रारूपे, बभूव । कविः संग्राम-देवस्य सत्कर्माणि वर्णयन् लिलेख यत् असौ नरपतिः वराटकात् कोटिपर्यन्तं धनराशिं संगृहीतवान् ।

**'वराटकात् प्रभृत्यासीत् कोटीनां कृतसंचयः' ।। 7–112 ।।**

इत्थमत्र लघुतममूल्यात्, महत्तममूल्यावधि धनराशेरुल्लेखो विद्यते । अनेन च मुद्रारूपे वराटकव्यवहारः सूच्यते । अपि च क्षेमेन्द्रस्य श्रीवरस्य च कृतिरपि मुद्रारूपे वराट-कानां प्रचलनं पोषयति ।

**गौः**—गौः अपि प्राधान्येन विनिमय-साधममवर्तत । भारतवर्षे गवां महती प्रतिष्ठा अभूत् अनेकस्थलेषु गवां दानस्योल्लेखस्तन्महत्वं बाहुल्यं च सूचयति । मुद्रा-रूपे द्रव्यरूपे वा गावः वैदिककालादेव दीयन्ते स्म । इतः शतद्वयवर्षपूर्वमपि गवां विनिमय-साधनरूपे दानमभूत् । अद्यापि च क्वचित् वर्तते ।

वयं पठामो राजतरंगिण्या एकस्मिन् पद्ये यत् जयापीडस्य प्रधान-पंडितः प्रत्यहं लक्षं दीन्नारान् प्राप वेतने । अपरस्मिन् पद्ये च वयं मूल्यरूपे गवां प्रदानं पश्यामः

---

(20) 6–38 । (21) 4–495 ।
(22) 7–145 ।

मम्मः मम्मस्वामि-मन्दिरं प्रतिष्ठाप्य, तत्र कलशस्थापनसमये, पंचाशीतिसहस्रं गावो ददौ —

पंचाशीतिसहस्राणि गवां दत्त्वा प्रकल्पयन्
कुम्भप्रतिष्ठासंभारं यो मम्भस्वामिनं व्यधात् ।। 4–699 ।।

एकया धेन्वा सममसौ दीन्नारसहस्रं ददौ । गवादिधनं दधानः एव सः महाधनो न्यगद्यत ।

'एकैकस्याः सुधीर्धेनोः कृत्वा मम्मो महाधनः' ।। 4–698 ।।
'तस्यैकस्यैव सामग्र्यां कः संख्यां कर्तुमर्हति' ।। 4–700 ।।

इति पद्यार्थे मम्मस्य गोधनस्यापि, अप्रत्यक्षेणोल्लेखो वर्तते ।

**धान्यम्**—अन्यच्च धान्यस्यापि विनिमय-साधनरूपे संकेतः प्राप्यते ।

**रूप्यकाणि**--नवदशैकादशद्वादशशताब्दिषु रूप्यकाणामपि प्रचलनं प्रारब्धम् । विनिमयसाधनेषु महन्महत्त्वं तेषामजायत । रूप्यकाणि स्वर्णरजतैः निर्मीयन्ते स्म ।

....सुवर्णरूपकशतं भ्रान्त्वा देशान्तरेऽर्जितम् ।। 6–45 ।।
....रूपकेभ्यो द्वयं मम...............................।। 6–52 ।।
....धर्मासनस्थो राजाऽथ रूप्यकाणामजायत ।। 6–60 ।।

इत्यादिपद्यांशाः रूप्यकाणां व्यवहारं सूचयन्ति । इत्थञ्चावगम्यते यत् राजतरंगिण्यां चित्रिते भारतवर्षे क्रयविक्रयस्य विनिमयस्य च प्रधानं साधनं दीन्नारा अभूवन्, ततः-परञ्च वराटक-गौ-धान्य-रूप्यकाणामपि व्यवहारः प्रावर्तत ।

स्टीन-महोदयः, अबुलफजलमहोदयस्य वर्णनेन समं तुलनां विधाय दीन्नाराणां मूल्यमित्थमवर्णयत् । तन्मते भारतस्य मुद्रादशमलवप्रणाल्यामाधारिताभूत् ।[23]

| | | |
|---|---|---|
| 12 दीन्नार | = | 1 द्वादश |
| 2 द्वादश | = | 25 दीनार अथवा 1 पंचविंशतिक |
| 4 पंच विंशतिक | = | 100 दीनार अथवा 1 शत |
| 10 शत | = | 1000 दीनार अथवा 1 सहस्र |
| 100 सहस्र | = | 1,00,000 दीनार अथवा 1 लक्ष |
| 100 लक्ष | = | 1,00,00,000 दीनार अथवा 1 कोटि |

**कृषिः**—पूर्वकालादेव भारतं कृषि-प्रधानमस्ति । कृषिरेव वैदिक-काले देशस्य समृद्धेः प्रमुखं साधनमभवत् । अद्यापि च वर्तते । राजतरंगिण्यां चित्रितं समृद्धं भारतमपि कृषिप्रधानमभूत् । कृषिशब्दः[24] राजतरंगिण्यां नैकवारं समागतः ग्रामीणास्तावत् प्रायेण कृषिं कृत्वैव जठरपूर्तिञ्चक्रुः **'ग्राम्याः कृषिपराधीना नापश्यन्**

(23) स्टी-राज० भाग 2 पृ० 332 । (24) 6–8, 9, 8–656, 2482 ।

**राजमन्दिरम्'** 6–9 । कृषेः निरीक्षणाय राज्ञा कृष्यध्यक्षवाच्या अधिकारिण न्ययोज्यन्त ।

"कृष्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनाम् ।" 6–8

कृषेः कर्ता हलधरः, हलचालकः, कृषकः कर्षको[25] वा न्यगद्यत । अद्यापि च कथ्यते । कृषका लांगलं[26] वृषस्कन्धेषु आरोप्य[27] भूमिखननमकार्षुः । लांगलः काष्ठनिर्मितः अभवत्, वृषाश्च अतिबलिष्ठा अभूवन् । ते च वैशाखरज्जुना कृषकैः हले अयोज्यन्त[28] ।

**सिंचन-साधनानि**—विशालक्षेत्रेषु क्रियमाणायाः कृषेः सिंचनाय विशेषप्रबन्धो नृपैः व्यधायि । सिंचनदृष्ट्या समस्तः अपि देशः देवमातृकोऽदेवमातृकश्चेति भागद्वये व्यभज्यत । देवमातृकास्ते ग्रामा अभूवन् यत्र सम्यक् जलव्यवस्थाभूत्, वृष्टिरपि च पर्याप्ताभवत् । अदेवमातृकास्तु ते ग्रामा अकथ्यन्त, यत्र जलस्य अभावः न्यूनता वाजायत । वृष्टिरपि च प्रायेण नाभूत् अल्पा वा बभूव । एतादृशानां ग्रामाणां च सिचनाय विशेष-व्यवस्था अक्रियत[29] । इमानि किलासन् सिंचन-साधनानि ।

**(1) अरघट्टयन्त्राणि[30]**—सिंचनसाधनेषु प्रधानसाधनं अरघट्टयन्त्रमभूत् । कविना खलु असकृत् तेषामुल्लेखः कृतः । **'अरघट्टे समीपस्थे'** । अद्यापि पंचनदादि-प्रदेशेषु अरघट्टानां प्रचलनं बाहुल्येन वर्तते । अरघट्टः खलु एकः कूपविशेषो भवति यत्र च अयोनिर्मितभाण्डानां श्रेणी भवति, एकेन यन्त्रेण सा संचलति । क्रमशः कूपमध्ये गत्वा, जलमानीय, कूप-शिखरं प्राप्य तत्र निर्मितगर्ते तत् पातयति । ततश्च जल-मार्गेण (नाली इति भाषायाम्) विविध-क्षेत्रेणु जलं याति । अरघट्टयन्त्रे एका दीर्घा काष्ठा भवति यां हि पुरुषा वृषभा वा चालयन्ति । कश्चित् पुरुषो वा वृषभौ संयोज्य संचालकत्वेन तत्र तिष्ठति । राजतरंगिण्यां डामराः किल अरघट्टकाष्ठायाः कर्षका वर्णिता वर्तन्ते—

**'अरघट्टजरट्टादिकृष्टमुत्सृज्य निर्गताः । डामरा वाहदेवाद्याः....।।7–1292।।**

तदा प्रचलितेषु अरघट्टयन्त्रेषु एकं घटीयन्त्रमप्यभूत् । यस्य रज्जुः न सौख्येन ग्रहीतुमशक्यत ।

**'अरघट्टघटीयन्त्रगुणस्यैवाससाद सः ।।8–2697।।**

अद्य खलु पंचनद-कश्मीर-राजस्थान-हरियाणा-उत्तरदेश-मध्यप्रदेश–प्रभृतिषु प्रान्तेषु विद्यमानेषु अरघट्टयन्त्रेषु घटी न दृश्यते ।

**कुल्या-निर्माणम्**—क्षेत्रसिंचनाय कुल्या अपि स्थाने 2 निर्मीयन्ते स्म । याभिः जलमितस्ततो नीयते स्म । अनेककुल्यानामुल्लेखो राजतरंगिण्यां वरीवर्ति । बकवती–

---

(25) 4–21, 22, 7–1399 । (26) 1–61 ।
(27) 7–1225 । (28) 1–61 । (29) 5–109 ।
(30) 6–48, 7–1232, 8–2416, 2967 ।

चन्द्रकुल्यापगे प्रथम-तरंगे उल्लिखिते स्तः[31], अवन्तिवर्मापि सिंचनाय कुल्यानां निर्माणमकार्षीत् ।[32]

**जलबन्धाः**—जलसंग्रहाय जलबन्धाः, सेतवो वापि व्यधीयन्त । तेषां निर्माणं प्रायेण प्रस्तरैरेवाजायत । बन्धेभ्य एव लघुकुल्या निरगच्छन् विविधमार्गेषु ।

दामोदरो नाम नृपतिः प्रसिद्धमेकं गुद्द-सेतुबन्धयत् तत्र चाम्भः प्रतारणमकार्षीत् [33]। अन्यानपि नैकान् प्रस्तरसेतून् निर्माय भूपतिः, तोयविप्लवशान्तिं च विधाय संगृहीतेन पयसा सिंचनव्यवस्थां सुदृढ़ामकार्षीत् ।

**'दीर्घानश्मपमयान् सेतून् तोय-विप्लव-शान्तये ।' ।।1–159।।**

सुय्यो नाम विख्यातो यन्त्रकः (इंजीनियरः), नैकसेतून् निर्माय वितस्ताया निर्मलं पयः संगृह्य च विविधान् जलप्रवाहमार्गान्, कुल्याप्रभृतीन् च निर्मितवान् । वितस्तायाः प्रवाहान् च नूतनान् व्यधात्[34] । सुय्यपुरनगरं स विरच्य ततः अनतिदूरे, महाजलाशय समीपे (अद्य वूलर लेक इति प्रसिद्धं) शैलमयान् सेतून् बद्ध्वा सप्तयोजनीं वितस्तां नियम्य तस्या वारि, परिहासपुरसमीपे च यथेच्छं परिवर्त्य, इतस्ततः प्रावाहयत्, सुय्यस्य प्रयत्नेन कुंडाकारैः सेतुभिश्च तद्देशस्य भूमिः अन्नैः समृद्धिं प्राप्य, कुंडलानीति प्रसिद्धिं प्राप[35] ।

**कूपादयः**— अपि च स्थाने 2 कूपाः, तडागाः, सरोवराणि, वाप्यश्च क्षेत्राणां सिंचनाय निर्मीयन्ते स्म । कविः बहुशस्तेषामुल्लेखं चकार ।

**वैज्ञानिक-विधिः**—कृषिभूमेः जलशोषणशक्तिज्ञानाय वैज्ञानिक-विधिः प्रायुज्यत । सुय्यः समानाकृतिषु नैकभाण्डेषु, प्रदेशस्य विविधभागानां सममात्रां मृदमुपाहृतवान्, समानमात्रमेव च जलं प्रत्येकं मृत्तिकापूरिते पात्रे चिक्षेप, मृत्तिकायाः जलशोषणसमयं च जज्ञौ । शोषण-समयस्य च अनुसारमेव पुनः सिंचनास्यावश्यकतां ज्ञात्वा कुल्याश्च निर्माय, यथेच्छं जलं क्षेत्रेषु प्रेषितवान् । अनेन चानुसन्धानेन यत्राधिकं जलमपेक्ष्यत तत्र सत्वरमेव जलं प्रैषयत् । इत्थञ्च अचिरादेव तस्य भूमिः शस्य-श्यामलाजायत । यस्याश्च भोगः पश्चात्वर्तिभिः नृपैः कृतः[36] ।

**वृष्टिः**—कुल्या-जलाशय-कूप-तडागप्रभृतीनि साधनानिं तावत् कृत्रिमाण्यासन् । सिंचनस्य प्रधानं साधनन्तु वृष्टिरेवाभवत् । कृषकाः वृष्टेः प्रतीक्षायां समुत्सुका अतिष्ठन् । तथापि अनावृष्टेः दुर्भिक्षाच्च त्राणाय सिंचनाय नैकविधसाधनानामुपयोगो

---

(31) 1–329, 318 । (32) 5–110, 11, 12 ।

(33) 1–156, 57 । (34) 5–91, 92, 95 ।

(35) 5–102, 3, 4, 6 । सुय्यपुरमेव सम्प्रति सोपुर इतिप्रसिद्धं तन्नगरं, वितस्ताया परिवर्तितः प्रवाहश्च मया कश्मीर-यात्रायां दृष्टः 1967 खीष्टाब्दे ।

(36) 5–109, 10, 11, 12, 5–121 ।

व्यधायि । साम्प्रतमिव तदानीमपि वर्षे द्विवारं कृषिरभूत् । एका तु वृष्टौ आधृतासीत् । अपरा च कृत्रिमसाधनेषु । इदानीं खलु अयं कृषिक्रमः "खरीफ-रबी" इति निगद्यते । कृत्रिमसाधनैः सेच्यमानानि क्षेत्राण्येव अदेवमातृकाणि, नदीमातृकाणि वा, वृष्ट्या सेचनयोग्यानि च देवमातृकाणि न्यगद्यन्त । वृष्टेरभावे तु कदाचित् भयावहाः प्राणघातकाः दुर्भिक्षविप्लवा अप्यजायन्त । बहवो ननु एतादृशा दुर्भिक्षा कल्हणेन वर्णिताः सन्ति । द्वितीयतरंगे तुंजीनराज्ये वर्णितः दुर्भिक्षः भीषणतमः अभूत्[37] ।

**भूमि-विभाजनम्, अन्नसम्पच्च**— उपयोगदृष्ट्या भूमिः चतुर्षु भागेषु विभक्ता-भूत् ।

(1) **निवासभूमिः**—यत्र खलु नगरग्रामादयो निर्मीयन्ते स्म । (2) **कृषि-भूमिः** (क्षेत्रम्) (3) **गोचरभूमिः** (शाद्वलम्), (4) **वनप्रदेशश्चेति**—अस्मिन्नेव उषराभूमिरपि गण्यते । सर्वविधायाः भूमेः स्वामी राजा एवाभवत्, अत एव स भूपतिः, भूमिपतिः पृथ्वीपतिः इत्यादिसंज्ञां प्राप । प्रजाभिः राज्ञे दीयमाना बलिरपि भूमौ राज्ञः प्रभुत्वं सूचयति । कृषिभूमिः खलु क्षेत्रम्, केदार इति वा न्यगद्यत । "**पाकोन्मुखः शरच्छालिछन्नकेदारमंडले**' 2–18 ।।

क्षेत्रस्य केदारस्य वा वृक्षवृक्षकाणां शोधनान्तरं भूमिकर्षणं व्यधायि । दुरात्मभिः कृषकैः निर्दयः ताड्यामानानां ग्रीष्मसंतापतप्तानां वृषभानां दीनदशायाः मार्मिकवर्णनं राजतरंगिण्यां विद्यते । हलेन लांगलेन वा कृष्टा क्षेत्रपंक्तिः सीता अकथ्यत ।[38]

क्षेत्रेषु बीजारोपणं प्रायेण वर्षर्तावभूत् । तस्मिन् समये चारोपितं बीजं फलीभूतमभवत् । शनैः शनैः सततं वर्धमानं, असंख्यवृक्षकजातमन्नश्रियं दधौ, तत्चात्र **फलसंपत् फलश्रीः** (स्फीतां फलश्रियम्) वा न्यगद्यत (**दृष्ट्वापि फलसंपदं**)[39] । अस्यां फलसंपदि गण्यमानेष्वन्नेषु "चावल" इत्याख्यं सुप्रसिद्धमन्नं बाहुल्येनाजायत । तस्यैव धान्य-सस्य-शालि-व्रीहि-नीवारप्रभृतयः प्रधानभेदा अभूवन्[40] । एतदतिरिक्तं हिंगु-तिल-प्रभृतीन्यन्नान्यपि बाहुल्येन उत्पन्नान्यभूवन् ।[41]

धान्यकृषिः संवत्सरे द्विधाभूत् । प्रथमा शरदि (**शरच्छालिछन्नकेदारमंडले**)[42], तस्याश्च पक्वमन्नं कार्तिकमासे छिद्यते स्म । कृषकाः कृषिकर्मणि कुठार-कलश-कुम्भ-क्षुर-खनित्र-टंक-दात्र-परशु-पिटक-लांगलशूल-हलप्रभृतीनां प्रयोगं चक्रुः ।

**अन्नदृष्ट्या**— राजतरंगिण्यां चित्रितं भारतमतीव समृद्धं दृष्टिगोचरं प्रतिभाति । पक्वान्नानि छेदनोत्तरं खलस्थानेषु (खलिहान इति भाषायां) स्थाप्यन्ते

---

(37) 2–17, 54 । (38) 1–235, 38 ।
(39) 1–235, 39 । (40) 1–234, 33, 2–18, 8–1449, 7–496 ।
(41) 7–283, 3–426 । (42) 2–18 ।

स्म तत्रैव स्वच्छानि व्यधीयन्त। खलाधानस्य रक्षकः खलपालो न्यगद्यत। **(खलपालस्य तनयः)**[13] कदाचित्तु खलपालानां प्रमादात् खलस्थानेषु वह्निरुद्दीप्यते स्म। न च शमं प्राप[44]। पक्वानां शोधितानाञ्चान्नानां रक्षका सस्यपाला ग्रभण्यन्त। पक्वान्न-सुरक्षायै ग्रन्नभंडारान् राजानश्चक्रुः **(पच्यमानानान्नभाण्डान्तः)**, सर्वधिस्यान्नस्य संग्रहस्तत्र व्यधायि। **(स्वसंचितानि सोऽन्नानि)**[45]। संचितस्यास्य सदुपयोगः दुर्भिक्ष-समये बभूव। सुस्सलः दुर्भिक्षकाले संचितमन्नं वितीर्यैव जनानां प्राणरक्षां व्यदधात्। जातुचित्तु ग्रन्नागारे निभृतमन्नं दैवात् वह्निनिर्दग्धमभवत् तेन च घोरः दुर्भिक्षः समजायत।

"वह्निनिर्दग्धसर्वान्न-संभारे मण्डलेऽखिले।
दुःसहः सहसैवाथ घोरो दुर्भिक्ष ग्रायया ।।8–1206।।

इथञ्च कृषिप्रधानं भारतीयानां जीवनमासीदिति सम्यक् निश्चीयते।

**उद्यानानि**—ग्रसकृत् रमणीयोद्यानानां वर्णनं वयं कह्लणकृतौ पठामः। प्रत्येकस्मिन् चोद्याने विविधफलानां पुष्पाणां च समृद्धिः दृष्टिगोचरा भवति। फलेषु द्राक्षाफलं प्रसिद्धतममभूत्। ग्रन्यानि नारिकेलरम्भादीनि फलानि चापि वर्णितानि।

**पशुपालनम्**—कृषिः पशुपालनञ्चान्योन्याश्रितं बभूव। पशुप्रधाना ग्रामाः पुरा घोषा इत्यभिधीयन्त। पशूनां पालकाः पशुपालकाः ग्रभण्यन्त। नैकेषां पशुपालानां वर्णनं वयं पठामो राजतरंगिण्याम्।........**पशुपालः पशूनिव ।।8–1408।।**

विन्यस्य पशुपालानां पशूनिव स तान्करे ।।7–15–18।।

प्रायेण प्रत्येकं परिवारे कश्चिदेकः पशुः पाल्यते स्म। पशुधनं राष्ट्रियधनम-मन्यत।

पशूनां क्रयविक्रयव्यवसायः ग्रपि प्रसिद्धः ग्रासीत्। कविरभिदधाति यत् परि-हासपुरे द्वौ उद्योगौ विख्यातौ ग्रास्तां, वस्त्रोद्योगः, पशूनां क्रयविक्रयोद्योगश्चेति—

"ख्यातिहेतुः पट्टवानं पशूनां क्रयविक्रयौ" ।।5–162।।

ग्रनेन च पशुरक्षणप्रवृत्तिः ज्ञायते। ग्रपि च पंचम-तरंगे "**न तापसाः पुत्र-दारपशुधान्य-मढौकयन्** 6–10। इति पदेनापि पशुसंग्रहस्य सूचना प्राप्यते। इमे च पाल्या पशव ग्रासन्।

**गौः**—पशुपालने सर्वाधिकमहत्त्वं गवां पालनस्यासीत्। न केवलं ग्रामक्षेत्रे एव ग्रपितु नगरेष्वपि गावः सामोदं पाल्यन्ते स्म। ग्रसकृत् वयं ब्राह्मणेभ्यो गोदान-स्योल्लेखं पश्यामः। तदेतच्च गवां पालनस्य तन्महत्त्वस्य च सूचनां प्रयच्छति। गौः खलु दीन्नारवत् विनिमयसाधनमवर्तत, तत्कालीनस्य भारतस्य। सा हि सर्वकामानां

---

(43) 8–1245। (44) 8–221।
(45) 1–233, 37, 1–238, 8–61।

पूर्णाकर्त्री कामधेनुः अमन्यत अभाष्यत च। तत्त्यागिनश्च मूर्खा अमन्यत[48]। गवां विचरणाय विशेषस्थलं बभूव। चरकाख्यं तत्स्थानं, कविना अष्टमतरंगे उल्लिखितम्। "चरके धर्मधेनूनामुत्तब्धेऽपि तदाश्रिते" 8–2226। गवां स्वच्छन्द-विचरणाय गोकुलान्यपि निर्मीयन्ते स्म। रत्नादेवी एकं गोकुलं निर्मितवती[49], तदनन्तरं च शूरवर्मप्रभृतयो नरपतयो गोकुलानां कर्तारः बभूवुः। "**गोकुलानां विधातारः**[50]। यत्र खलु तत्पालन-पोषणाय जना नियुक्ता बभूवुः[51]। गवां वृषाणां च रात्रौ विश्रामाय गोष्ठा अभूवन्"।

**गोष्ठात् वृद्धोक्ष इव निर्ययौ। 7–1268॥**

गवां पालकः गोपालः गोपालको वा निगद्यते स्म "**वह्निगोपालकोऽप्येकः कारतज्य-प्रवणोऽविशत्**"॥ 8–2236॥

गवां दुग्धमतीव पुष्टिकरममन्यत साम्प्रतमपि च मन्यते। ततो ननु नवनीतं, घृतञ्च प्राप्य भुज्यते स्म। यज्ञादिषु च प्रायुज्यत। दुग्धस्यैव दधि तक्रं च लभ्यते स्म। सर्वं तत् अतीवपुष्टिकरमभवत् अद्यापि च तथैव मन्यते।

**अजाः**—अजा अपि परिवारेष्वपाल्यन्त। तासां पालनं केषाञ्चित् व्यवसायः अभूत्। किन्तु गाः विसृज्य, अजानां पालनं नोचितममन्यत। **कामधेनुं विनिर्धूय छागकण्ठग्रहे ग्रहः॥**" इति एकस्मिन्नेव पद्ये अजापालनसूचना लभ्यते। अजानां दुग्धमद्यापि भारतवर्षे पीयते। स्वास्थ्यकरञ्च तत् मन्यते।

**महिषपालनम्**—"केषांचित् महिषपालानामुल्लेखः कल्हणकृतौ प्राप्यते।"

"**तुंगाख्योऽविशत् महिषपालकः**" ॥**6–318**॥

एतेन महिषमहिषीनां पालनमपि भारतदेशे अभवदिति निश्चीयते। अद्यापि तेषां पालनं समस्ते अपि देशे बाहुल्येन भवति पुराकालवत् अद्यापि दुग्ध–नवनीत–धृत–लाभाय परिवारा महिषीः पालयन्ति। महिषास्तावत् शकटवाहनमपि चक्रुः। अद्यापि च तादृशः प्रयोगस्तेषां विधीयते। महिषमहिषीनां रक्षणाय महिषशाला अभूवन् तत्रस्था महिषपालकास्तद्रक्षणमकार्षुः। "**स हस्तिमहिषादीनां शालाः सैन्यैरदाहयत्॥7–772॥**

**अश्वः**—अश्वः अपि लोकप्रियः, पाल्यः पशुरासीत् अयं हि यातायाते, रथे रणे च सर्वाधिकमुपयोगी बभूव। युद्धस्य चतुरंगिण्यां सेनायां अश्वसेना सर्वोत्कर्षेण व्यवराजत। रथसैन्ये अपि अश्वा एव नियोज्यन्ते स्म।

अश्वाः खलु काम्बोजस्य प्रसिद्धा आसन् तत एव च आययुः। तेषां क्रय-विक्रयः अपि भारते, इतरदेशेषु च अभूत्। अद्यापि च भवति। (5–162)।

---

(48) 7–1268। (49) गवामव्याहतस्वैरसंचारचरकांचिते 8–2436, 37।
(50) 8–2335। (51) 7–772।

**विडालः**—मूषकेभ्यः अन्नादिनां त्राणाय विडाला अपाल्यन्त अद्यापि च पाल्यन्ते । तेषां खाद्यं मूषकाः मत्स्यरसश्चाभूत्, दुग्धघृतमपि च ते अभुञ्जत[52] ।

**गर्दभः**—भारवाहने गर्दभस्य प्रयोगः पुराकालादद्यावधि प्रचलितो वर्तते ।

**वन्यपशवः**—वन्यसम्पत्तिरपि भारतसमृद्धौ सहायिकाभूत् । वनस्य पशवः अपि सम्पत्तिभूता अमन्यन्त अत एव तेषां वन्य-जीवानां रक्षायै प्रयासा व्यधीयन्त । सिंह–व्याघ्र–चित्रक–हिरण–शश–शृंगाल–प्रभृतीनामुल्लेखो विद्यते कल्हणकृतौ ।

**हस्ती**—गजेन्द्र–गज–द्विप–द्विपेन्द्र–प्रभृति–नामभिः प्रसिद्धः हस्ती अपि भारतवर्षे पाल्यते स्म बाहुल्येन । अद्यापि च तेषां पालनं बाहुल्येन जायते वाहनरूपे हस्तीनामुपयोगो बभूव, प्रायेण राजानो गजानारुह्य नगरावलोकनं चक्रुः । युद्धक्षेत्रे अपि हस्तिनां महानुपयोगः अभवत् । सेनाया अङ्गेषु हस्तिसेना अतीव महत्त्वपूर्णा अमन्यत ।

हस्तिनां विश्रामाय निवासाय च अद्यवत् पुरापि हस्तिशाला अभवत् । वन्यपशूनामुल्लेखः राजतरंगिण्यां बाहुल्येन वरीवर्ति ।

## विविध-व्यवसायाः

पूर्वं खलु केचित् प्रसिद्धा उद्योगा सूचिताः सन्ति । तेभ्यः अतिरिक्तं भारत-वासिनः नैकलघुव्यवसायेषु निरता अभूवन् । तेषामत्र सनामोल्लेखं संकेतमात्रं प्रस्तूयते विस्तारभिया ।

| व्यवसायी | व्यवसायः कार्यम् च | संकेतः |
|---|---|---|
| 1. युग्यवाहः | कहार इति भाषायां शिविकाया वाहकः | 6–264, 7–25, 481 |
| 2. पुरोहितः | पौरोहित्य-कर्म-सम्पादकः यज्ञ-संस्कारादिः कारकः विप्रः । | 6–13, 7–246 |
| 3. मौक्तिकः | मुक्तामणीनां छेदकः, आभूषण-कर्त्ता च | 7–1576 |
| 4. वणिक्-गणनाध्यक्षः | वणिजां व्ययादिलेखकारकः | 6–36 |
| 5. गणनाध्यक्षः | 'मुनीम' इति भाषायां प्रसिद्धः | 6–37 |
| 6. मालिकः | पुष्पताम्बूलपत्रादिविक्रेता | 6–19 |
| 7. कार्तान्तिकः | भविष्यक्ता ज्योतिषी इति | 6–13 |
| 8. भिषक् | रोगापहारकः वैद्यः | 7–282 |
| 9. दूतः | संदेशवाहकः, गूढ़चरः, राजसेवकः | 6–13 |

(52) 8–139

| | | |
|---|---|---|
| 10. मन्त्री | राज्ञः, शासनकार्ये प्रधान-सहायकः अमात्यः | 6–13 |
| 11. स्थेयः | न्यायाधीशः हाकिम इति भाषायाम् | 6–13 |
| 12. गुरुः | शिक्षा-प्रदाता, अध्यापकः | 6–13, 7–282 |
| 13. लेखकः | लिपिकारकः, भाषायां 'कलर्क' इति | 6–13 |
| 14. सेवकः | सेवाकारकः किंकरः | 7–90 |
| 15. भृत्यः | गृह-कार्यसम्पादकः सेवकः | 7–89, 90 |
| 16. आपूपिका | पूपिकाकर्त्री विक्रेत्री च माल पुआ-पूरी इति भाषा | 7–111 |
| 17. पर्णप्राप्ति-देशिकः | विदेशे देशे च स्थित्वा ताम्बूल-पर्णानां स्थाने स्थाने प्रेषकः विक्रेता च पुरुषः | 7–193 |
| 18. रोचकः | कलशप्रभृतीनां काचवस्तूनां निर्माता | 7–192 |
| 19. नागरखंडादिचूर्ण–विक्रयी | पान-सुपारी प्रभृतीनां भाषायां प्रसिद्धानां वस्तूनां विक्रेता | 7–194 |
| 20. धूपचन्दनतेलादि–विक्रेता | प्रख्यातानामेतेषां वस्तूनां विक्रय-कर्त्ता | 5–168 |
| 21. बालभंजकः | केशश्मश्रुवपनकर्ता (नाई इति भाषा) | 6–100 7–203 |
| 22. नापितः | नखकेशविच्छेदकः, क्षौरकर्म-सम्पादकः | 7–665, 666 |
| 23. कारुः | यन्त्रैः शिलासु कार्यकर्त्ता | 1–363 |
| | भवनादिनिर्माणकर्ता, शिल्पी | 8–493 |
| | मन्दिर-शिवलिंगादिनिर्माता च | 3–439 |
| 24. वाजिविक्रेता | अश्वानां क्रय-विक्रय–व्यवसाय-कर्ता | 8–493 |
| 25. कर्मकृत् | श्रमिकः (मजदूर इति भाषायाम्) | 5–441, 90 |
| 26. भारवाहकः | 'बेगार' इति भाषायां, कर्तारः | 5–172 |
| 27. ग्रामस्कन्दः | जमींदार इति भाषायाम् | 5–175 |
| 28. कायस्थः | लिपिकारकः चतुरधीः लेखकः कलर्क इति भाषायाम् | 5–175 |

| | | |
|---|---|---|
| 29. शिल्पी | शिल्पकला कुशलः, मूर्तिप्रभृतीनां निर्माता, ताम्रपत्रेषु, स्वर्णारोपणकारकः | 7–529 3–449 |
| 30. स्थपतिः | रथनिर्माता भवनकर्ता च | 3–351 |
| 31. शाकटिकः | शकटचालकः, (गाडीवान इति ख्यातः) | 8–727 |
| 32. लेखहारकः | पत्रवाहकः (डाकिया इति भाषायाम्) यद्वा-लिखित-संदेशवाहकः | 6–319 8–1813 |
| 33. विक्रयकारी | जौहरी इति भाषायाम् रत्नादिविक्रयकर्ता | 7–509 |
| 34. काष्ठागारी | काष्ठहारः लकड़हारा इति भाषा | 7–1727 |
| 35. कुम्भदासः | जलपूर्णकुम्भवाहकः (कहार इति भाषा) | 3–456 |
| 36. कुम्भकारः | मृत्तिकया कुम्भकलशादिनिर्माता | 3–114 |
| 37. कुलालः | कुम्भकारः—कुम्हार इति भाषा | 3–106 |
| 38. कुलाली | कुम्भकारगेहिनी कुम्हारिन इति भाषायाम् सा वै निर्मितं कलशकुम्भादिभाण्डं विक्रयाय नगरे निनाय । | 3–107, 108, 109, 120 8–138 |
| 39. कुम्भदासी | कुम्भदास-पत्नी | 8–1727 |
| 40. गायनः | गायकः, गीतैः जनानां मनोरंजकः | 7–613, 1098 |
| 41. अन्धगान्धर्विकः | प्रज्ञाचक्षुः गायकः | 7–299 |
| 42. कुठारिकः | कुठारेण, वृक्षकाष्ठछेदकः, विक्रेता, काष्ठवस्तु-निर्माता च | 5–311, 8–2509, 7–309 |
| 43. सौनिकः | पशून् निहत्य तेषां मांस-विक्रेता कसाई इति ख्यातः | 3–6 7–39 |
| 44. वणिक् | वाणिज्य-कर्ता | 7–39, 8–127, 131 |
| 45. आरामिकः | उद्यानपालः, फलपुष्पविक्रेता माली, (बागवान इति भाषा) | 7–39 |
| 46. यामिकः | नक्तं गृहादीनां रक्षकः, (पहरेदार इति भाषा) | 3–173 6–77 |

| | | |
|---|---|---|
| 47. पद-कृत् विपादिकाकृत् | उपानह्-निर्माता, (चमार इति भाषा | 7–282 3–137 |
| 48. चर्मकृत् | उपानह्-दृति-कवचप्रभृतीनां चर्मवस्तूनां निर्माता | 8–137 |
| 49. रजकः | वस्त्रप्रक्षालकः, (धोबी इति ख्यातः | 7–182 |
| 50. वैद्यः, रोगहृत् | औषधिप्रदानेन, आरोग्य-कारकः, भिषक् | 7–11–13 6–68 |
| 51. ग्रामदैवज्ञः | अल्पज्ञाता, मूर्खो दैववित् (ज्योतिषीति भाषा) | 7–295 |
| 52. दैववित् | अमोघप्रत्ययः, सत्यज्ञाता, भाग्य-वेत्ता, भविष्यवक्ता ज्योतिषीति | 3–440, 485 7–1182 |
| 53. गणकः | गणना-द्वारा, स्वप्न-शकुन-ज्ञाता, गणितज्ञः, भविष्यवक्ता | 8–103 |
| 54. कार्मण-कर्मवित् | इन्द्रजाल-ज्ञाता, (जादूगर इति भाषा) | 6–79 8–59 |
| 55. छत्रग्राहकः | आतपवारणाय राजोपरि छत्रग्रहणकर्ता | 7–1057 |
| 56. परगृहप्रेष्या | अन्येषां गृहेषु गत्वा सेवाकर्त्री दासी, नौकरानीति भाषायाम् **'जीवन्ती प्रेष्यात्वेनान्यवेश्मसु'** | 7–1414 6–21 |
| 57. शैलूषः | शोकभयादीनां भावानामभिनेता नटः | 7–1413 |
| 58. चण्डाली | मेहतरानी भंगन वा इति भाषायाम् **"रथ्यारजः पुंजं सम्मार्जयन्ती"** | 5–74 |
| 59. वन्दी | स्तुतिपाठकः | 3–74 |
| 60. शय्यापालः | राज्ञः शय्याया अलंकर्ता रक्षकश्च | 8–1324 |
| 61. भारिकः | भारवाहकः, कुली इति भाषा | 8–263 |
| 63. कैवर्तबन्धकी | धीवरवेश्या, स्वशरीरविक्रयेण जठरपालिका | 7–405 |
| 64. नाविकः | नौयान-चालकः | 7–1625 |
| 65. सूदः | सूपकारः, (रसोईया इति भाषा) | 7–1623 |

| | | |
|---|---|---|
| 66. धीवरः | मछेरा इति भाषा | 8–2902 |
| 67. ग्राहः | झषानां ग्राहकः, विक्रेता च | 8–2313 |
| 68. मान्त्रिकः | मन्त्रैः पन्नग-ग्राहकः (सपेरा इति भाषा) **'तास्ताः स्वेच्छा-नुसारेण मान्त्रिकः पन्नगीरिव** | 5–102 |
| 69. आहितुण्डकः | सर्पाणां क्रीडा-प्रदर्शकः उपायैः | 3–39 |
| 70. व्यालग्राही | सर्पग्राहकः सपेरा इति भाषा | 8–3028 |
| 71. कर्षकः | हलचालकः, कृषकः | 3–21, 22 |
| 72. पट्टवान् | तन्तुवायः (जुलाहा इति भाषा) | 5–162 |
| 73. कुविन्दः | वस्त्र-निर्माता इति भाषा | 8–283 |
| 74. सार्थवाहः | 'बनजारा' इति ख्यातानां जनानां नायकः (बंजारों का मुखिया | 8–2397 |
| 75. मणिपरीक्षकः | रत्न-मणिपरीक्षणकर्ता | 3–305 |
| 76. गोपालकः | गवां पालकः गोपालः (ग्वाला) | 8–2226 |
| 77. वागुरग्रन्थी | रशना-जालादि-ग्रथकः **('ग्रथ्नता दीर्घवागुरान्')** | 8–1730 |
| 78. अट्टसूदः | विपणिषु, रथ्यासु च इतस्ततो भ्रमित्वा खाद्यादि-पदार्थानां विक्रेता वर्तमानकाले यथा 'ठेलेवाला इति भाषायां प्रसिद्धस्तथैव | 8–316 |
| 79. दन्तियन्ता | महावत इति भाषायाम् | 7–1074 |
| 80. सैनिकः | सेनायां सेवाकारकः | |

## यातायात-साधनानि

**स्थल-मार्गः**—कस्यापि राष्ट्रस्य समृद्धिः यातायातस्य शीघ्रगामिषु साधनेष्वाश्रिता भवति। कल्हणेन चित्रिते भारते खलु तानि साधनानि समृद्धानि बभूवुः। तेषु दिवसेषु आवागमन-मार्गेषु स्थलमार्गा एवाधिकं प्रायुज्यन्त। प्रत्येकं नगरे ते मार्गा अतीव समृद्धा आसन् ('ऋद्धापणं राजपथैः')[53] विस्तीर्णानां सुव्यवस्थितानाञ्च तेषां मार्गाणाम् सावधानतया निरीक्षणं शोधनञ्च प्रत्यहं व्यधायि। ते वै मार्गाः प्रायेण मृत्तिकामया अभूवन्। उत्सव-समये राजमार्गाणां विशेषालङ्करणमक्रियत। मालाः पुष्पाणि च तत्र विकीर्यन्ते स्म।

(53) 1–201

एकं नगरं, नगरान्तरेण,ग्रामं वा ग्रामान्तरेण सह-संयोजनाय दीर्घ-मार्गा अपि आसन् यत्र रथ-शटकादयः ससुखं ययुः । वस्तुतः तदानीं भारतस्य समे अपि प्रान्ताः समृद्धमार्गैः सम्बद्धा अभवन्, यत्कारणाच्च यातायातः परस्परं वाणिज्यञ्च बाहुल्येन बभूव ।

नद्याद्युत्तरणाय सेतव आसन् । अनेकेषां प्रस्तरसेतूनां राजतरंगिण्यामुल्लेखो वरीवर्ति ।[54] तेषां निर्माणस्यापि विद्यते वर्णनम् । राजा दामोदरः अद्भुतमेकं गुद्दसेतुं निर्ममे ।....."**आदिश्य गुह्यकान् दीर्घम् गुद्दसेतुमबन्धयत्**"--1-156 । अन्यानपि नैकान् प्रस्तरैर्निर्मितान् सेतून् स चकार "**दीर्घानश्ममयान् सेतून् चकार** ।[55]

सेतवः नौभिरपि निर्मीयन्ते स्म । प्रवरसेनः एतादृशमेकं विशालं सेतुमकरोत् तत्कारणादेव नौ-सेतूनां निर्माणं ख्यातं बभूव ।

वितस्तायां स भूपालो वृहत्सेतुमकारयत् ।
ख्याता ततः प्रभृत्येव तादृङ् नौसेतुकल्पना ।। 3-354, 8-1182

मंखमालवप्रभृतयः राजमन्त्रिण **विविधसेतु**-निर्मातारो बभूवुः (**सेतोः कारकाः**) 3-483 ।

सुय्यो नाम यन्त्रकोऽपि सेतुमकार्षीत् । ' **सुय्यसेतुं स निर्ममे** । 5-120 ।

**साधनानि** —भारते यातायात-साधनानि 'यान' इत्यभिधीयन्त ।[56] सर्वविधं यानञ्च मनुष्य-पशु-धनधान्यादीनां वाहने प्रायुज्यत ।

1. **रथः**—स्थलमार्गे सर्वोधिकमुपयोगि यानं रथ आसीत् । असकृदस्योल्लेखा राजतरंगिण्यामुपलभ्यन्ते । नागरिकाणां समराणाञ्चावश्यकतासु रथस्यानिवार्यम् स्थानमवर्तत । नागराणां दैनिक-कार्यकलापाः रथाश्रिता अभूवन् । त्रिविधः खलु आसीत् रथः ।

**औपवाह्य-रथः**—अयं किल अहोरात्रं वाहन-कार्येषु सामान्येन प्रयुज्यमानो रथः अभूत् । द्वौ अश्वौ प्रायेण तस्मिन् आस्ताम् ।

**सांग्रामिको रथः**—अयन्ननु संग्रामे प्रायुज्यत । द्वौ, चत्वारः अधिकाश्चापि वा तत्र तुरंगमा अभूवन् । तत्रैव विविधशस्त्राणि सुभटेन सममतिष्ठन् । तानि खलु पृष्ठभागे न्यवेश्यन्त । पुरोभागे च सारथी तस्थौ । तदन्तिकमेव योद्धातिष्ठत् । अस्मिन् रथे चक्रद्वयं व्यराजत ।

**पुष्परथः**—अयं रथः उत्सवादिषु विशेषावसरेषु प्रयुज्यते स्म । तदायं पुष्पादिभिः सम्यक् सुसज्जितः अभूत् । कदाचिच्च राजानो राजपुत्रा वा अमुमारुह्य नगरयात्रां चक्रुः ।

रथगमन-समये विशेष-ध्वनिरुद्ययौ स ध्वनिरपि नक्तं निद्राभङ्गञ्चकार । **'रथांगक्रन्दिनी रात्रिः'** 8-2612 । रथनिर्माणोद्योगः तदा भारते विख्यात आसीत् ।

---

(54) 1-156, 157, 159, 3-354, 483, 5-120 ।
(55) 1-159 । (56) 1-201 ।

2. **शिविकाः** —पर्वतीय-स्थलानां प्रधानं यानं शिविका युग्या ('युग्याधिरुढ़-मायान्तम्) वा आसीत् । कुलयोषितः, राजानश्च शिविकामारुह्य इतस्ततो जग्मुः ।[57] यानस्यास्य वाहकः शिविकावाहः युग्यवाहो वाभिधीयत ।........(**तुंगस्य युग्वाहैः सः**) ।[58]

3. **शकटः** — वस्तुवाहनकार्ये प्रयुज्यमानं यानं 'शकट' इति न्यगद्यत । वृषैस्तदनीयत ।[59] तस्मादेव शकटो 'गौरथ' इत्यपि संज्ञां प्राप । शकट-चालकः शाकटिकः तन्निर्माता च शिल्पी अकथ्यत (**शिल्पिशाकटिकैरपि** 8–727) ।

4. **पशवः**—भारवाहने वृषा अपि न्ययुज्यन्त (विटैर्हट्टवृषैरिव 8–2107) । अश्वाः ।[60] गजाः, गर्दभाः, उष्ट्राश्चापि स्थलमार्गे जनानां, वस्तूनां च वाहन-कार्ये प्रयुक्ता अभूवन् ।

**(ख) जल-मार्गः**—स्थलमार्ग इव जलमार्गः अपि देशसमृद्धौ महान् सहायक आसीत् ।

**नौः**—जल-मार्गे प्रधानं यानं[61] नौः आसीत् "**नौभिः प्रतस्थे जलवर्त्मना**" **7–714** । नौचालकाः नाविकाः नौचरा[62] वा अकथ्यन्त ।

नौयानस्थानानां साधु संरक्षणाय रक्षका नियुज्यन्ते स्म । राजा अनन्तदेवः क्षीरभूप-प्रभृतीन् डामरान् तत्कर्मणि नियुयुजे ।[63] नदीसरोवरादियुक्तानि नगराणि नौयानैरधिकां शोभां दधुः '**नौयानोज्ज्वलनिम्नगम् 1–201** । 'प्रान्तानां नगराणां व्यापारः प्रायेण जलमार्गेणाभवत् व्यापारिणो ननु नौषु वस्तूनि निधाय, जलवर्त्मना दूरं सम्प्रेष्य व्यापारं चक्रुः । नाविकाः खलु नौषु भारवाहनाय, नदीपारं वा जनान्, भारञ्च च नेतुं धनं जगृहुः । '**आतरेष्वत्यये सेतोर्गृहीता षट्शती त्वया**' । **8–136**।

---

(57) 8–2625, 2663, 2664 । (58) 6–264, 7–25, 481 ।

(59) शकटानाभिवाग्रस्थः 8–2188 । (60) 5–19 ।

(61) 7–714, 1613, 1628 । (62) 7–1628 ।

(63) 7–358 ।

# राजनीतिक–जीवनम्

देशस्य संस्कृतिः समाजश्च सदैव राजनीत्या प्रभावितो भवति । भारतीय-संस्कृतिरपि राजनीतिप्रभावैः प्रभाविता सती नवीनानि रूपाणि प्राप्तवती । किन्तु भारतीय-संस्कृतेः समाजस्य वा वर्णनं कुर्वन्तोऽपि कोविदाः, राजनीतिं प्रायेण न स्पृशन्ति । तन्नोचितं मन्मते । राजतरंगिण्यां चित्रिता भारतीय-संस्कृतिः राजनीतिक-दशाभिः प्रभाविता दृश्यते ।

अस्मिन् समये भारते कस्यचिदपि एकच्छत्रं साम्राज्यं नासीत् । यद्यपि ललितादित्यप्रभृतिभिः दिग्विजयाय प्रयासः कृतः, सर्वत्र च जयश्रीरालिंगिता, तथापि तेषां राज्यस्य विस्तारः भारतस्य चतुर्षु दिक्षु आसीदिति न क्वापि ज्ञायते । भारतं खलु लघुराज्येषु विभक्तमासीत् । राजानश्च परस्परं युध्यन्त एव दृश्यन्ते । राजतरंगिण्याः कस्मिन्नपि राज्ये सुदीर्घः शान्तिसमयः न दृष्टिपथमायाति ।

**राज्याधिकारीः**– राज्ञः पदं कुलपरम्परागतमभूत् **(क्रमागतम् राज्यम्)** । पार्थिवे, पितरि मृते तस्य योग्यः अयोग्यो वा पुत्र एव राज्याधिकारं प्राप । प्रबन्धस्य **राजतरंगिण्याः राजवंशावलिः** इति तृतीये तरंगे अस्माभिः सम्यक् विलोकिता कुल-परम्परागत-राज्यपद्धतिः ।[1]

एकस्मिन् स्थाने कविः उच्चल-सुस्सल-मुखेन सूचयति यत् वीरभोग्या वसुन्धरा वर्तते, न तत्र वंशस्यावश्यकतास्ति । (7–1288) ।

युवराजपदस्याधिकारी प्रायेण ज्येष्ठस्तनयो बभूव । दयादाक्षिण्यादिगुणाः तस्मिन् अनिवार्या अमन्यन्त, अनुजः अपि राज्यं चेत् प्राप्तुमैच्छत्तर्हि अग्रजस्यानुमतिः अनिवार्याभूत् । कदाचित्तु ज्येष्ठतनयः अयोग्यतया स्वाधिकारात् पृथक् व्यधायि ।[2]

पुत्राभावे, ज्येष्ठपुत्रे अयोग्ये सति यद्वा षडयन्त्रेण तं निहत्य अनुजः युवराजो बभूव तदभावे च राज्ञी एव राजपदं प्राप । दामोदरे विपन्ने तत्भार्या यशोमती राज्य-सिंहासनमारुरोह । दिद्दा अपि पुत्राभावे चिराय शासनं कृतवती । प्रायेण स्त्रियः राज्यपदे प्रतिष्ठाया विरोधो व्यधायि ।

पुत्रे च समुत्पन्ने पुनः तस्मै राज्यमदीयत राज्ञा, आपन्नसत्वा राज्ञी यशोमती पुत्रे समुत्पन्ने तस्मै राज्यमदात् ।[3] भूपतौ बाले सति मन्त्रिणः तं सिंहासने उपवेश्य राज्यकार्यकार्षुः ।[4] रोगग्रस्ते नृपतौ अपि बालस्य अभिषेकः अभूत् ।

---

(1) 1–351, 83, 8–3332 ।

(2) 7–899, 5–22, 129, 30, 96, 151, 8–387, 88, 289 ।

(3) 1–70, 71, 75, 76, 78 । (4) 1–81 ।

सुतस्य अभावे प्रपौत्रः सिंहासनास्याधिकारी आसीत्। शचवीनरे अपुत्रे मृते तत्प्रपौत्रः राजाभवत्।[5] प्रपौत्राभावे च कश्चिदपि राज्ञः वंशस्य पुरुषः राज्याधिकारं लेभे। राज्ञः तनस्य, प्रपौत्रस्य वाभावे, राज्ञी-वंश्यः राज्यं प्राप। कदाचित् राज्ञाः भ्राता राजा बभूव।[6] कदाचित् निःसंताने नृपतौ दिवंगते अन्पवंशीयः राजा बभूव। खगेन्द्रे मृते अन्यवंशीयः गोधरः नृपतिरभूत्। तुंजीने स्वर्गङ्गते च इतरवंशीयः भुवं शशास।[7]

क्वचित् राज्ञः वंशे, राज्ञाः वंशे वा योग्यस्य उत्तराधिकारिणः अभावे अन्य-देशात् राजा आनीयते स्म। अन्धयुधिष्ठिरे निष्कासिते तस्य मंत्रिणः राज्ञः विक्रमादित्यस्य वंशजं प्रतापादित्यं देशान्तरादानीय राजानं चक्रुः।[8] मातृगुप्तः अपि तादृश एव राजा आसीत्, यो वै, विक्रमादित्येन कश्मीरेषु शासनाय संप्रेषितः। राज-कार्ये पत्नी महत्सहयोगमदात् तुंजीनराज्ञी वाक्पुष्टा सर्वेकार्येषु भर्तुः सहायिकासीत्।[9]

राजतंत्रे राज्ये सत्यपि राज्ञः चयनमभूत्। स चाधिकारः प्रजानां, तासु चापि ब्राह्मणानां विशेषरूपेणासीत्। प्रजायाः इच्छया एव राजा नृपासनं प्राप्तुमशकत्। प्रजा एव कस्यापि राजपदे प्रतिष्ठायै प्रार्थनामकार्षीत्। सा एव कंचित् कुतश्चित् आनिनाय राज्यासने प्रतिष्ठापयितुम्। मेघवाहनः प्रजाभिरेव गान्धारेभ्यः आनीतः, अन्ये अपि तथाविधा आसन् राजानः।[10] अराजके राज्ये सति ब्राह्मणा मन्दिरादिषु एकत्रा भूत्वा, विचार-विमर्शं च कृत्वा मतभेदे सति, पौनः पुन्येन मिलित्वा सम्यक् विचार्य च उत्तराधिकारिणो निर्णयं व्यदधुः। तन्निर्णये सति राज्ञः अभिषेकमपि त एव चक्रुः।[11] उत्तराधिकारिणो निर्वाचने, राज्यपर्षदः, मन्त्रिणाञ्चापि परामर्शः गृह्यते स्म।[12] राजनि निर्वाचिते तस्मै राजतंत्रशिक्षा अदीयत सर्वप्रकारेण सः कुशलः व्यधायि (4–720, 5–157, 97)।

**राज्ञः प्रजायाश्च सम्बन्धः**—प्रजा खलु प्रकृति-प्रजा-विशपदेनाभिहिता। राजनि प्रजायां च घनिष्टः सम्बन्धः आसीत्। राजा खलु विशांपतिः (8–3241) प्रजापतिर्वा न्यगद्यत। कविः कथयति (1–331) यत् राजनि प्रजायां च पितृपुत्र-सम्बन्धो भवेत्। सा प्रजा राजानं देवमिव कल्पयेत् पितरमिव पूजयेत्। राज्ञी प्रजानां मातेव स्यात्। देवी इव सा पूज्या भवेत्। राज्यं खलु राज्ञः समीपे न्यासरूपमस्ति, न तत्केवलं भोग्यवस्तु विद्यते। (8–1451) दुर्गमो वर्तते राजमार्गः वृषभ इव अनलसः

---

(5) 1–101। (6) 7–1284, 85, 5–250, 52।
(7) 1–95, 2–62। (8) 2–5, 6।
(9) 2–11, 12। (10) 5–243, 2–3, 143, 59, 44।
(11) 5–457, 58, 61 से 64, 76, 77।
(12) 7–703, 6–159।

राजा तत्धुरां वहेत् (8–2101)। अतः प्रजानां न्यासस्य, प्रजानुरंजने एव राजा प्रयोगं कुर्यात्। प्रजाभिरेव निर्वाचितः राजा, ईश्वर इव ताभिः विलोकनीयः, कथञ्चिदपि स नैव दूषणीयः। तञ्चाधिदेवं मत्वा, प्रजा तस्मै धर्म-प्राण-धन-पुत्रादिकं सर्वस्वमपि दद्यात्। पौनः पुण्येन राजा प्रभुः देवः आदिशब्दैः आकारितोऽस्ति। यथा राजा तथा प्रजा इत्येव भवेत्, भवति च लोके।[13]

इत्थं च राज्ञः प्रजायाश्च सम्बन्धः पितृ-पुत्र-तुल्यः, देव-पूजक-तुल्यश्च भवेत्।

**राजा तस्य गुणाश्च**—प्रजा राजानं ईश्वरं मत्वा, पितरमिव वा मत्वा तस्मिन् अद्भुत-गुणानामाशां बबन्ध। सर्वगुणसम्पन्न एव जनो नृपति र्भवेदिति प्रजा अवांच्छत्। कीदृशः खलु भवेद्राजा, के तस्य गुणाः स्युरित्यत्र विषये बहुशः प्रयुक्तानि विविधानि पद्यानि, पदानि वा प्रकाशं पातयन्ति। कविमते राजा आकृत्या सुन्दरः, बलिष्टः हृष्टपुष्टांगः, आकर्षकः स्यात्। स वै विनम्रः धीरः, गम्भीरः विमृश्यकारी, पात्रापात्रयोः उचितानुचितस्य च विवेचकः, विवेकशीलः, गुणज्ञः, गुणप्रशंसकः, स्थितप्रज्ञः, त्यागशीलः, पुरुषार्थी, गुणवान्, वदान्यः, उदारधीः, शूरवीरः, कृतज्ञः, धर्मप्रियः, सत्यसन्धः, आत्मश्लाधाविरहितः, विद्याविक्रमसंयुक्तः, क्षमाशीलः, गर्वशून्यः, मनसा वाचा कर्मणा च सत्यवादी, सत्यकर्ता च, निस्पृहः, लोभशून्यः देव-मुनि-कोविद-गुरु-विप्राणां संरक्षकः तत्पूजकश्च, माहात्म्ययुक्तः प्रभुतासम्पन्नः, अचंचलः, सूर्यवत् तेजस्वी, वर्चस्वी, प्रतापी, नीतिनिपुणः शोर्यालंकृतः, सत्वगुणसहितः, आसक्तिशून्यश्च, स्यात्।[14] एतादृशः सर्वगुणसम्पन्नः नरपतिः स्वीयं प्रजानां च जीवनं सुखसम्पत्बहुलं करोति। इहामुत्र च शान्ति लभते। केचित् दुर्गुणाः अपि कविना इतस्ततो वर्णिताः सन्ति, येषां परित्यागः राज्ञे अनिवार्यो नाम। दम्भः, स्मयः, स्तम्भता, अप्रीतिः, अस्थैर्यम्, आलस्यं, लम्पटता, उच्छृंखलता, प्रजापीडनप्रवृत्तिः, लोभः इन्द्रियव्यसनानि, नैराश्यम्, द्रोहः द्वेषः एकाग्रचिन्तताया अभावः, दुर्नयः, दुराचारः, व्यभिचारः, अत्याचारः, दुश्चरित्रम्, भीरुता चेति दुर्गुणाः राज्ञः जीवनं कुलं राज्यञ्च विनाशयन्ति। एतेषां दुर्गुणानां कारणादेव नरो नाम नृपतिः सवंशः सराज्यश्च विनाशं प्राप। शंकरवर्म-

---

(13) 4–29, 7–1217, 8–3337, 3241, 2–143, 44, 49, 1–98, 331, 7–350, 8–1290, 5–47, 8–3218, 20, 24, 3345, 46, 47, 48।

(14) 4–51, 2–45, 70, 3–3, 134, 317, 136, 259, 135, 144, 8–2232, 3–314, 4–217, 3–201, 254, 258, 8–2725, 3–300, 4–77, 3–473, 318, 4–50, 59, 531, 5–4, 4–47, 489, 490, 500, 5–158, 189, 8–2083, 85, 86, 2378, 3196 1566, 2288, 3182, 3032, 1–271।

णश्च नाममात्रमवशिष्टम् ।[15] तस्मात् यथाशक्ति ते परित्याज्याः, त एव दुर्गुणाः प्रजानामधः पतनं कारयन्ति । राजनि दुर्गुणसंकुले सति यथा राजा तथा प्रजा इति नियमात् प्रजा अपि तथाविधाः स्युः, तासामवनतिः स्यात्, तत्र च प्रधानहेतुत्वेन उन्मार्गगामी राजा, इहामुत्र च दुःखमेव लभते, पापभागी स भवति । तस्मात् स्वदुर्गुणान् विदार्य सद्गुणान् च प्रसार्य भूपः भूमिं पालयेत् ।

**राज्ञः कर्त्तव्यम्**—गुणसम्पन्नः दुर्गुणशून्यश्च नरः एव राजा भवितुमर्हति । राजानः प्रायेण क्षत्रिया एवाभवन् । "**क्षत्रियाणां परो धर्मः प्रजानामेव रक्षणं**" इति स्मृतिवाक्यात् प्रजानां पालनं रक्षणञ्च राज्ञः कर्तव्यं ननु 'क्षत्रशब्दः' रक्षार्थमेव लोके प्रसिद्धः खलु, "**क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दः भुवनेषु रूढः**" इति कालिदास-वाक्यात् । राज्ञः लक्षणं कुर्वन् कालिदासो लिलेख '**राजा प्रकृतिरंजनात्**" अर्थात् प्रजानां रंजनादेव राजा राजाभिधीयते । तस्मात् प्रजानां विशानां वानुरंजनं, आह्लादनं संरक्षणमेव राज्ञां प्रधानं कर्तव्यमस्ति । प्रजापालनं राज्ञां न केवलं कर्तव्यं किन्तु व्रतमस्ति कल्हणमते, प्रजानां जीवनायैव राज्ञः जीवनमाश्यकं नो चेत् व्यर्थं तत् । तस्मिन् प्रजासु च पितृपुत्रसम्बन्धः स्यात्, स्वगृहमिव स प्रजानां पालनं कुर्यात् । तासां कष्टानि तत्कष्टानि, तासां सुखानि च तस्य सुखानि स्युः । तासां पालन-पोषण-रक्षणाय राजा प्राणानपि नैव गणयेत् । जनानां सुखे लाभे एव च तस्य जीवनं यायात् । राजानः प्रजापालनं धर्मम् मत्वा कुर्युः, ये राजानः प्रजाः पीडनपरा भवन्ति ते स्वस्य, कुलस्य चोच्छेदं कुर्वन्ति । क्वापि सुखं शान्तिं वा न ते प्राप्नुवन्ति । स्वकर्तव्यात् च्युतो नृपतिः दंड्यः वर्तते कविसम्मतौ । धर्मविरुद्धं किमपि कार्यम् न तेन करणीयम् । वेदस्मृतिप्रभृतिषु प्रतिपादितं स स्वधर्ममनुपालयेत् । यो वै धर्ममुल्लंघ्य प्रजाश्चेत् पीडयेत् तर्हि स भूपः राज्यासनात् अधः पातनीयः, अन्धः युधिष्ठरः उत्पलापीडश्च अनेनैव कारणेन राज्यात् च्यावितौ । राजा प्रजानां सुख-दुःख-ज्ञानाय विशेषं प्रयासं कुर्यात् । समस्ते अपि राज्य-मंडले गूढचरान् प्रेषयेत् प्रजादुःखानि ज्ञातुम् । उच्चलः सर्वदा स्वगुप्तचरान् इतस्ततः संप्रेष्य प्रजावृत्तं वेद तदनुसारञ्च कार्यमकरोत् । चरैरेव न किन्त स्वप्रयत्नैरपि जनोदन्तं विद्याद्राजा । कदाचित्तु प्रातः कालादारभ्य रात्रिं यावत् स्वयं भ्रमित्वा प्रजावृत्तान्तं तत्सुखदुःखानि च जानीयात् । उच्चलो नृपतिः अश्वमारुह्य स्वयमेव सर्वम् विवेद ।

प्रार्थिनश्चेत् द्वारे आगच्छेयुः किंचित् वक्तुं, तदा स्वयमेवापि कदाचित् तद्दुःखानि शृणुयात् । प्रतिहाराश्च प्रार्थिनामागमने बाधामुत्पादयेयुस्तर्हि ते अपि निस्सारणीयाः राज्ञा । प्रार्थिभिः सह राजा मधुरं भाषेत, तेषामभिलाषान् च यथाशक्ति

---

(15) 8–3194, 1977, 1962, 4–661, 1–363, 359, 366, 67, 68, 5–209 से 213, 191, 190, 188, 186, 164 4–672, 658, 401, 396, 398, 7–10 ।

संपूरयेत्–अन्यथा वा तान् तोषयेत् । कांश्चित् विश्वस्तान् सेवकानपि प्रजादु:खज्ञानाय नियोजयेत् । राज्ञ: दिनचर्या नियता भवेत् दिवसे, धर्मकार्यम्, राज्यं च कृत्वा प्रजादु:खमपि प्रत्यहं शृणुयात् । तेषां संशयान् दूरीकुर्यात् । भाषणे सुधावर्षी भवेत् । प्रजानां कृते सर्वविधोपयोगिवस्तूनां व्यवस्था राज्ञा एव करणीया । स खलु सर्ववर्ग-जनान् स्वस्वकर्मणि प्रेरितान् कुर्यात् । सर्वविधसाधनानि तेभ्य: दद्यात् । तेषां मनोरंजनाय, शिक्षायै च, प्रबन्धं कुर्यात् । ब्राह्मण-गुरु-देव-कोविदातिथीनां सदा पूजां कुर्यात् । रोगिभ्य: औषधव्यवस्थां कुर्यात् । कर्मशून्येभ्य: जीविका-साधनानि प्रयच्छेत् । तथा प्रयतेत यथा राज्ये शान्ति: स्यात्, तदर्थम् दंडव्यवस्थां सुदृढां कुर्यात्, दंड्यान् दंडयेन्नित्यं, अपराधिन: सत्कर्माणि कर्तुम् प्रेरयेत् । चौरेभ्य: हिंस्रकपशुभ्यश्च जनान् संरक्षेत् । जनकल्याणाय स्थाने-स्थाने प्रपा:, कूपान्, तड़ागान्, सरोवराणि, मन्दिराणि, उपवनानि, भवनानि च निर्माय मार्गान् मायायुक्तान् कुर्यात्, कंचिदपि पुरुषं जीविका-रहितं न कारयेत् नापि बुभुक्षया मारयेत् ।

विपदि समागतायां राजा स्वसर्वस्वं विहायापि प्रजानां सुखं चिन्तयेत् । विपद: अपहरेत् । **"आपन्नार्तिहर:"** प्रजानां विपदं चेन्नापहारयति राजा तर्हि तस्य नाशो निश्चितो ननु । आपत्सु प्रजापालनाय धनान्नसंग्रहं कुर्यात् । दुर्भिक्षे समुत्पन्ने कोषं, साधनानि, संचितान्नानि च प्रजासु वितरेत्, विपणौ, वने श्मशाने वा क्वापि कञ्चिदपि बुभुक्षितं न त्यजेत् । कश्चित् चेत् राज्ञ: प्रमादादेव मृत्युं प्राप्नुयात् तर्हि दोष: भूपतेरेव वर्तते । स एव पापभागी भवति । तं भूपतिं कवि: धिक्करोति य: स्वप्रजानां करुणाक्रन्दनं न गणयति, तद्दु:खे दु:खी न भवति, प्रजा: पुत्रवन्न पश्यति, निर्बलम् न रक्षति, साधुप्रकृति: राजा प्रजानां दु:खं वीक्ष्य मर्तुं द्यतो जायते, जन-रक्षणात् स पुण्यं प्राप्नुयात्, तत्प्रतापेन च विपद: उत्तरति । तुंजीन: नृपति: दुर्भिक्षे सति सर्वस्वं प्रजाभ्यो ददौ, अत एव अन्ततोगत्वा तत्पुण्यप्रतापेन विपद: निर्जग्मु: । स एव सफल: कृतकृत्यश्च नरपतिरस्ति यस्य राज्ये अकालमृत्यु: न स्यात् । प्रायेण विटा: पिशुनाश्च राजानमनुकुर्वन्ति छायावत्, तं च मार्गभ्रष्टं कुर्वन्ति । तेभ्य: सतर्क: भवेत् भूपति: । नियुक्तानां मन्त्रिणामुच्चाधिकारिणां च कार्यस्य विभागस्य चापि निरीक्षणं राज्ञा विधेयं येन ते खलु प्रजापीपीडनपरा: न भवेयु: ।

राज्यसिंहासन-प्राप्तिपूर्वम् स्वयं राजा सर्वविधां शिक्षां प्राप्नुयात् । गुरुभ्य:, सम्यगनुभवं च प्राप्य, तस्य प्रयोगं जनतासु कुर्यात् । स्वयमपि स पूर्वम् कष्टसहनाभ्यासं कुर्यात् तदैव स जनानां कुष्टानि ज्ञास्यति । जनेभ्यो यथायोग्यं सत्कारं दद्यात् । राज्यसभायां विदुषां गायकानां, नारीणाञ्च सम्मानं कुर्यात् स्वयं धर्ममनुसरेत् प्रजाश्चाप्यनुसारयेत् ।

इत्थञ्च कर्तव्यानि पालयन् भूभृत् स्वयमपि सुखं लभते अन्यानपि सुखयति । स च पुण्य-लोकं प्राप्नोति[16] ।

---

(16) 1–327, 3–45, 7–512, 8–60, 2–48, 3–39, 40, 49, 7–1582,

**राज्याभिषेकः**—प्रजानां, ब्राह्मणानां मन्त्रिपरिषदश्च विचारविमर्शेन यो राजा निर्वाचितः अभवत् तस्य राज्याभिषेकः अभवत् तदनन्तरमेव स विधिवत् राज्यकार्यमचालयत्। अभिषेकः अल्पायुषि अपि अभवत्, बालभूपतेः गोनन्दस्याभिषेकः प्रथमतरंगे उल्लिखितो वर्तते। जयसिंहः रड्डादेव्याः अवयस्कं बालकं लोहरे अभिषिक्तवान्।

**समयः**—अभिषेकात् पूर्वम् ज्योतिर्विदो विद्वांसः शुभमुहूर्तम् प्रदर्शयन्ति स्म। तदा च शुभे दिवसे महता समारोहेण राज्ञः अभिषेको बभूव। प्रायेण, राज्याभिषेक आश्विनमासस्य पूर्णिमायामभूत्।

**स्थानम्**—वहिर्नगरं, कस्मिंश्चित् रमणीये उपवने राज्याभिषेको बभूव। महान् जनसमुदायः तस्मिन् समारोहे समाययौ, अभिषिच्यमानस्य पितरौ सम्बन्धिनश्चापि समागच्छन्। तूर्य-भेरी-वाद्यानां रवैः गगनतलं व्याप्तमभूत्। अन्यानि च विविधानि मंगलवाद्यानि गीतानि च जनानां हृदयमाकर्षन्। कदाचित् अभिषेकः अलंकृते, कलाभिः शोभिते मंदिरे अपि अभूत्। लोठनस्याभिषेकः सिंहराजस्वामिमन्दिरे एव समपद्यत।

**अभिषेक-व्यवस्था-विधिश्च**—अभिषेक-व्यवस्था प्रजाभिः व्यधायि ब्राह्मणाश्च स्वहस्तैरभिषेकमकार्षुः मन्त्रिपर्षत् अपि अभिषेकमकार्षीत्। यशोमती बाह्मणैरेवाभिषिक्ताभूत्। "**राज्ये यशोमती नाम द्विजैः कृष्णोऽभ्यषेचयत्। 1–701**। मातृगुप्तभिषेकः प्रजाभिः अक्रियत् **प्रकृतिभिर्मातुगुप्तोऽभ्यषिच्यत**। उन्मत्तवन्तः नृपतिः शर्वटादिमन्त्रिभिरभिषक्तः "**अभ्यषिच्यत वैधेयैः सचिवै शर्वटादिभिः**" **(5–415)**। अभिषेकात् पूर्वम् सर्वविधानि वस्तूनि संगृह्यन्ते स्म। तत्संग्रहकर्तारः सन्निधातृपदवाच्या आसन्। स्वर्णकलशेषु सर्वेषां तीर्थानां जलं अभिषेकस्थले आनीयते स्म। एकं स्वर्णनिर्मितं पीठं तत्र व्यराजत। राजा च तस्मिन्नुपाविशत् "**सौवर्णभद्रपीठप्रतिष्ठितः**", तत्र चोपविष्टस्य नरपतेः सर्वैः तीर्थजलैः स्नानं व्यधीयत। ब्राह्मणाः, कुलीनाः प्रतिष्ठिता नागराः, मन्त्रिणः, उच्चाधिकारिणश्च, क्रमशः आगत्य स्वर्णकलशजलं राजनि न्यपातयन्। अस्मिन्नवसरे मंगलवाद्यानि मंगलस्वनं चक्रुः। अंगनाः गीतानि अगायन्। द्विजाश्व मंत्रोच्चारणं चक्रुः। शिरसि पतत् तीर्थजलं शनैः शनैः पादौ प्राक्षालयत्। आबालवृद्धाः स्नानं कारयितुमुत्सुका अजायन्त। स्नाने

---

1–88, 4–60, 716, 511, 8–63,45,46,55, 4–880, 879, 2–27, 856, 57,59,4–53, 8–75, 65 से 67 5–323,89, 7–1581, 6–47, 8–2380, 3155, 7–1392, 93, 7–449, 943, 1441, 998, 3–87, 5–185, 186, 2–28, 32, 33, 29, 42, 43, 8–52,53, 54, 2–41, 8–61, 2–30, 31, 5–317, 4–84, 3–89, 141, 7–895, 514, 830, 2–118, 5–78, 196, 200 8–2478, 3349, 7–611, 947।

सम्पन्ने प्रजाः राज्ञः जयघोषं चक्रुः, लाजांश्चावाकिरन् । अभिषिक्तस्य राज्ञः शरीरे चन्दनादीनां विलासो व्यधायि । विविधैः आभरणैः सुन्दरैः वस्त्रैश्च समस्तशरीरमलंक्रियत ।

अथ विद्वांसः आगत्य राज्ञः परिचयमकारयन् प्रमुदिताः प्रजाः अंजलिं बध्वा ऊचुः राजन्! अस्मासु शासनं कुरु इति । राजा तत्प्रार्थनां समोदं स्वीचकार । ततश्च वेदविदः नीतिनिपुणाः कोविदाः विप्राश्च राजतन्त्रस्य शिक्षां राज्ञे ददुः । पितरावपि उपदेशं ददुः । सुस्सलः स्वपुत्रमभिषिच्य तं राजतंत्रमुपदिदेश । अथ प्रीतमनाः पार्थिवः विनतःसन्, प्रजानां पालनस्य रक्षणस्य सुशासनस्य च प्रतिज्ञां कृत्वा, किंचित् संक्षिप्तं भाषणं ददौ । प्रजाश्च सहाय्यप्रदानाय प्रार्थयते स्म ।

**नगर-प्रवेशः**—अथापरेद्युः प्रजाः मन्त्रिणश्च राजानं नगरप्रवेशाय प्रार्थनामकार्षुः । ताञ्चाङ्गीकृत्य शुभलक्षणे मुहूर्ते च नृपतिः विशालसेनया परिवृतः गजारुढः विधिपूर्वकम् नगरं प्रविवेश । अस्मिन्नवसरे जनानां रथानां, गजानाम्, अश्वानाञ्च यात्राभूत्, दीर्घा पंक्तिः अतीव रमणीया अदृश्यत । नगरे प्रविष्टे सति गवाक्षेषु स्थिता अंगना भवनेषु स्थिताः आबालवृद्धाश्च लाजानां पुष्पाणाञ्च वृष्टिं विधाय तुमुलं जयघोषं चक्रुः । मंगलवाद्यानि रवैः हृदयानि प्रमुदितानि चक्रुः । ब्राह्मणाः आशीर्भिस्तमवर्धयन् ।

नगरस्य विशाले प्रासादे आगत्य राजा सिंहासनमारुरोह । मुदितमनाश्च प्रमोदोत्सवाय आदिदेश । समस्ते अपि राज्ये उत्सवा अजायन्त, मंगलदीपाश्चादीप्यन्त । राजा ब्राह्मणेभ्यः अग्रहार-गौ-स्वर्णादिदानं, याचकेभ्यश्च अन्न-धन-वस्त्रादिदानमकार्षीत् । सर्वतः मंगलोत्सवाः समपाद्यन्त । प्रमुदिताः नागरिकाः ननृतुः जगुश्च, भूपतिः चक्रवर्तिने सम्राजे उपहारान् प्रेषितवान् । जनेषु मिष्टान्नं वितीर्यते स्म । सर्वम् च समाप्य राजाविधिवत् राज्य-व्यवस्थामारेभे ।[17]

## शासन-व्यवस्था, अधिकारिणश्च

राजतरंगिण्यां यस्याः शासन-व्यवस्थाया इतस्ततः संकेताः वर्तन्ते सा राज्ञः मंडले (प्रदेशे), राष्ट्रे, देशे (मंडलानां समूहे) सामन्तस्य नगरे वा प्रचलितासीत् । अराजकं राज्यं निन्दितं कोविदैः तद्धि अशान्तिमूलं विपद्ग्रस्तं च मन्यते स्म, तस्मात् शासन-व्यवस्थायां राज्ञः निर्वाचनं सर्वोपरि बभूव । सामान्यभूपतेः राज्ये प्रधानतः शासनस्य पंचविभागाः आसन् तस्य च पंचाधिकारिणो बभूवुः, ते च धर्माध्यक्षः, धनाध्यक्षः, चमूपतिः, दूतः, पुरोधाः, दैवज्ञश्चेति आसन् । राज्ये च अष्टादशशासन-

---

(17) 8–3301, 2, 4–710, 2–217, 7–730, 8–3303, 3–238, 8–1823, 3–239, 7–1385, 5–415, 2–119, 3–227, 40, 4–719, 3–241, 42, 7–235, 8–1232, 3–341, 248, 3–253, 448, 8–1535, 3–247, 4–309, 5–347, 3–248 ।

विभागा आसन् ते वै कर्मस्थानानीति अकथ्यन्त, जलौकस्य राज्यस्य पूर्वभागे षट् विभागा अधिकारिणश्चासन् उत्तरभागे च अष्टादशविभागाः । महाभारतस्य युधिष्ठिरराज्ये अपि अष्टादशकर्मस्थानान्यासन् । ललितादित्यस्य शासनसमये अपि अष्टादशविभागाः आसन् । सम्राजां शासनेषु इतोऽप्यधिकाः पंचमहाशब्दभाजानानि अतिरिक्ततानां पंचाधिकारिणामासन् । ते पंचविभागाः अधिकारिणश्च महाप्रतीहार-पीड़ा-महासन्धिविग्रह-महाश्वशाला-महासाधनभागादय आसन्[1] ।

शासनकार्यस्य संचालनं मन्त्रिपरिषच्चकार, यस्यां विविध-विभागानामधि-कारिणः द्विजोत्तमाश्चासन् । ते च महामात्य-अमात्य-मन्त्रि-पदवाच्या अभूवन् प्रत्येकस्मिन्-विभागे एकः मुख्यमन्त्री अभूत् तस्य च सहायकाः सचिवा अभूवन् । तेषाञ्च सहायका अन्ये अपि अधिकारिण आसन् येषां कार्यस्य नाम्नश्चोल्लेखः अधस्तात् विधास्यते । मन्त्रिपरिषद् सर्वेषां विषयानां विचारं सभायामकरोत्, यस्यां विद्वांसः, देवज्ञाः नागराश्चातिष्ठन् ।"

न सा सभा यत्र न सन्ति वृद्धाः ।
वृद्धा न ते ये न वदन्ति धर्मम् ।।

एतादृशी एव सभा तत्कालीने भारते अपि दृष्टिगोचरा जायते । सभायां स्थिताः सभ्याः सभासदो वा न्यगद्यन्त । सभा एव पर्षदित्युच्यते स्म । यस्मिन् विषये नागरिकाणां सम्मतिः ज्ञातव्या आसीत् तस्यां शतशो जना निमन्त्र्यन्ते स्म । यदा च कस्मिश्चित् गोपनीये विशिष्टे वा विषये विचारः प्रस्तूयते स्म, तदा केवलं मंत्रिपरिषद् केचन चान्ये उपस्थिता बभूवुः । सा च सभा राजपरिषद् इत्याख्या अभूत्[2] । कदाचित् केवलं मनोरञ्जनाय, सामान्य-विषये विचाराय व सर्वे जना आहूयन्ते स्म, राजा, सामन्ताः, मन्त्रिणः, राज्ञी, सेवकाः पौराः, चारणाः, गायकाः, विद्वांसः सामान्यत-प्रजा चेति सर्वविध-जनानां संदोहस्तत्राययौ । सर्वैः सह विराजमानो राजा सपरिच्छदः उच्यते स्म ।

अधिकारिणां नियुक्तिसमये तेषां गुणाः विलोक्यन्ते स्म । योग्याः कर्म-कुशलिनः शिक्षिताः अनुभविनश्च पुरुषाः राजकर्मसु नियुक्तिं प्रापुः । स्वामिभक्तिः विनम्रता च तेषां प्रधानतमः गुणः अगण्यत । दुष्टहृदयः स्वामिद्रोही च सद्य एव निष्कास्यते स्म । स एव साधुः अमन्यत यः कुमार्गगामिनं स्वामिनमपि सुमार्गम्

---

(1) 1–118, 19, 20, 3–328, 6–2, 147, 61, 81, 118, 8–840, 41, 4–1, 40 से 43, 512, 680, 8–1391, 5–112, 3–46, 47, 186, 3–79, 2–6, 102, 36, 4–177 ।

(2) 3–146, 8–3213, 1547, 4–67, 3–158, 2–132, 6–159, 5–354, 62, 88, 8–2506, 7–79 ।

प्रदर्शयेत् । अश्लीलवाचकाः, नर्मोक्त्या मर्मभेदिनः परित्याज्या आसन् । स्वामिने प्राणदायकाः अलुब्धाः, तमोगुणशून्याः प्रशस्या ग्राह्याश्चोक्ताः कल्हणेन । वेश्यापुत्राः अधिकारपदभागिनो नासन् । राज्ञः अधिकारिणः कर्मचारिणो वा राजपुरुषा नियोगिनो वा न्यगद्यन्त । केचन बाह्यप्रदेशीयाः केचित् च स्वदेशीयाः नियुक्तिं लेभिरे । अधिकारिणः संख्यायां बहवः अभूवन् । नूतने कर्मणि नियुक्ताः नवकर्माधिकारिणः अभाष्यन्त । पुरुषैः सह स्त्रियः अपि राज्ये नियुक्तिं प्रापुः । कस्मैचित् अधिकारप्रदानं शुभमुहूर्ते बभूव । अधिकार-प्रदान-समये नियोज्यमानायाधिकार-मालादीयत । जयसिंहस्य प्रीतहारः लक्ष्मकः सेमाधिकारस्य मालां सुज्जेः कंठे चकार । सा माला प्रायेण जूटनिर्मिताभूत् । अधिकारमालायां स्वीकृतायामधिकारी तां संपद्प्राप्तिसोपानं मेने । सुज्जिः तथैवाचिन्तयत्[3] । अधिकारिणः सामदानदंडभेदैः स्वकार्यम् सम्पादयामासुः । स्वविभागस्य सर्वविध-व्यापारस्य ते उत्तरदायिनः आसन् । राज्यमपि नैकविधमभूत् "**द्वैराज्यं**" बहुशः कविनोल्लिखितं, यस्य राज्यस्योत्तराधिकार-याचकौ द्वावभवताम् तदासीत् द्वैराज्यम् तस्यामवस्थायां, राज्यं द्विधा विभज्यते स्म । भिक्षुचरसुस्सलौ एकस्यैव राज्यस्य राजानौ स्वात्मानौ ऊचतुः, कदाचिन् तु अनुजाय पृथक् मंडलमदीयत येन द्वैराज्यचर्चा न स्यात् । शत्रुशून्यं च राज्यं "**निष्कंटक-राज्यं**" अभूत् । तृतीयं राज्यं "**साम्राज्यमासीत्**" चक्रवर्ती राजा समस्त-भूमंडलं विजित्य यत् राज्यमवाप तत् साम्राज्यमभवत् । अवन्तिवर्मणः ललितादित्यस्य च राज्यं साम्राज्य-मेवाभूत् यत्तैः दिग्विजयेन लब्धमासीत्[4] ।

एतादृशस्य राज्यस्य शासनाय विभागाश्च यथा सम्प्रति सन्ति तथैव तदाप्यासन् । गृहविभागः, कोषविभागः, शिक्षा-विभागः, कर-विभागः, वाणिज्यविभागः, नगररक्षा-विभागः, शासन-विभागः प्रभृतयः विभागाः आसन् । एतेषां संकेतः कविना नैकस्थलेषु प्रदतः कम्पनाधिकारः, रक्षाधिकारः, द्वाराधिकारः, वधकर्माधिकारः, गृहकृत्याधिकारः, अट्टपतिविभागः, धर्माधिकारः कोषाधिकारः, प्रतिहाराधिकारः, राजस्थानाधिकारः, दंडाधिकारः, धनाधिकारः, गंजाधिकारः, गणनास्थानाधिकारः, खेरीकार्याधिकारः, लेखाधिकारः, सर्वाधिकारः, शिक्षाधिकारः, शासन-विभागः, प्रभृतयः शब्दाः विविध-विभागानामेव सूचकाः सन्ति, ते विभागा एव च कर्मस्थानानि सन्ति । **अधिकारिणस्तावदिमे समभवन् ।**[5]

---

(3) 7–1412, 1356, 77, 78, 4–321, 33, 3–140. 4–330, 5–132, 33, 2–69, 7–40, 8–2569, 7–573, 886, 426, 3–207, 4–56, 7–1018, 3–155, 77, 8–1982, 83, 84, 2994, 60 ।

(4) 8–2510, 1364, 1037, 214, 8, 2–72, 5–351, 64, 250, 45, 3–186 ।

(5) 7–995, 1363, 2–79, 5–177, 176, 167, 8–631, 627, 5–50, 8–576 ।

## अधिकारिणः

**सर्वाधिकारी**—शासनस्य सर्वेषां विभागानां निरीक्षकः पथ-प्रदर्शकश्च सर्वोच्चाधिकारी एव सर्वाधिकारी बभूव। सर्वेभ्यः अमात्येभ्यः उच्चमासीत् तस्य स्थानमत एव सर्वामात्यः अपि अभण्यत, सुस्सलः सहेलादिकमपसार्य गौरकं सर्वाधिकारिणं चकार। आधुनिकः, राष्ट्रपतिः एव पुरातनः सर्वाधिकारी अस्ति।[6]

**महासांधिविग्रहिकः**—आधुनिकः विदेशमन्त्री एव महासान्धिविग्रहिकः आसीत् स एव विदेशनीतिनिर्धारणमकरोत्, संधि-युद्धादि-निश्चयञ्च चकार। अस्यैव सहायकः सांधिविग्रहकः आसीत्। दूतानां नियुक्तिं तेषां कार्यनिरीक्षणमपि स एव चकार। क्वचित्तु दूतः अपि सांधिविग्रहकः निगदितः[7]।

**मन्त्री-अमात्यो वा**—राज्ञः परामर्शदाता गुप्तवार्तासंरक्षकः शासनकार्ये निपुणः पुरुषः मन्त्री आसीत्, स एव अमात्यः निगदितः। मन्त्रिणः बहवः अभूवन्। मन्त्रिनियुक्तिकाले, पुरुषस्य गुणाः विलोक्यन्ते स्म। कल्हणमते मन्त्री स्वामिभक्तः, रक्षारत्नवत्, हितकारी, श्रेष्ठवक्ता, गुप्तमंत्रसंरक्षकः, विवेकी, विचारशीलः लोकशास्त्रज्ञः विचारप्रतिपादकः, बुद्धिमान्, निष्कपटः भवेत्। अस्मिन् पदे प्रायेण ब्राह्मणा एव नियुज्यन्ते स्म। कवयः कोविदाश्चापि मंत्रिपदानि प्रापुः। शंखदत-चटक-वामनादयः मंत्रिणः तथाविधा एवासन्। मंत्रिणः कर्तव्यमासीत् द्रोहशून्यहृदयेन प्रजाभिः सह व्यवहारः तत्पालनं च, मंत्रिणां नियुक्तिः वंशपरम्परयापि बभूव, एकस्य राज्ञः मंत्रिणः पुत्र एव कदाचित् तस्यैव राज्ये तत्संततेर्वा राज्ये मंत्रिपदं प्राप। मित्रशर्मणस्तनयः देवशर्मा जयापीडस्य मंत्री आसीत्। मंत्रिणः अपि स्वामिवत् मंदिरादिनिर्माणकर्म चक्रुः। युधिष्ठिरस्य मंत्री जयेन्द्रः विहार-चैत्यादिकञ्चकार। तस्यापरे मंत्रिणः सर्वरत्न-जयंत-स्कन्दगुप्ता अपि विहारादीनां निर्माणमकार्षुः।

**मुख्यमन्त्री-महामात्यो वा**—मंत्रिषु प्रधानः मुख्यो वा मुख्यमन्त्री महामात्यो वा बभूव। आधुनिको मुख्यमन्त्री प्रधानमन्त्री वा तथाविध एवास्ति। पूर्वमुक्तं यत् प्रत्येकं विभागे नैके मंत्रिणः नियुक्ता अभवन् तेषां प्रधानः एव मुख्यमन्त्री अभवत्। मुख्यमन्त्री वीरः, निपुणः, नीतिज्ञः, शस्त्रपारंगतश्चाभूत्। कदाचित्तु राज्ञः अनुजः मुख्यमंत्रिपदं लेभे। मुख्यमन्त्री एव महामात्यः स एव च क्वचित् प्रधानामात्यः कथितः, सोऽपि भूपतिवत् भवनादि-निर्माणमरोत्[8]।

**सचिवः**—अवरः मंत्री उपमंत्री वा सचिवः अकथ्यत, स हि मंत्रिणः कार्येषु सहायतामकार्षीत्। क्वचित्तु मंत्री एव सचिवः कथितः अस्ति। जयेन्द्रस्य संधिमान्

---

(6) 6–199, 7–568, 7–364, 894, 8–1850।

(7) 6–320, 110, 8–2427, 4–504, 711, 5–412, 19, 254, 4–585, 8–417, 2–65, 7–204, 8–879, 4–496, 2–48, 3–384, 4–469, 209, 3–129, 281, 5–30, 8–2473, 3–380, 81, 5–414।

(8) 5–418, 24, 25, 22, 3–386, 7–1444, 1274, 228।

मंत्री एव सचिवः अपि निगदितः । सचिवाः अपि अनेके आसन् । कदाचित्तु सामन्ता अपि सचिवकार्यमकार्षुः । धीसचिव-हर्म्यसचिव-प्रभृतयः सचिवानां नैके भेदा[9] अभूवन् ।

**ठक्कुरः**—ग्रामस्य, लघुनगरस्य (कस्बा इति) वा शासकः संभवनः ठक्कुरः अकथ्यत । ठक्कुर एव कदाचित् मंत्रिपदं प्राप । ठक्कुराणामुल्लेखः केवलं सप्तमाष्टम-तरंगयोरेव वर्तते[10] ।

**द्वाराधिपतिः**—ग्रामस्य, नगरस्य, प्रदेशस्य, राष्ट्रस्य प्रवेशद्वाराणां प्रबन्धकः रक्षकश्च द्वाराधिपतिः कथ्यते स्म, स एव द्वाराधिकारी, द्वारनायकः, द्वारेशः, द्वारपतिः, द्वाराधिपः द्वाराधिपतिः द्वाराधीशः, इति नामभिरपि वर्णिताः कल्हणेन । राज्ये प्रदेशस्य सर्वेषां मार्गाणां निरीक्षणस्य, रक्षायाश्च भारस्तदुपरि आसीत् । ते एव द्वाराधिपाः शत्रूणामागमनसूचनां कथञ्चिदपि लब्ध्वा भूपतिं सूचयामासुः । ते पर्वतेषु उच्चस्थानेषु वा निरीक्षणस्थलं (चौकी इति) निर्मितवन्तः । योग्यः, वीरः, नीतिकुशलः, कूटनीतिज्ञश्चास्मिन् पदे न्ययुज्यत । आक्रमणकारिणां सूचनया सह तेषां निरोधः अपि द्वाराधिपस्य कर्तव्यमासीत् । ते एव राजसेनायाः प्रथप्रदर्शनम् कुर्वन्तः तस्याः संचालनं चक्रुः । इत्थं च द्वाराधिकारः अतीव महत्त्वपूर्ण आसीत् । द्वारा-धिकारी चातिशयप्रतिष्ठापात्रमासीत् । कन्दर्प-मल्लसदृशाः तथाविधा एव द्वाराधिपा अभूवन् । अस्मिन् महत्त्वपूर्णपदे राज्ञः अनुजस्यापि नियुक्तिः बभूव । पादाग्राः अपि अस्मिन् पदे नियुक्तिं प्रापुः ।

**मंडलेश्वरः**—वर्तमान-समयस्य राज्यपाल एव राजतरंगिण्यां वर्णितः मंडलेश्वर वर्तते । स एव मंडलेशः अपि अकथ्यत । तस्य नियुक्तिः राज्ञा क्रियाधायि मंडलस्य व्यवस्थायाः प्रधानमुत्तरदायित्वं तस्मिन्नेवाभवत्[11] । वर्णितेषु मंडलेश्वरेषु प्रयागः सर्वाधिकं यशः प्राप[12] ।

**नगराधिकारी**—नगरस्य व्यवस्थायै संरक्षणाय च नियुक्तः अधिकारी नगरा-धिकारी अकथ्यत । अद्य खलु कोतवाल इति ख्यातः अधिकारी तत्सदृशः अस्ति । नगराधिकारी एव नगराधिपतिः नगरेशः, नगराधिपः नगराधिकृतश्च निगदितः । नगरस्य सर्वविधव्यवस्थायाः अधिकारः तदन्तिकमासीत् । स एव नागरिकेभ्यः कररूपे

(9) 2–67, 3–233, 5–354, 8–2997, 8–3001, 3212 ।
(10) 7–38, 1040, 290, 8–1942, 548 ।
(11) 7–1178, 6–325, 7–965, 1301, 8–2493, 2662, 2852, 2926, 18, 37, 6–281, 7–1319, 61, 6–179, 7–223, 8–2782, 2844, 7–912, 584, 8–2935, 7–896, 576, 8–2944, 45, 7–216, 8–2950, 2526. 2894, 2503, 2501, 8–1964 ।
(12) 6–73, 8–1814, 7–996, 1227, 1375, 2–106 ।

गृह्यमाणस्य धनस्यान्नस्य च संग्रहमकार्षीत् । संगृह्य च राजकोषे ददौ । नागराणां मनोविनोदाय स उद्यानानि निर्मितवान् । मन्दिरादीनामपि च निर्माणं चकार । चन्द्रापीडस्य नगराधिकारी मंदिरमेकमकरोत् । नगराधिप एव शान्तिस्थापनायाः अनुशासनस्य च कर्ता वभूव । चौरादिभ्यो ऽन्यविपद्भ्यश्च स एव प्रजाः ररक्ष । अस्मिन् पदे योग्यः, कुशाग्रधीः, दूरदर्शी च पुरुष एव नियुक्तिं प्राप ।[13]

**कम्पनाधीशः**—सेनावाचकः कम्पन-शब्दः शतशः समागतः राजतरंगिण्याम् । तस्य च कम्पनस्य ईशः प्रधानाधिकारी वा कम्पनाधीशः कम्पनापतिः, कम्पनधिपतिः, कम्पनोद्वाहकः, कम्पनेशः कम्पनकर्मस्थानाधिकारी, कम्पनः च निगदितः । वर्तमानसमयस्य सेनापतिः एव एतैः नामभिः राजतरंगिण्यां स्मृतः । सेनायाः सर्वविधव्यवस्थायाः, युद्धस्य, च प्रबन्धस्याधिकारस्तदुपर्यासीत् । स एव सेनायाः संचालनञ्चकार चतुरंगिण्याः सेनायास्स एव नायकः अभूत् । स्वेच्छया च सादि-अश्व-गज-रथ-सेनानां पृथक् सेनापतीन् चकार । देशस्य मंडलस्य वा रक्षायाः सर्वाधिकमुत्तरदायित्वं तस्मिन्नेवासीत् । महावीरस्य, युद्धनीतिनिपुणस्य, कूटकीतिज्ञस्य, सर्वविधयुद्धप्रकारज्ञातुश्च जनस्य कम्पनाधिपतिपदे नियुक्तिः राज्ञा व्यधायि । जयसिंहस्य संजपालाख्यः एतादृक् गुणयुक्त एव कम्पनाधिपतिरासीत् ।[14]

**दंडनायकः**—राजनीतौ दंडस्य महत्त्वं सर्वदेशेषु स्वीकृतं, दंडं बिना जीवनमुच्छृ खलं जायते । **"लालनाश्रायिणो दोषास्ताड़नाश्रायिणो गुणाः"** इति ऋषिभिरपि प्रतिपादितम् । अत एव प्रत्येकं देशे प्रदेशे समाजे दंडव्यवस्था भवति । राजतरंगिण्या भारतस्य प्रत्येकं नगरे सुदृढ़ा दंडव्यवस्थासीत् । तां व्यवस्थां विधातुमेव नियुक्तः अधिकारी दंडनायकः अकथ्यत । नगरे अनुशासनपालनाय, राजाज्ञापालनाय च दंडनायकः प्रयत्नमकरोत् । प्रत्यहं स इतस्ततो बभ्राम, यत्रापि च अव्यवस्था-मर्यादाभंगमपश्यत्, तत्राचिरादेव दंडव्यवस्थामकारयत् । दंडनायकः कोमलहृदयः अपि, दुष्टेभ्यः कठोरहृदयः अभूत् । निर्भयता, वीरता सच्चरित्रता तस्य, प्रधानगुणाः कथिताः कविना । दंडनायकस्य नियुक्तिः राज्ञा नगराधिपतिना वा व्यधायि । गजारुढस्य रथारुढस्य वा राज्ञः नगरभ्रमणसमये, दंडनायक एव रक्षाव्यवस्थामकार्षीत् ।[15]

---

(13) 4–81, 8–256, 6–70, 7–1542, 108, 8–3334, 7–580, 83, 8–814, 6–296, 8–632 ।

(14) 7–1362, 8–2807, 7–1125, 8–2868, 5–447, 7–101, 154, 221, 365, 6–230, 233, 8–2190, 1430, 7–579, 1365, 6–237, 259, 228, 354 ।

(15) 7–951, 68, 75, 1155, 58, 1305, 8, 1544, 85, 99, 1619 ।

**राजस्थानाधिकारभाक्**—राजस्थान-शब्दः राजतरंगिण्यां न्यायालयस्य पर्यायः प्रतीयते। तत्र च नियुक्तः अधिकारी राजस्थानाधिकार-भाक् (मुख्यन्यायाधीशः) निगद्यते स्म। द्विविधः स आसीत् (क) **बाह्यराजस्थानाधिकारभाक्**-यः खलु राजगृहात् बहिः स्थित्वा प्रजानां धर्मसंशयं श्रुत्वा निर्णयमदात्, (ख) **अंतःराजस्थानाधिकारभाक्** च यो वै राजगृहे स्थित्वा तत्रागतानां वादिप्रतिवादिनां वचनानि आकर्ण्य निर्णयं ददौ। उच्चलः भागसेनस्य कार्येण प्रसन्नो भूत्वा तस्मै राजस्थानाधिकारं ददौ। धन्यः जयसिंहात् तदधिकारं प्राप। अधिकारप्रदानात् पूर्वम् राजस्थानाधिकार-स्रक् दीयते स्म। जयसिंहः धन्याय तां मालां ददौ। अयं राजस्थानाधिकारी राजगृहस्य कार्येषु कर्मचारिवर्गेषु चापि दृष्टिं चिक्षेप तेषाञ्चापि परस्पर-कलहं शमितवान्।[16]

**धनाध्यक्षः**—धनस्थानस्याधिकारी धनाध्यक्ष आसीत् स एव कोषाधिकारी, कोषाध्यक्षः वा अभण्यत, दैनिकव्यवहाराणां संचालनाय, राज्यव्यवस्थायाः प्रवर्तनाय च स एव आवश्यकीं धनव्यवस्थामकार्षीत्। स एव च सेवकेभ्यः सर्वविधराज-कर्मचारिभ्यश्च वेतनादिकं ददौ। सरलहृदयः कुशलः साधुश्च जन एव तस्मिन् पदे नियुक्तिं प्राप।[17]

**गंजाधिपतिः**—राजकीय-कोषः गंजपदेन वर्णितः राजतरंगिण्यां, स एव च राजगंजः अपि अभिहितः, तस्य कोषस्य गंजाधिकारस्य वा प्रबन्धकः रक्षकश्चाधिकारी गंजाधिकारी, गंजपतिः, गंजाध्यक्षः, गंजेशः, गंजाधिगंजेशः, गंजाधिपतिः, गंजाधिपः इति बहुभिः नामभिः निगद्यते स्म। कोषे अस्मिन् प्रभूतं वित्तं स्वर्णरत्नादिकं च संगृहीतमतिष्ठत्। अयं खलु राज्यस्य स्थायी कोषः अभूत्। विपत्काले युद्धकाले वा अस्य स्थिरनिधेः धनं प्रायुज्यत। गंजाधिपः एव धनाध्यक्षाय, राज्यसंचालनाय, वेतनादि-प्रदानाय च धनमदात्। साधुप्रकृतिः, लोभशून्यः, सर्वथा स्वामिभक्तः प्रजानां हितैषी, विद्वान् च पुरुषः गंजाधिपतिः बभूव। क्षेमदेव-जयाकर-सिन्धु-संग-प्रभृतयस्त-थाविधा एव गंजाधिपतयो बभूवुः। कदाचित्तु कस्मिंश्चित् गंजे नैके गंजाधिपा अभवन् तेषु चैकः प्रधानो नियुज्यते स्म, स वै बृहत्गंजः अभ्यधायि उच्चलसमये संगः बृहत्गंजः आसीत्। कदाचित्तु गंजाधिपतेः गुणाधिक्येन तन्नाम्नैव पृथक्विभागः अभवत्। यथा-सिन्धोः नाम्ना एव सिन्धुगंजः स्थापितः अभवत्। अस्य खलु राजगंजस्यैको विभाग श्चलगंज आसीत् यस्य वित्तमितस्ततः नीयते स्म युद्धादिसमये सेनायां दूरयातायामस्य कोषस्य वित्तं प्रायुज्यत। गोपालवर्मा शाहीनृपतेः विरोधे युद्धसमये अस्य गंजस्य प्रयोगं चकार। राजकोषस्यैवापरो विभागः अक्षपटल इत्यासीत्, प्रायेण गृह-कृत्यविभागे अस्य महत्त्वमधिकमासीत्। अस्य चाधिकारी अक्षपटलमुख्याधिकारी न्यगद्यत, चक्र-वर्मणः राज्ये शंकरवर्धनः अक्षपटलाधिकारी आसीत्। तत्रापि महान् कोषः विरेजे।

---

(16) 8–181, 2557, 1624, 1046, 576, 573, 1620।

(17) 4–622, 7–93, 5–232।

एतेषां सर्वविधकोषाणामधिकार गंजाधिपस्य हस्ते अभूत् । स एव तेषां सुरक्षायाः, समये वितरणस्य च प्रबन्धमकार्षीत् ।[18]

**सामन्ताः एकांगा पादाग्राश्च**—पराजिताः करदातारच लघुराजानः सामन्ताः निगद्यन्ते स्म । प्रभावशालिनः, पराक्रमयुक्तस्य वर्गविशेषस्य च पुरुषः पादाग्रः अभ्यधायि, अन्यश्चैकः वर्गविशेषः एकांगानामासीत् सामन्तः सम्राजः शासने मन्त्रिप्रभृतीनि उच्चपदानि प्रापुः । राजा गुप्तमंत्रणां तैः सह चकार सम्राजि समागते ते प्रणामं चक्रुः । पादाग्राः एकांगाश्च सचिवादिपदेषु नियुक्तिं प्रापुः राज्यकाले ते राज्ञे परामर्शम् ददुः । तेषां सेनापि राजसेनायां विशेषमहत्त्वं दधौ । एकांगानां नियुक्तिः सेनायामुच्चपदेष्वभूत् । हयारोहाः ते युद्धे ययुः । द्वादशशताब्द्यां तेषां पादाग्राणामेकांगानां च महान् प्रभावः आसीत् ।[19]

**प्रतीहारः**—राजद्वारस्याधिकारी प्रतीहारो निगद्यते स्म । राजगृहस्य अनुजीविषु सर्वाधिकं महत्त्वपूर्णमासीत्तस्य कार्यम् । प्रतीहाराः अनेके अभवन्, **प्रतीहारान्, प्रतीहारैः**, पदं तत्र प्रमाणम्, स एव द्वारपालः, क्षत्ता, दौवारिकः, राजक्षतुः, द्वास्थः, नामभिः स्मृतः अस्ति राजतरंगिण्याम् । राज्ञः सर्वविधव्यवहाराणां संचालने स एव प्रधानः सहायकः आसीत् । दंडं स हस्ते दधौ, वेत्रलतामपि स दधार, राज्ञः प्रकोष्ठस्य द्वारे, अन्येषु द्वारेषु च प्रतीहार एवातिष्ठत् राजानं दिदृक्षूणां सूचनां स एव राज्ञे न्यवेदयत् । स एव राज्ञः आज्ञां बहिः प्रासारयत्, तस्य संदेशं वान्येभ्यो निनाय । राजाज्ञामवाप्य स एव आगन्तून् राज्ञा सह सममेलयत्, तेषां संदेशं वा भूपतये निवेदयामास, प्रतीहार एव मातृगुप्तं विक्रमादित्यान्तिकं निनाय । राज्ञो रक्षायाः भारः अपि प्रतीहारे अभूत् । राजसभायामपि तस्य कर्तव्यमभवद् ।स एव सभासदेभ्यः प्रवेशं ददौ । सभायां विसर्जितायां च जनान् बहिः गन्तुं प्रेरयामास । तस्यानुमतिं विना न कश्चिदपि सभायां प्रवेशं प्राप । सुयोग्यः, कर्मकुशलः, दूरदर्शी, शिक्षितः राजव्यवहारज्ञः पुरुषः प्रतीहारपदे नियुक्तिमभजत ।[20]

**प्रणिधिः**—राजानः चारचक्षुषः निगदिताः सन्ति, तन्मुखेनैव ते प्रजानामितिवृत्तं विदन्ति । चारः एव प्रणिधिः कथ्यते स्म । स खलु नैकविधः आसीत्, गूढचरः, उग्रगुप्तचरः, गुप्तचरः, चारः गूढदूतः, दूतः, मायादूतः, संदेशहरश्चेति

---

(18) 5–238, 203, 471, 6–125, 8–1249, 6–265, 66, 8–276, 7–165, 5–239, 4–589, 5–301, 89, 98, 7–162 ।

(19) 5–224, 3–232, 35, 8–2352, 7–210, 571, 994, 6–91, 121, 124, 244, 245, 5–249 ।

(20) 7–659, 6–2, 3, 8–2651, 3–205, 4–221, 233, 6–346, 3–204, 5–28, 4–513, 3–330 ।

तन्नामानि राजतरंगिण्यां समागतानि, गूढचर-गुप्तचरोग्रगुप्तचराणां कार्यम्, गुप्तरूपेण प्रजासु भ्रमणं विधाय तद्वृत्तान्तज्ञानमासीत् । उग्रगुप्तचराणां प्रयोगः दुष्टानां व्याघातायापि व्यधायि । उच्चलः तैरेव जस्सराजममारयत् । दूतोऽसौ तथैव प्रणिधिः आसीत् यादृशः सम्प्रति वर्तते । साम्प्रतं, एकदेशस्यापरस्मिन् देशे दूताः भवन्ति त एव राजदूताः कथ्यन्ते अकथ्यन्त च । उभयोः देशयोः सर्वविध-सम्बन्धं संवर्धयितुं, अन्योन्य-हितकर-कार्यं सम्पादयितुञ्च दूतस्य नियुक्तिः व्यधायि । दूत एव युद्धादौ साहाय्यञ्चकार । स एव च संधिकार्यमपि समपादयत् । विदेशनीतिनिर्धारणे राजा तस्य परामर्शम् जग्राह । मायादूतः अपि संभवतः अन्यराज्ये नियुक्तिमलभत स च गुप्तरीत्या, कूटनीत्या, मायया च तद्देशस्य सर्वम् वृत्तं ज्ञातुम् प्रयासमकरोत् । ज्ञात्वा च राजदूतमुखेन, स्वदेशे स्वस्वामिनः अन्तिके तत् प्रेषितवान् । तच्च ज्ञात्वैव राजा स्वनीतिनिर्धारणं व्यदधौ, संदेशहरः प्रणिधिः राज्ञः संदेशमन्यत्र निनाय । बाह्याक्रमणानां सूचना दूतमुखेन मायादूतमुखेन वालभ्यत । चाराणां कार्यमतिमहत्त्वपूर्णमासीत् । तैः सूचनां लब्ध्वा राजा यथाशक्ति स्वदोषान् परिमार्जयितुं शासन-व्यवस्थां वा सुन्दरां विधातुं प्रयासमकार्षीत्, तैरेव च स प्रजासु अनुशासनस्य, मर्यादाया भङ्गस्य वा सूचनां लेभे शान्ति-स्थापनोपायांश्च चकार । सर्वविधा दूताः राजसभायामतिशयसम्मानं, प्रतिष्ठाजनकमासनं च प्रापुः ।[21]

**धर्माध्यक्षः**—प्राचीन-भारते धर्मार्यसभा, राजार्यसभा, विद्यार्यसभा चेति सभात्रयमभूत्, राज्यशासने । धर्मार्यसभा, धर्म-सम्बन्धिविषयानचिन्तयत् । मन्दिरादीनां निर्माणं, मूर्तीनां स्थापनं, यज्ञ-पूजादीनां व्यवस्था तस्या एव सभायाः कार्यमभूत् । तस्याश्च सभाया अधिकारी धर्माध्यक्षः स एव धर्माधिकारी अकथ्यत । धर्मसम्बन्धिनीं सर्वविधव्यवस्थां स एवाकार्षीत् ।[22]

**गणनापतिः**—गणनास्थानस्याधिकारी गणनाधिकारी गणनापतिः वाभण्यत, राजकोषस्य सम्पतेः आय-व्ययं स एवोल्लिलेख, प्रत्यहं च सम्पतेः गणनां व्यधात् । अद्य मुनीम इति प्रसिद्ध एव सम्भवतः पुरा गणनापतिः निगद्यते स्म । योग्यः गणितज्ञः कार्यकुशलः एव जनः एतत्पदं प्राप ।[23]

**खेरी-कार्याधिकारभाक्**—खेरी वस्तुतः एकं शासनक्षेत्रमासीत् किन्तु शासन-दृष्ट्या तत्तथा महत्त्वपूर्णम् समजनि यत् तत्कृते पृथक् अधिकारी नियुक्तिं प्राप स च खेरीकार्याधिकारभाक् उच्यते स्म खेर्याः सर्वविध-व्यवस्थायै स उत्तरदायी आसीत् ।

---

(21) 6–82, 7–1017, 1264, 8–42, 5–451, 6–343, 7–30, 3–233।

(22) 8–51, 4–588, 82।

(23) 4–691, 5–26, 8–277।

खेरीशब्दस्तु बहुशः प्रयुक्तः राजतरङ्गिण्याम् । किन्तु तदधिकारस्य सूचना एकस्मिन्नेव स्थाने विद्यते । अस्मिन् अधिकारे कुशलः राजनीतिज्ञ एव नियुक्तोऽभवत् ।[24]

**लेखाधिकारी**—राजाज्ञानां सन्धिपत्राणां हुण्डिकादीनाम्, अन्येषां सर्वविध-लेखानां वा लेखकः सुरक्षा-कारकश्चाधिकारी लेखाधिकारी, तेषां लेखानां सुरक्षायाः स्थापनस्य च विभागः अधिकरणं न्यगद्यत । लेखाधिकारी एवाधिकरणलेखकः निगदितः ।[25] इमे खलु आसन् प्रसिद्धा अधिकारिणः । एतदतिरिक्तं केचित् लघुकृत्याः अनुजीविन अपि बभूवुः ।

**सेवकः**—राज्ञः धनिकानां वा सेवाकर्ता सेवकः अभवत् । स्वामिभक्तिः तस्य प्रधानं गुणो बभूव । स एव साधुसेवकः अमन्यत यो वै प्रभुकार्येषु प्रमादं न कुर्यात् । अनेकेषां सेवाकार्ये नियुक्तः अपि न कदापि क्लेशमनुभवेत् । प्राणानविगण-य्यापि स्वामिकार्यम् सम्पादयेत् । रुष्टः कुपित उदासीनो वा न भवेत् । एतादृक्गुण-युक्तः सेवकः पुण्यशालिभिरेव लभ्यते स्म । कुत्सितः सेवकः मानुषपशुरित्यभिधीयत ।

**गृहकृत्याधिकारी**—गृहकृत्याधिकारे नियुक्तो जनो गृहकृत्याधिकारी अभवत् । राज्ञे, प्रभवे वा ताम्बूलदाता "**ताम्बूलदायकः**" अकथ्यत । ताम्बूलं स्वर्णपात्रे अदायि (**ताम्बूलं स्वर्णभाजने**) । **सेतुपालः**—सेतुशब्दः पुल इत्यस्य बन्धस्य च वाचकः अस्ति राजतरंगण्याम्, तस्य च रक्षायै नियुक्तः अधिकारी एव सेतुपालः अभण्यत । **अम्बराधिकारी**—राज्ञः वस्त्रादीनां व्यवस्थापकः पुरुषः अम्बराधिकारी आसीत् । स एव मलिनाम्बराणां प्रक्षालनस्य व्यवस्थामकार्षीत् स एव च प्रत्यहं कार्यानुरूपं वस्त्रं भूषणञ्च समर्प्य सेवकैः तत् राजतनौ चकार । **अर्थनायकः**—दैनिक-व्यवहाराणां संचालनाय वित्तस्य प्रबन्धकारकः अर्थनायकः अभूत् । **पुरीष-नायकः**—शौचालयस्य स्वच्छतायै प्रबन्धकर्ता अधिकारी पुरीषनायकः अभण्यत स एव 'भंगी' इत्याख्यान् जनान् न्ययुंक्त सर्वस्थानानि निर्मलानि विधातुम् । **देवनायकः**-मूर्तीनां देवमन्दिराणांच व्यवस्था-सम्पादकः देवनायकः अभाष्यत । राजस्थान-प्रदेशे अन्यप्रान्तेषु च यः देव स्थान-विभाग इत्याख्यस्य विभागस्याधिकारी देवस्थानाधिकारी निगद्यते स एव पुरा देव नायकः अभूत् । **विटाः**-राज्ञः अनुकर्तारः तत्प्रशंसायां रताः तेषां विषयाभिलाषस्य पूर्तिकर्तारः अनुचरा विटा निगद्यन्ते स्म । प्रायेण निसर्गतः दुष्टाः कुटिलाश्च ते अभूवन् भूपांश्च कुमार्गे अनयन् स्वार्थसाधनाय । **चेटाः**-चेटानां कार्यमपि विटवदासीत् ते वै नर्मोक्त्या, कर्णेजपत्वेन वृथा प्रशंसया च भूपं स्ववशे चक्रुः । **बन्दिनः चारणाः**-वा स्तुति-पाठका आसन् प्रातः जागरणसमये, नक्तं निद्रासमये च ते स्तुतिपाठम-कुर्वन् । समायां च भूपतेः प्रशंसाया गीतादिकं जगुः । **विषयाधिकृतः**-संभवतः कश्चित्

(24) 8–1009 टि० ।

(25) 3–206, 208, 6–38, 5–302, 266, 275 ।

क्षेत्रविशेषस्याधिकारी आसीत्। **उन्मुख्य-भाक्**--राज्य-निरीक्षणकर्ता उन्मुख्यभाक् आसीत्, सुस्सलः कश्मीरमण्डलस्य निरीक्षण-पालन-हेतुना संजयपालं तत्पदे न्ययुंक्त। **प्रवेशभागिकः** – राजप्रासादे प्रविशतः पुरुषस्य द्रष्टा निरीक्षकश्च। **यामिकः**—नक्तं गृहरक्षकः (पहरेदार इति भाषा) पुरुषः यामिकः आसीत्। स वै दंडं शस्त्रं वा कञ्चित् हस्ते निधाय, इतस्ततः भ्रमन् गृह-प्रासादिरक्षणं व्यधात्। प्रवेशपत्रं विना कंचिदपि पुरुषं प्रासादस्यान्तः प्रवेशायानुमतिं न ददौ। **प्रायोपवेशाधिकृतः**— राजतरंगिण्यां, आमरणानशनस्य वाचकः प्रायोपवेश-शब्दः बाहुल्येन प्रयुक्तः अस्ति। प्रायेण ब्राह्मणाः प्रायोपवेशानकार्षुः। तेषां प्रायोपवेशानां च निरीक्षणाय निरोधाय च नियुक्तः अधिकारी प्रायोपवेशाधिकृतः आसीत्। एतदतिरिक्तं नैकविधा दासदास्यः अपि आसन् राज्ञां, जनानां च सेवायाम्।[26]

## दंड-विधानम्

भारतीय-राजनीतौ दंडस्य महत्त्वपूर्णम् स्थानमासीत्। दंडं विना कस्मिन्नपि राज्ये शान्तेः कल्पना नाक्रियत। विदुषां मते दंड एव वस्तुतः शासनं करोति। भगवान् मनुरब्रवीत्।

दंडः शास्ति प्रजाः सर्वाः दंड एवाभिरक्षति।
दंडः सुप्तेषु जागर्ति दंडं धर्मम् विदुर्बुधाः॥

अतः एव सर्वयुगेषु राजभिः दंडव्यवस्था सुदृढाकारि। राजतंरगिण्यां चित्रिते भारते अपि दंडस्य महत्ता स्वीक्रियते स्म। दंडधारणतया राजा दंडधरः, दंडधारः अभ्यधायि। अन्तिमं न्यायं स एव चकार। तस्य आसनं धर्मासनं न्यगद्यत। तत्रोपविश्य स सर्वेषां वार्ता अशृणोत्। स्वयमेव च न्यायस्य प्रयासमकरोत्। पूर्वन्तु दंडव्यवस्था धर्माधिकारिभिः व्यधायि, तन्निर्णये च संशये समुत्पन्ने राजा स्वयं विचिन्त्य उभयपक्षं श्रुत्वा च दंडमदात्।[1]

दंडविधाने, दुष्टानां चौराणां व्यभिचारिणां, कर्णेजपानां महान् योगः अभवत्। अत एव तेभ्यो जनाः सतर्का अभवन्। राजानः अमन्यन्त यत् दंडेन शांतिः न संभाव्यते, अतः एव यथाशक्ति दंडनिरोधप्रयासो व्यधायि। जयसिंहस्य निरंकुशं शासनमासीत्, सुदृढ़ा तत्राभूत् दंडव्यवस्था, तथापि अशान्तिस्तत्राभूदेव। अतः राजा प्रायेण दंडनिरोधश्रममकार्षीत्। दुष्टान् दुष्टतात्यागाय प्रैरयत्, ग्रीवायां उष्णीष-प्रदानेन, शिरसि उपानहस्थापनमात्रेणापि अपराधिनः क्षन्तव्या अभवन्। अत एव दंडप्रवर्धनं निरोध्यते स्म।

---

(26) 8–1304, 3327, 2900, 7–365, 1106, 7–1541, 5–352, 6–160. 5–368 से 379, 401, 3–153, 8–2702, 415, 450, 8–278, 2862, 6–14, 5–445।

---

(1) 7–1445, 4–105, 108।

तथापि अपराधिनः अपराधान् अकुर्वन् । अत एव दंडव्यवस्था विधीयते स्म भूपतिना । ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः, कायस्थाः, पशवः सर्वविधा मानवाश्च कृतापराधाः दंडार्हा अमन्यन्त । अचिरादेव दुष्टेभ्यः दंडस्याप्रदानं शासनघातकम्, भयावहचामन्यत । अपराधिने त्वरया एव दंडः अदीयत । पुरुषः, स्त्री, पुत्रः, भ्राता, मित्रं कश्चिदपि अपराधे कृते सति क्षन्तव्यः नामन्यत । किन्तु अपराधस्य ज्ञानायापि वा विशेषप्रयासो विधीयते स्म । प्रच्छन्नरूपेण तस्य ज्ञानं व्यधायि । अपराधस्य निश्चयाभावे कश्चिदपि नैव दंड्यते स्म । निरपरावस्य संशयितापराधस्य वा जनस्य दंडस्य प्रश्न एव नोत्पद्यते स्म । केनचित् कस्मिंश्चित् दोषारोपणे कृते सति राजा उभावपि आहूय स्वस्वपक्षस्थापनायै प्रार्थयते स्म । निरपराधं च कञ्चिदवगत्य तत्क्षणमेव मुक्तबन्धमकरोत् । अपराधसाधने प्रमाणानि प्रस्तूयन्ते स्म तदभावे दंडो नैव दीयते स्म[2] । दंडप्रदानात् पूर्वम् दोषारोपकः आरोप्यश्च न्यायालये आगच्छताम् । एको वादी अपरश्च प्रतिवादी उच्यते स्म । न्यायाधिकारी स्थेयः, न्यायाधीशः धर्माध्यक्षः, धर्माधिकारी, वा उच्यते स्म । न्यायकारिणः अनेके अभवन् ते च उभयपक्षमश्रृण्वन्, लेखकः उभयोरपि विचारान् अलिखत् एकस्मिन् समये (पेशी इति), निर्णयस्याभावे, पौनः पुन्येन उभयपक्षमाययौ । चिराय सम्यक् च श्रुत्वा, न्यायालये समुपस्थितानां सभ्यानां च सम्मतिं लब्ध्वा न्यायाधीश-मंडलं निर्णयं ददौ, प्रधानन्यायाधीशश्च तस्य घोषणामकार्षीत् । यदा च न्यायाधीशेषु परस्परं मतभेदः अभवत्, तदा राज्ञः समीपे स विषयः प्रस्तूयते स्म, स च स्वयं अन्वेषणं विधाय च दोषिणे दंडव्यवस्थां चकार । तस्य निर्णयः अन्तिमः सर्वमान्यश्चाभवत् । कदाचित् न्यायाधीशा राजानो वाल्पेषु संदिग्धविषयेषु वापराधेषु क्षमानीतिं प्रायुञ्जत । कदाचित् च वादिनं प्रतिवादिनं वा अनीतिमार्गे गच्छन्तं श्रुत्वा शासकः धर्माध्यक्षो वा यमराजवत् कठोरहृदयो बभूव । तदनुसारमेव दंडविधानं विधाय दुष्टाय भीषणदंडः दीयते स्म[3] ।

**दंड-प्रकारः**—अपराधिनः बहुविधाः अभूवन्, अतः दंडा अपि नैकविधा आसन्। अल्पापराधस्य दंडः सरलः, असह्यापराधस्य च कठोरः आसीत् । शूलारोपणम्, विषादिभिः प्राणहरणम्, देशनिर्वासनम्, कारागारे बन्धनं, निगडेन करचरणबन्धः, नेत्र-कर्ण-जिह्वा-नासिकाद्यङ्गच्छेदनं, अर्थ-दंडः प्रभृतयो दंडा आसन् । मृत्युदंडः नक्तमदीयत "**निशि संधिमतिः शूले समारोप्य विपादितः ।**" राजद्रोहः जघन्यापराधः आसीत् तत्कृते मृत्युदंडोऽदायि । सुज्जेरनुजो लक्ष्मकः, पितृव्यजः संगरः तस्य श्यालः चित्रियः, सांगकाख्यः प्रतीहारश्च निहताः देशद्रोहकारणात् । कदाचित्तु विद्रोही अंगणे सर्वेषां सम्मुखे नर्त्यते हन्यते स्म च । संगरः अनेन प्रकारेणैव यमलोकं जगाम । मृत्युदंडः

---

(2) 7–1724, 8–117, 2193, 2273, 114, 115, 116, 7–1039, 4–102 से 107, 986, 4–93, 94, 96, 3–25, 7–1165 ।

(3) 7–1169, 6–26, 42, 125, 29, 31, 25, 54, 8–149, 50, 58 ।

अतीव दारुणः कठोरश्चासीत् । तस्मात् राजाज्ञा तत्कृते अनिवार्याभूत् । ता बिना च कस्याचित् हत्या धर्ममर्यादाभंगः अमन्यत ।

कदाचित् देशद्रोही कारागारे निपात्यते स्म । सुज्जितनयः सज्जः, तस्याग्रजः श्वेतिकश्च कारावासं प्राप । राजद्रोही राजकुमारः पुत्रो वापि कारावासेन दंड्य आसीत् । क्वचित्तु देशद्रोही, राजद्रोही वा नेत्रविहीनो व्यधायि । जयसिंहः कोष्ठेश्वरं चक्षुहीनं व्यधत्त । प्रायेण निहतः राजद्रोही पादाभ्यां बद्धः मार्गेषु नीयते स्म, तस्य मुखे च थूत्कारो व्यधायि, प्रस्तराघातस्तच्छरीरे चाक्रियत । शौचस्थाने स निपात्यते स्म । हत्याप्रयासः जघन्योऽमन्यत, तत्कृते मृत्युदंडः निश्चितः आसीत् । कदाचित् दंडप्रयोगः गुप्तरूपेण व्यधायि **(छन्न-दंड-प्रयुक्तिभिः)** तादृशश्च दंडः गूददंडो न्यगद्यत ।[4]

स्वामिना सह द्रोहः भीषणापराधः आसीत् तत्कृते प्राणदंडः अदीयत । जनकचन्द्रस्य विनाशः स्वस्वामिनः हर्षस्य विरोधे विद्रोहेणाभूत् । गंजकादयः विद्रोहिणः, कर्णभूतितेजसेन-परागादयश्चापि शूलमारोपिताः आसन् । राजद्रोहस्य दंडः वेतसाघातः अपि आसीत् । वृहट्टिक्कः सूक्ष्मटिक्कश्च वेतसा एव सुस्सलेन निहतः । देशात् निर्वासनमपि राजद्रोहस्य दंडः अभूत् । सहस्रमंगलः सुस्सलेन विद्रोहकारणात् देशान्निष्कासितः, सुज्जेरपि निर्वासनस्य विचारः जयसिंहेन कृतः, षडयन्त्रकारिणे अपि मृत्युदंडः निश्चितः आसीत् । गुप्तचरैः संग-हंसरथ-जोनरथ-प्रभृतिभिः रचितं षड्यन्त्र-माकर्ण्य सह्लणस्तान् जघान । वधिकाः सूचिकाभिः अंगरक्षिकाभिश्च तस्य प्राणघातम-कार्षुः । षड्यन्त्रकारी विषेनापि व्यापाद्यत । देशद्रोहिणः दंडः अपि मृत्युरेवाभवत् । देशद्रोहिणे यः शरणं ददौ सः देशनिर्वासनदंडं लेभे । ब्रह्म-हत्यायाः प्रयासे कृते सत्यपि प्राणदंडः अदीयत ।[5]

ब्राह्मणाय प्रायेण प्राणदंडो नादीयत । केवलं भीषणे अपराधे एव स शूलारो-पण-विषादिभिः निहन्यते स्मः । अपराधिनस्तस्य मस्तके कुक्कुरस्य चिह्नं व्यधायि । धर्मशास्त्रे अपि तदेव प्रतिपादितमस्ति ।[6] चौरेभ्यः कठोरदंडः अदायि, प्रायेण ते कारागारेषु निपात्यन्ते स्म, कदाचिच्च पशुमारं ताड्यन्ते स्म । श्वपाकस्यापि दंड एतादृश आसीत् । स्त्रीहरणं भीषणापराधः अमन्यत, तस्यापराधी नैकप्रकारेण

---

(4) 7–1231, 889, 2–79, 6–41, 96, 7–814, 92, 4–85, 103, 106, 8–3313, 2451 ।

(5) 8–36, 530, 398, 99, 7–1064, 655, 8–524, 500, 2089, 7–31, 6–215, 8–443, 44, 7–1037, 8–2177 से 81, 5–350. 8–218, 2 से 84, 7–669, 1165, 8–2200, 350, 8–93 से 98, 6–255, 57, 7–637, 1052 ।

(6) 4–96, 8–1073, 6–109, 135 ।

ताड्यन्ते दंड्न्यन्ते स्म। पितृपुत्रयोः यः मतभेदमजनयत् सः अपि कठोरं दंडं प्राप। व्यभिचारिणी नारी नैकक्लेप्रदानैरदंड्यत। तस्याः नासिकादिच्छेदः अक्रियत। हर्षः एकस्याः व्यभिचारिण्याः नासिकादिच्छेदमकार्षीत्।[7]

निबद्धः अपराधी दुर्गे कारावासं प्राप, कारागार एव कारावेश्म न्यगद्यत। तत्र अष्टस्तम्भा अभवन्, बहिर्द्वारं च अर्गलातिष्ठत्, तत्रैव बध्वा निपात्यन्ते स्म अपराधिनः। अपराधिना सह क्रूरो व्यवहारो विधीयते स्म। बहवः क्लेशास्तस्मै अदीयन्त। निगृहीतस्य वस्त्राण्यपि भिन्नान्यभूवन्। मुखं यावत् वस्त्रेण आच्छाद्य अपराधी नीयते स्म। लोठनः एवमेव नीतः। तस्य चरणौ निगडबद्धौ अभूताम्। उच्चलः कायस्थान् निगडबद्धानेव कारागारे चकार। परितः दुर्गम् कारागार-रक्षकास्तस्थुः कदाचित्तु अराधिनः बुद्धिकौशलेन, निष्चक्रमुः।[8]

## युद्धम्, विधिः नीतिश्च

भारतवर्षे युद्धपरम्परा वैदिककालादद्यावधि प्रवर्तते। राजतरंगिण्यां चित्रिते भारते वयं भूपतीन् युद्धनिरतान् पश्यामः।

**युद्धस्योद्देश्यं 'समयः स्थानञ्च**— युद्धस्यानेकानि कारणान्यासन् (1) विजयेन यशः प्राप्तिः अर्थलाभश्च (2) निष्कंटकराज्यस्य स्थापना (3) राज्येच्छा (4) विद्वेषः (5) स्त्री-वस्त्वश्वादीनामपहरणम् (6) एकस्य राज्ञः अपराधिने अन्येन शरणप्रदानं, यथा खलु सुस्सलस्यापराधिने सहस्रमंगलाय गर्गः शरणं ददौ, परिणामस्वरूपं भीषणं युद्धमजनि। इमानि षट्कारणान्यासन् युद्धस्य। **कालः**—वर्षर्तुम् शिशिर—ऋतुं च विहाय प्रायेण सर्वेषु ऋतुषु युद्धान्यजायन्त। वर्षर्तौ नदिपु जलौध—प्रवाहेण सैन्यगमने बाधाभूत्। शिशिरे च हिमवृष्टौ सत्यां शैत्याधिक्यमभूत्। मार्गश्चापि निरुद्धः अजायत। तस्मात् शिशिरे वर्षर्तौ च प्रस्थानं नाभूत्। अस्मिन् समये केवलं युद्धसज्जा सैन्यसामग्रीसंग्रहश्चाक्रियत। शीतसमाप्तौ सेना प्रयाणमकरोत्, शरदर्तोः प्रारम्भे अपि युद्धमयुक्तममन्यत। चैत्र-वैशाख-आषाढ-कार्तिकमासेषु युद्धानां प्रायेणोल्लेखोवरीवर्ति[1]। युद्धे गमनात् पूर्वम् सम्यक् सज्जा व्यधायि। विविध-युद्ध-प्रकाराणामभ्यासः अक्रियत। तदानीं युद्धे तुरुष्कयुद्धं प्रसिद्धमासीत् तस्य खलु बहुशः अभ्यासः अभूत्। युद्धं प्रायेण नदीतटेषु, दुर्गेषु, विस्तृत-क्षेत्रेषु चाभवत्।

---

(7) 7–513, 602, 3–23, 24, 4–96, 8–1073, 6–109, 6–135, 7–1697, 213, 622, 8–274।
(8) 7–1166 2–73।

---

(1) 5–135, 7–1013, 1001, 1121, 1591, 8–502 से 506, 8–2886, 7–1373, 8–1488, 7–50, 915, 8–1848, 5–328, 8–1664, 1497, 7–970, 8–1585,।

**सैनिक-वेषः**—युद्धकर्ता सैनिको न्यगद्यत । गमनात्पूर्वम् सैनिका विशेषवेषं दधुः । शरीरं वस्त्रैः आच्छाद्य तदुपरि कवचं दधुः । कवचः खलु अयोनिर्मितश्चर्म-निर्मितो वा अभूत्, शिरसि लोहनिर्मितं शिरस्त्राणमधार्यत ।

क्वचित्तु हस्तिनः अपि कवचाछन्ना व्यधीयन्त । हस्तेषु खेरकं (ढाल इति भाषा) सैनिका अगृह्णन् । प्रस्थानात् पूर्वम् सैनिका मदिरापानमकुर्वन् कोषपानेन समं च प्रतिज्ञां चक्रुः यत् साधु युद्धं विधाय शत्रुं विजेष्यामः इति । सैनिकानां पादेषु उपानहः अशोभन्त । कटिप्रदेशे, पट्टिकां ते बबन्धुः यत्र खड्गादिकं संलग्नमकार्षुः । विविधैः शस्त्रैस्ते सुसज्जिता अभवन् । ते वै श्मश्रुकेशान् नखकेशं च चिच्छिदुः । यदा खलु सेना प्रस्थानमकरोत् तर्हि दुन्दुभिरवो बभूव । उत्तेजकानि गीतानि च गीयन्ते स्म । सैनिकानां प्रस्थानेन गगनं धूलिधूसरितमभूत्[2]

**युद्ध-प्रकारः**—युद्धस्य नैकप्रकाराः प्रचलिता आसन्, युद्धविधिषु, **तुरुष्क-युद्ध-विधिः** अतीव प्रसिद्धोऽभूत् । अस्मिन् विधौ छलकपटे विश्वासो व्यधायि । एतादृशस्य युद्धस्य दृष्टान्ता बहवा सन्ति । तुरुष्काः खलु मायायुद्धे षड्यन्त्रादिषु च चतुरा आसान्, तेषां नायकः **"मायाचतुरचाक्रिकः"** निगदितः । अस्मिन् प्रकारे, कदाचित् सेना अपरां सेनां छलेन मरुस्थले अनयत् तत्र तं पराजितवती । छलकपटेनैव राजानं मन्त्रिणं, राज्ञीं कोषं वा वशे कुर्तुम् प्रयासः क्रियते स्म । सुस्सलेन पृथ्वीहरेण सह सन्धिधिया त्रयो मन्त्रिणः नागमठं प्रेषिताः, किन्तु पृथ्वीहरेण ते छलेन निहताः । **कूटयुद्धम्**—अस्मिन् प्रकारे कूटनीतेः, प्रयोगः अभूत्, एतादृशे युद्धे एव गर्गः त्रैलोक्यराजप्रमुखान् जघान । **श्येनयुद्धम्** (छापामार इति भाषा)—एतादृशः युद्धप्रकारः अतीव प्रचलित आसीत्, प्रायेण आस्कन्दोद्यता विद्रोहिणः श्येन इवाकस्मादेव आक्रमणं चक्रुः निशि दिवसे वा ते इतस्तो वनेषु गिरिषु अतिष्ठन्, समयं च प्राप्य अरीनाक्रम्य, तन्महतीं हानिं चक्रुः । पृथ्वीहरः अनन्त-देव-आनन्दतिलकसिंहादिभिः मन्त्रिभिः सममेव युद्धमकरोत् विजयं च प्राप । वृक्षैराच्छादितायां गिरिकन्दरायां निवसता पृथ्वीहरेण अकस्मात् निष्क्रम्य राज्ञः सेनाक्रमिता, सुस्सलः अपि उच्चलराज्यं जेतुमिममेव युद्धविधिमंगीचकार । **द्वन्द्वयुद्धम्** द्वयोः पुरुषयोः युद्धं द्वन्द्वयुद्धम् मल्लयुद्धं वा कथ्यते,युद्धस्यास्मिन् प्रकारे युध्यन्तौकेशश्म-श्रूण्यपि हस्तेनाच्छिन्ताम् । दंडादंडि, केशाकेशि आदयः द्वन्द्वयुद्धस्यैव प्रकाराः सन्ति । अस्मिन् प्रकारे खड्गप्रयोगः अपि अभवत् ।दृन्द्वयुद्धे कदाचित् राजा अभिमानिनं जनममारयत्,उच्चलस्तथैवाकरोत्। स वै नैकान् गर्वितान् वीरान् परस्परं द्वन्द्वयुद्धेन अघातयत् । तस्य समये सर्वप्रथमं डामरेषु इदं युद्धमभूत् । **कलहः**-अयं खलु युद्धस्यातीवसाधारणः

(2) 3–406, 405, 6–249, 3–397, 401, 8–283, 7–157, 62, 8–951, 7–1553,1193, 1478, 8–2926, 3138, 3203, 7–976, 665, 666 ।

प्रकारः आसीत्, परस्परं विवदमानयोरेव एतादृशं युद्धं समजनि, वाग्युद्धमपि कलहस्यैव प्रकारः। **व्यूहयुद्धं**—अस्मिन् युद्धप्रकारे विविधव्यूहानां रचना व्यधायि। जिगीषुभिः शत्रवः वृत्ताकारे त्रिकोणयुक्ते वा व्यूहे प्रवेशं कारयित्वा निहन्यन्ते। स्म। महाभारतयुद्धे अभिमन्योःमृत्युः चक्रव्यूहेनैवाभवत्। व्यूहयुद्धे सैन्यानां व्यवस्था सुदृढा भवति स्म, बहूनि तत्र द्वाराणि अभवन् द्वारे विजयं प्राप्यैव जिगीषुः व्यूहमभिनत्। शत्रवः त्रिविधं व्यूहं निर्माय सुस्सले बाणवृष्टिमकार्षुः। रिल्हणं पराजेतुं तदरयः व्यूहद्वयं चक्रुः, किन्तु स्वशौर्येण स उभावपि चिच्छेद। एतदतिरिक्तं **प्रबन्धयुद्धं**, बाणैः क्रियमाणं युद्धं कुन्तानां च **बाणयुद्धं**, **कुन्तयुद्धं**, इत्यादि-भिन्नानां भिन्नोनां शस्त्राणां भिन्ना-भिन्ना युद्ध-प्रकारा अभवन्।[3]

**सैन्य-प्रकारः**—भारतीय-सेनासु चतुरंगिणी सेना सुविख्याता अस्ति। प्राचीन भारते वैदिककाले अपि सेनायाश्चत्वारः प्रकाराः प्रचलिता आसन्। **पदातिः**-यत्र पादेन सैनिका ययुः। **रथी**-रथानां सेना यत्र रथे उपविश्य सैनिका युद्धं चक्रुः। **अश्वसेना**-यस्यां अश्वमारुह्य भटाः युद्धे आगच्छन् अयुध्यन्त च, **हस्तिसेना**-अस्याञ्च गजाः, तदुपरिस्था वीराश्च युद्धं चक्रुः। एतेषां पदाति-रथि-अश्व-गजानां सेना एव चतुरंगिणी सेना न्यगद्यत। बहुशश्च तासामुल्लेखः राजतरंगिण्यां समायाति। पदातिसेनायां सहस्रशः सैनिकाः शस्त्रास्त्रसज्जिताः सन्तः पादैः शत्रुनगरं ययुः, आक्रमणञ्च चक्रुः रथसेनायाःशतशो रथिनः रथमारुह्य चापबाणादिभिरलंकृताः सन्तः, शत्रुषु आक्रमणकार्षुः। सारथिः रथमचालयत्। रथे एव शस्त्राणां संग्रहः व्यधायि। अश्वसेनायां-सहस्रशः अश्वा अभूवन् यानारुह्य योद्धारः युद्धक्षेत्रं ययुः। हयाः खलु हेमसन्नाहवाहिनो बभूवुः, हयसेनायाः सेनानीः हयसेनापतिरभाष्यत। तुरुष्काः प्रायेण तुरंगमैरेव युद्धमकार्षुः। अश्वारोहिण एव सादिनो न्यगद्यन्त। धावतामश्वानां खुरैरुत्थिता धूलिः गगनतलं पर्यच्छदीत्। अश्वा घासमभुञ्जन्। अश्वशालासु ते विश्रामं चक्रुः। अश्वशाला वाजिशाला अभण्यत। कदाचित् युद्धसामग्री अश्वैः, तैः नीयमानैः रथादिभिर्वा युद्धक्षेत्रे अनीयत। गजसेनायां गजा अभूवन् तेषु स्थिताः सैनिकास्तु युद्धमकुर्वन्नेव, हस्तिनोऽपि स्वपादैः शुंडादंडैश्च बहून् शत्रून् जघ्नुः। गजानां विश्रामाय गजागारा हस्तिशाला वा अभूवन्, हस्तिसैन्यमेव राजतरंगिण्यां **हास्तिकं** निगदितम्। प्रत्यकं सेनायाः पृथक् सेनापतिः अभवत्। एतदतिरिक्तम् वर्गविशेषाणामपि सेना आसन्, तन्त्रिणां सैन्यं **तन्त्रिसैन्यं** डामराणाञ्च **डामरानीकं**,एवमेव **एकांगसैन्यं**, **सामन्तसैन्यं** चाप्यासीत्। तन्त्रिणःप्रायेण पदातिरूपं निधाय युद्धमकार्षुः।[4]

---

(3) 7–56, 51, 1149 8–2496, 4–293, 94, 282, 8–782, 8–597, 713, 712, 192, 7–1605, 8–761, 490, 169,24, 7–1704, 1591, 8–1213, 303, 1197, 2832, 1542।

(4) 5–425, 8–2842, 7–904, 188, 346, 766, 5-454, 1-67, 4–312

**अस्त्र-शस्त्राणि** – सैनिका अस्त्र-शस्त्राणि देव इति कल्पयन्ति स्म । (**शस्त्र-देवताः**) । नगरेषु शस्त्रास्त्रस्थापनाय शस्त्रागारा अभवन्, शस्त्रागारस्याधिकारी च नगरशस्त्रभृत् उच्यते स्म । युद्धेषु प्रयुज्यमानानि बहूनि शस्त्रास्त्राणि कल्हणेन बहुशः उल्लिखितानि विस्तरभिया नामैवैतेषां गण्यते । **परशुः** (परश्वधेन) अयमेव कुठारः अपि प्रसिद्धः, **लगुडः**, **यष्टिः** यष्टिधारिणः याष्टीकाः कथिताः, पदाति-सेनायां याष्टीकानां विशेषो वर्गःअतिष्ठत् **कुन्तः** कुन्तभालो वा, **कुलिशं** (वज्रम्) **प्रस्तरः** दुर्गेषु प्रस्तराःनिधीयन्ते स्म ततश्च शत्रुषु प्रस्तरवृष्टिः व्यधायि, भिक्षुसैनिका राजसेनायां प्रस्तरवृष्टिं चक्रुः, प्रस्तरवृष्टिरेव, अश्मवृष्टिरस्ति, सुश्रवसनागस्य भगिनी पर्वतस्य, अश्मैः शिलाखंडैश्च नरसेनां जघान, **इष्टिकाः**, **क्षेपणीयम्**-तथाविधमस्त्रमासीत् यत्र प्रस्तरखंडः निधाय तं च क्षिप्त्वा शत्रुषु प्रहारो विधीयते स्म, **शूलम्**-कुन्तस्यैव प्रकार आसीत् । त्रिशूलं तस्यैव रूपमस्ति, तद्धारी शूली अकथ्यत, रणादायान्तं भिक्षाचरं, कश्चित् योद्धा शूलेनाक्रमितवान् **प्रासः**-अपि कुन्तस्यैव भेदः अभूत् । कपटशून्ये युद्धे प्रास-शूलेषूनां वृष्टिः व्यधायि, खड्गः तद्धारी च खड्गी आसीत्, तस्यैव भिन्न-रूपाणि **धारा खड्गधेनुः**, **असिः**, **असिधेनुः** क्षुरः, **क्षुरिका**, सन्ति । पर्वगुप्तस्य तनयो देवदत्तः मृतस्य पार्थिवस्य शरीरे इमामेव प्रायुंक्त, **शस्त्री**, **कटार**, कट्टारको वा । उच्चल-हत्या कटारैरेव समजनि, **कृपाणः** देव्याः पुरस्तात् नरबलिं विधातुमपि प्रायुज्यत, **कृपाणी** च इत्यादीनि शस्त्रास्त्राणि आसन्, **शंकुः**, **वज्रशंकुः**, अयं खलु तप्तायसा निर्मीयते स्म (**सप्तायः शंकुः**) कीलवदयं तीक्ष्णाग्रः अवर्तत, **हेतिः शरः** बाणः तस्य च बहवो भेदाः, इषु-नाराचादयः आसन् बाणवृष्टेरुल्लेखः बहुशः समागतः राजतरंगिण्याम्, बाणाः खलु भूपतेःनामांङ्किता आसन्, **यन्त्रः**, **उपलः**, **गदा** चेति । एतदतिरिक्तं ब्रह्मास्त्र-आग्नेयास्त्रवारुणास्त्र-शस्त्रशलाकाप्रभृतीनामस्त्राणामपि प्रयोगः युद्धेषु समजायत ।[5]

---

165, 8–736, 2529, 7–772, 64, 4–147, 5–260, 453, 248, 5–452 ।

(5) 6–247, 8–1459, 2316, 32, 33, 6–23. 214, 16, 17, 35, 4–311, 170, 6–273, 8–1685, 1–263, 64, 7–1101, 5–464, 4–477, 8-1885, 1761, 1756, 1161, 2060, 2293, 1505, 3-388, 8–2146, 3401, 7–1061, 1300, 1703, 72, 8–3214, 6–251, 7–1214, 1031, 447, 8–2319, 2321, 1–315, 3–346, 4–453, 5–438 7–1711, 8–3234, 1310, 1312, 3–390, 3–98, 49, 5–450, 7–1051, 1048, 2315, 396, 32, 5–411, 5–218, 105, 8–404, 405, 25, 26, 1778, 1500, 2168, 7–1553, 54, 8–1751, 7–983, 8–2711, 2824, 2036, 7–984, 8–3025, 2–95, 1677, 7–804 (गदा) ।

**रक्षणोपायाः**—शत्रोः रक्षायै विविधा उपाया व्यधीयन्त। प्रधान उपायः, दुर्गाणां निर्माणमासीत्। राजानः स्वनगरस्य परिवारस्य च रक्षायै इतस्ततः भीषणान् कोट्टान् दुर्गाणि वा व्यदधुः। नैकविधानि आसन् तानि दुर्गाणि, गिरौ निर्मितं **गिरिदुर्गम्**, घनवृक्षैराच्छादिते वने निर्मितम् **वन-दुर्गम्**' परितः जलेन परिवारितं **जल-दुर्गमासीत्**, यस्मिन् च दुर्गे एव नगरं निर्मायि **तन्नगरदुर्गमकथ्यत**। इमानि चतुर्धा दुर्गाणि बहुशः वर्णितानि कल्हणेन। दुर्गेषु सैनिकानामन्येषाञ्च जीवनयापनाय सर्वविधं जीवनोपयोगि वस्तुजातं व्यराजत। तत्र वै सर्वविधशस्त्राणां प्रस्तराणां च संग्रहोऽभवत्। येन समये समागते युद्धे तेषां प्रयोगो भवेत्। कोट्टा इमे अतीवदृढा अभेद्याश्चासन्। चित्तौड़-रणथम्भौर-प्रभृतीनि राजस्थान-दुर्गाणि सम्प्रत्यपि प्राचीन-भारतस्य दुर्गाणां गौरवं सूचयन्ति। दुर्गाणां निर्माणं प्रस्तरैः शिलाखंडैश्च समजनि। निगृहीताः शत्रवस्तेषां दुर्गाणामेव कारागारे स्थाप्यन्ते स्म। रक्षकाश्च तत्र नियुज्यन्ते स्म। कोट्टेषु विशाला वाहिनी उवास, तत्रैव सहस्रशो गजाः अश्वा वा अभूवन्। दुर्गाणां भित्तिषु छिद्राणि विधाय युद्धस्थलानि (मोर्चे इति भाषा) क्रियन्ते स्म। परितः दुर्गम् परिखा अभवन्। कदाचित्तु शत्रुसैनिकाः कोट्टान् अनुकूलावसरे चिराय परिवेष्ट्य तान् रुद्धपाथसो व्यदधुः। सर्वेषां वस्तूनां पुरुषाणां वा गमनागमने विरोधोऽभवत्। शस्त्राणामागनमपि न्यरुध्यत। राजतरंगिण्यामुल्लिखितेषु दुर्गेषु दुग्धघात-शिरः शिलालोहरदुर्गाणि प्रमुखानि आसन्। दुर्गरक्षकः दुर्गाधीशः दुर्गाधिपः, कोट्टेशो वाकथ्यत।

अपि च नगराणां रक्षायै तत्परितः विशालाः प्राकारा अभवन्, प्राकारा अपि परिखा-परिवृता अभूवन्। प्राकारेषु सप्त नव वा द्वाराणि आसन्। प्रत्येकं द्वारे सैनिका अतिष्ठन् प्राकारभित्तेः निर्माणमपि तथा व्यधायि यत् सैनिकाः सहजमेव तस्यां बभ्रमुः, तत्र स्थित्वा च युद्धमकार्षुः, नगरमध्ये एव प्रासादा अतिष्ठन् तेषामपि सुरक्षायै विशेष-प्रयासो व्यधायि।[6]

**युद्ध-नीतिः**—युद्धविजयाय साम-दान-दंड-भेदाः चत्वारः अप्युपायाः प्रयुज्यन्ते स्म। एतेषां प्रयोगस्य दृष्टान्ताः पदे-पदे दृश्यन्ते। सल्लणस्य हितैषी गर्गः सुस्सलं प्रति सामनीतिं प्रायुंक्त। युद्धात् पूर्वम् स तदन्तिकं दूतान् प्रेषितवान्। जयसिंहेन अपि विद्रोह-प्रशमनाय स्वसुताया विवाहः सोमपालेन समं विधाय सामप्रयोगः विहितः। सुस्सलेन डामराणां विरोधे चतुर्णामप्युपायानां व्यवहारः कृतः, **उपायाः सामभेदाद्याः रिपुचक्रे प्रयोजिताः**। सुस्सल एकदा, ब्राह्मणेभ्यः कांचनदानं कृत्वा दाननीत्या विद्रोहं प्रशमितवान्। उदयः शत्रुभ्यः धनादिदानं विधाय स्वस्वामिनः कार्यम् समपादयत्। अपि च सन्धि-विग्रह-यान-आसन-संश्रय-द्वैधीभावानां षण्णामपि प्रयोगो बभूव, सन्धि-

(6) 8–2225, 2528, 30, 7–1153, 4–546, 7–596, 1161, 965, 69, 1006, 1181, 87, 1625, 1171, 1270, 1613, 8–1679, 2260, 2543, 65, 16, 58, 2468, 92, 93, 2715।

प्रस्तावो दूतमुखेन प्रेष्यते स्म। प्रतिज्ञा च सकोषपानं व्यधायि, सान्धिविग्रहिकः अधिकारी सन्धेः प्रयासमकार्षीत्। युद्ध-सज्जायां सञ्जातायां यानं विधाय विग्रहः क्रियते स्म। कदाचित् च शत्रोः दुर्बलताः भेदान् च ज्ञातुं तदाश्रयः स्वीक्रियते स्म। कदाचिच्च शत्रुदले गुप्तरीत्या प्रविश्य तदाश्रितेषु सामन्तेषु सैन्येषु च द्वैधीभावप्रयोगो व्यधायि।

युद्धाय प्रस्थिता सेना तीव्रगत्या लक्ष्यं लक्ष्यीकृत्य ययौ। युद्धक्षेत्रप्राप्तेः पूर्वम् सा नैकभागेषु विभक्ताभवत् सा सेना सकटका (टुकड़ी इति भाषा) न्यगद्यत। प्रत्येकं कटकस्यैकः पृथगधीश आसीत्, इत्थञ्चैकस्याः सेनाया बहवः सेनापतय आसन्निति निश्चीयते। (वाहिनीशाः) सेनायाः सैनिकाः अपि उत्तममध्यमाधमा अभूवन् (उच्चावचैः सैन्यैः)। भिन्नानि तेषामङ्गान्यासन्, यथा **खशसैनिकाः, कायस्थसैनिकाः, तन्त्रिणः, एकांगाः डामराः, क्षत्रियाः**, युद्धसमये सैनिकेषु तीव्रतानिवार्यामन्यत। (स्फुरन्योद्धव्यम्)। युद्धे उभे अपि पक्षे बहवःसहायकाः सम्मिलिता अभवन्। एकाकिनं सैनिकमनेके वीरा मिलित्वा अघ्नन्। मल्लकः विज्जराजादिभिः परिवेष्ट्य निहतः। युद्धसमये करचरणानां गतिः विचित्राभवत्, आसनानि च विविधान्यभूवन्। युद्धे मृते शस्त्रशून्ये वा प्रहारः अनुचितः अमन्यत, धर्मविरुद्धं तदासीत् तथापि तत् व्यधायि। युध्यतोः भिक्षाचर-कुमारिययोः रणक्षेत्रे निपतितयोः अपि खशाः तयोः प्रहारमकुर्वन्। क्षत-विक्षते अपि प्रहारः निषिद्ध आसीत्। युद्धे सर्वेषामपि शस्त्रास्त्राणां प्रयोगः समजनि। युद्धावसरे विश्वस्तेष्वपि न विश्वसेदिति चाणक्यनीतिरंगीक्रियते स्म। सैनिकेभ्यः युद्धकाले विशिष्टं प्रवासवेतनमदीयत। युद्धसमये शिविराणि नदीतटे निर्मीयन्ते स्म। गोनन्दो यमुना-नद्याः तटे शिविरं चकार। नक्तं यामिकाः, महाराजस्य सामन्ताः वा शिविर-रक्षां व्यदधुः। सेनानिवेशाः पादपपुञ्जानां मध्ये अपि व्यधीयन्त। संजपालःयवनानां साहाय्येन घने वने शिविरं चकार। विश्रामाय पटकुटीराणि अभूवन्। प्रयान्ती सेना समुद्रतटे विश्रामं कृतवती, तावीवृक्षाणां छायास्वपि भटाः विश्रामं चक्रुः। नारिकेलानां जलं पीत्वा च स्वपिपासां दूरीकृतवन्तः। विपद्ग्रस्तायाः सेनायाः सहायतायै युद्धक्षेत्रे कटकाः (टुकड़ियां इति भाषा) प्रेष्यन्ते स्म। जयसिंहः उदयं विपद्-ग्रस्तं, ज्ञात्वा विजयक्षेत्रं च गत्वा तत्सहायतायै कटकान् प्रेषयामास। सामान्यतः सेना द्विविधाभवत् **प्रधानसेना, साधारणसेना** च, प्रधानसेना साभूत् या प्रधान-सेनापतिना समं ययौ, साधारणी च सा बभूव यस्यां लघुविभागा अभवन्। सा एव कटकपदेन (टुकड़ी इति) व्यवहृता। सेना सम्यक् सनद्धा, स्वर्णादिभिरलंकृता चाभवत्। साधारण-सेनानामीशा 'वाहिनीशाः' न्यगद्यन्त। कदापि सेना समस्तरूपेण युद्धं नाकरोत्, किन्तु बहुषु विभागेषु विभक्ता सती परितः शत्रुमाक्रमत। विभागशून्या सेना सहजमेव विनष्टाभूत्। मुस्सलः निर्विभागां शत्रुसेनां पशुमारममारयत्। पराजितः शत्रुः करप्रदानं स्वीचकार, उपहारादिकञ्च विजयिनृपाय ददौ। कदाचिच्च युध्यन्तः सैनिका अभयदानमयाचन्त। स्वांगुलिं अन्यमङ्गं वा छित्त्वा ते दूरात् पराजय-स्वीकृति-सूचनां ददुः। सैन्यानां युद्धं

परस्परं सम्मुखे स्थित्वाभवत् । भेरीनादे संजाते युद्धं प्रारब्धमभवत् । विजयी च यदा कश्चित् राजाभूत् तदा गगनभेदी जयध्वनिरभवत् । राजा सैनिकेभ्यः उपहारान् ददौ वीरवरेभ्यो ग्रामदानं व्यधायि । पराजितशत्रुणा क्षमायाचनायां कृतायां, स त्यज्यते स्म बन्धनात् । मनस्वी नृपतिः विजयव्रतं गृहीत्वा ययौ, विजयं प्राप्य आययौ प्राणान् वा तत्रैव तत्याज । पलायितं शत्रुमपि स न त्यक्तवान् ।

**दिग्विजय-यात्रा**—प्राचीनभारते चक्रवर्तिनो राजानः दिग्विजयस्य कामनाम-कुर्वन् । सर्वासु दिशासु स्वप्रतापमाधिपत्यञ्च प्रसारयितुं ते इमां यात्रां समपादयन् । दिग्विजययात्राया उद्देश्यं विजयकामनया सह जनेभ्यः अभयप्रदानमप्यासीत् । किन्तु चक्रवर्ती नृपतिः तदैव यात्रायै प्रस्थानमकरोत् यदा तस्य स्वीयं राज्यं सर्वथा निष्कंटकं शान्तियुक्तं चाभवत् । यात्रा प्रस्थानात्पूर्वम् विशेषसज्जा व्यधायि । प्रत्येकं विजयेच्छुः राजा अपकारिणां शत्रूणामतिशयापकार एव नीतिरस्तीति विचिन्त्य, विजयोद्यमाय सर्वसाधनानि संगृहीतवान् । गमनात् पूर्वमुच्चाधिकारिणं राज्ये न्ययुंक्त ।

लक्षशः सैनिकाः सुसनद्धा भूत्वा नगरात् बहिर्ययुः । अवन्तिवर्मणो दिग्विजय-यात्रायां सैनिकानां नवलक्षमासीत् । शंकरवर्मणः बले नवलक्षं पदातयः, लक्षमेकं सा-दिनः शतत्रयं हस्तिनश्चासन् । सेनायां पदातयः सादिनः रथिनः गजारूढ़ाश्चाभवन् । अग्रे पताका ययुः राजा तु विशालं द्विपेन्द्रमारुह्यागच्छत् । गच्छन्ती सेना तुमुलं जयघोषं कुर्वन्ती प्रययौ । भीताः शत्रवः कन्दरासु पलायांचक्रिरे । विजिगीषुः राजा मस्तके वीरपट्टांचलं बबन्ध । चापबाणैः, करवालेन, कवचेन चासौ सज्जितः अभूत् । दिग्वजयाय प्रस्थितः राजा महानदीवत् अग्रे अग्रे ययौ, यमराज इव स विलोक्यते स्म । मार्गे च सामन्तरूपाः कुल्याः तत्सेनानद्यामममिलन् । पार्थिवः मार्गे समागतानां राज्ञां बद्धमूलां लक्ष्मीमुदपाटयत् । अल्पकाले एव च तेषु भयं शोकञ्चाजनयत् । प्रस्थानसमये च सैनिकाः पताकां दधुः, भेरी-तूर्यादीनां वाद्यानाञ्च ध्वनिः बभूव, यया सैनिकेषु महान् उत्साहसंचारो बभूव । विद्वेषिणश्च भीता अभवन् । आक्रमण-समये अपि भीषणो दुन्दुभिरवः समजनि । यात्रायां सम्राट् अकामयत यदहं द्वीप-द्वीपान्तराणि प्राप्नुयाम् । तत्कृते च पूर्वम् वसुधां जित्वा नृपतिः समुद्रमुत्तीर्य द्वीपाद्द्वीपान्तरमगच्छत् । नव-द्वीपेषु प्रविशतस्तस्याज्ञाया उल्लंघनं नाभूत् । तदाज्ञामाकर्ण्य पराजिता राजानः बद्धांजलयः सन्तः अतिष्ठन् । सम्राज आज्ञा सामन्तानां किरीटेष्वदृश्यत । अत एव पार्थिवः अकुंठितशासनो निगदितः । स्थाने-स्थाने तुमुलं युद्धमभूत् राजा च विजिग्ये । पराजिताः पार्थिवा विशेषचिह्नानि दधुः । तुरुष्काः करान् पीठे चक्रुः, दाक्षिणात्याः शाटिकाकोणमधश्चक्रुः । केचित् मुंडितकेशा अभवन् । केचित् पराजिताः नरपतयस्तु अभयदानमयाचन्त, तत्कृते स्वांगुलीः चिच्छिदुः ।

दिग्विजयं विधाय समस्त-शत्रून् विजित्य पार्थिवः त्वरया स्वराज्यं प्रत्याययौ । सेना जयघोषमकरोत् । विजयस्मृतिं चिरस्थायिनीं विधातुं सम्राट् नगरमंदिरादीनां स्थापनामकार्षीत् । स्वनाम्ना च नगर-नाम चकार, शंकरवर्मा शंकरपुरं स्थापितवान् ।

ललितादित्यः बहूनि मंदिराणि, सुनिश्चितपुरादानि नगराणि च समस्थापयत् प्रीत-मनाः सम्राट् स्वनिकटस्थेभ्यः बन्धुवर्गेभ्यश्च धनराशि नगरादिकञ्च ददौ। इतर-राज्यान्निष्कासितान् शरणागतान् पार्थिवान् पुनः तद्राज्ये आनयत्। तेभ्यश्च ददौ तद्राज्यम्। शंकरवर्मा भोजात् राज्यं गृहीत्वा पुनः पूर्वस्मै राजकुमारायादात्। दिग्वि-जयात् प्रतिनिवृत्तः नृपतिः स्वर्ण-मणि-रत्नादिकोषं नीत्वागच्छत्। तं विस्तृतं विजितं प्रदेशं च स सेवकेभ्यः ददौ। सर्वत्र विजयस्य प्रतिज्ञां कृत्वा, तान्च संपूर्य एव स आययौ। दिग्विजयात् प्रतिनिवृत्तः सार्वभौमः, चक्रवर्ती सम्राट् वाकथ्यत।[7]

---

(7) 7–1597, 8–603, 1929, 7–1152, 8–391, 1644, 754, 77, 1517, 1928, 5–326, 7–488, 5–431, 7–1185, 8–2201, 17, 72, 23, 29, 1748, 1773, 741, 1–60, 4–515, 8–2264, 4–219, 5–431, 7–1185, 8–2201, 1772, 155, 1676, 5–422, 23, 137, 8–440, 8–3145, 48, 3403, 440, 41, 5–452, 728, 2845, 471, 3–73, 7–916, 4–132, 7–1154, 1515, 8–1594, 2269, 1998, 1738, 1696 2605, 2942, 2642, 2395, 7–1708, 3–333 से 35, 4–544, 534, 441, 407, 296, 8–574, 2660, 3–27, 28, 377, 342, 343, 285, 186, 5–137, 143, 145, 144, 141, 3–72, 4–277, 5–333, 8–342 140, 5–148, 49, 42 8–1081, 735, 4–538, 1–365, 4–129, 3–30, 68, 4–581, 339 178, 5–138, 50, 56, 35 से 37, 51, 76, 77, 83, 81, 89, 3–80।



शङ्करपत्तने राज्ञा सुगन्धया निर्मितस्य सुगन्धेशमन्दिरस्यावशेषाः [पृ. ७९]



१. २. वितस्तातटे स्थितम् नीलनागतीर्थम् [पृ. २३१] नीलनागपूजास्थलम् [पृ. २२२]

१. वितस्तानदी-पर्वतस्रोतसो निर्गत्य, जलकुंडमार्गेण निर्गच्छति [पृ. २३१]

सम्प्रति-वेरीनाग इति



२. जलकुण्डात् निर्गतायाः वितस्तायाः प्रथमप्रवाहः [पृ. २३१]

# वितस्तातटे स्थितम् वाराहक्षेत्रतीर्थम् (सम्प्रति वारामूला)



वाराहमंदिरस्य नदी-
तटस्थं प्राचीनरूपम्
(पृ. २३२)

वाराहमंदिरस्य वर्तमान-
रूपम् (पृ. २३२)



तूलमूल्यतीर्थम् (सम्प्रति क्षीर-
भवानी ) प्राचीनमंदिरस्य वर्त-
मानरूपम् (पृ. २३०)



# अमरेश्वरतीर्थम्, अमरेश्वरयात्रा च



अमरेश्वरगुहा, हिमलिङ्ग-पूजास्थलम्



अमरेश्वरयात्राया : द्वितीयं विश्रमस्थलम् "शेषनागः"

"अमरेश्वर-यात्रायां जनैरद्यापि दृश्यते" १-१२७ (पृ. २२२,२३३)



अमरेश्वरयात्रायां अंतिमे "पञ्चतरणी" इति विश्रमस्थले लेखकः [ पृ. २३३ ]

## अमरेश्वर-यात्रा, गुहा च



अमरेश्वर-गुहायां प्रविशन्तः शतशो यात्रिणः, लेखकश्च
(अधस्तात्) तिथिः-२२.८.६७ पृ. २२२, २३३



परिहासपुरादानीता श्रीनगरसंग्रहालये
स्थापिता त्रिमूर्तिः पृ. २१६

षष्ठः तरंगः

# संस्कृतौ धर्मः दर्शनञ्च



भारतीय-संस्कृतौ धर्मस्य महत्त्वपूर्णं स्थानं वरीवर्ति। केचित्तु अपक्वमतयो जनाः धर्मे संस्कृतौ चाभिन्नत्वं पश्यन्ति किन्तु न तत्तथास्ति। **"धर्मं चर, धर्मान्न प्रमदितव्यम्"** इत्यादि–वाक्यैरस्माभिः धर्मचर्या तु प्रायेण विधीयते किन्तु कः धर्मः किं तल्लक्षणमिति न सम्यक् विचारितम्। वेदेषूपनिषत्सु, स्मृतिषु, रामायण-महाभारतादि-महाकाव्येषु, गीता-प्रभृत्युपदेश-ग्रन्थेषु, दर्शनेषु, बौद्ध-जैनप्रबन्धेषु च धर्मस्य बहुविधाः परिभाषाः सन्ति। सर्वेषां धर्मग्रन्थानां धर्माचार्याणाञ्च मतवैविध्यमस्ति तस्य व्याख्यायाम्। अत एवाह महाभारत-रचयिता वेदव्यासः—

वेदा विभिन्नाः श्रुतयो विभिन्नाः नैको मुनिर्यस्य वचः प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥

ऋग्वेदे धर्म-शब्दः स्थानद्वये प्रयुक्तः, नियम-विधान-सूचकश्च तत्रास्ते। एकस्मिन् मंत्रे चासौ नपुंसि वर्तते **"यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन्"** (पुरुष-सूक्ते)। वेदसंहितासु किल विविध-देवी-देवानां स्तुतिरस्ति। उपनिषत्सु धर्माचरणोपदेशस्तु कृतः खलु, किन्तु धर्मशब्दव्याख्या न प्रतिपादिता। तत्र खलु ब्रह्मप्राप्तिः, आत्मज्ञानञ्च प्रधानतमो विषयः, तच्चावाप्य तथाचरणमेव धर्मः इति उपनिषदां मतम्।

दर्शन-शास्त्रेषु **"यतोऽभ्युदयनिः श्रेयस्सिद्धिः स धर्मः"** इति धर्मलक्षणमुदाहृतं न्यायशास्त्रे। भौतिकाध्यात्मिकक्षेत्रयोः सर्वविधा उन्नतिरेव धर्म इति तस्य सारांशः। धर्मशास्त्रेषु विविधानि धर्मलक्षणानि निगदितानि।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षात् धर्मस्य लक्षणम्॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

इत्यादिषु धर्मलक्षणमुक्तम्। अपि च क्वचित् वर्णाश्रम-कर्तव्यपालनं धर्मपदेनाभिहितम्। किञ्च कानिचिदेकाङ्गानि लक्षणान्यपि कृतानि सन्ति॥ **"आचारः परमो धर्मः"** **"नहि सत्यात् परो धर्मः"**, **"अहिंसा परमो धर्मः"**॥ एवञ्च मतवैविध्यं स्पष्टं शास्त्राणाम्, धर्म-व्याख्याविषये। व्याकरण-दृष्ट्या धृधातोः मन् प्रत्यये धर्मशब्दो निष्पद्यते, त्रिविधा खलु विद्यते तस्य व्युत्पत्तिः।

**"ध्रियते लोक: अनेन", "धरति धारयति वा लोकं", "ध्रियते स, धर्मः"** इदमेव च मनसि निधाय महाभारतकारः **"धारणात् धर्म इत्याहुः धर्मो धारयते प्रजाः"** इति लक्षणमकार्षीत्। अस्मिन्नेव च लक्षणे सर्वविध-लक्षणानामन्तर्भावो विधातुं शक्यते। धारणन्तु तस्यैव भवति यत् परिणामे सुखावहं मङ्गलकरं वा स्यात्, वेदोपनिषद्स्मृति-ग्रन्थानां विषयस्य धारणेन यथैव जनकल्याणं जायते तथैव अहिंसा-सत्य-सदाचार-धृति-क्षमा-प्रभृतीनां धारणेनापि मानवस्य कल्याणं भवति। समाजकल्याणाय देशेन धारिता वर्णाश्रम-व्यवस्थापि, उक्तव्युत्पत्या धर्मान्तर्गतेवास्ते। तस्मात् **"देशाय समाजाय, निजजीवन-हिताय च ये गुणाः, यानि कार्याणि वा धार्यन्ते तेषां धारणं स्वीकरणं वा धर्मः अस्ति।"** इति मम मतम्।

यथा हि अग्नेः धर्मः उष्णत्वं खलु। उष्णताया धारेणेनैवाग्नेः सत्ता वरीवर्ति तथैव धर्मं विना समाजस्य सत्ता व्यर्था। भारतीय-संस्कृतेः आधार-स्तम्भ एव धर्मः विद्यते। विश्वे विनाशं प्रति प्रवृत्तिः धर्मत्यागादेव समायाता। **"धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः"** इत्यादि-शब्देषु मनुना तन्महत्त्वं प्रदर्शितम्। अत एव धर्म-शब्दस्यातीव व्यापकः अर्थो वर्तते। कुलधर्म-जातिधर्म-देशधर्म-प्रभृतयस्तस्य सीमानः सन्ति। जीवनस्य नैतिक-नियमाः धर्मान्तर्भवन्ति, अमुमेव दृष्टिकोणं मनसि कृत्वा भगवता मनुना संयम-अक्रोध-सत्य-प्रभृतयो दशगुणा धर्मलक्षणे निहिताः।

महात्मा बुद्धः धर्मस्याधारशिलायां सृष्टिं मानव-जीवनञ्च स्थिरममन्यत। **"धम्मं शरणं गच्छामि"** इति वाक्यस्य प्रचारसमये अयमेव महानादर्शः अवर्तत। कस्यचित् मतविशेषस्य, सम्प्रदाय-विशेस्य वा नामैव धर्मः वर्तते इति नांगीकृतमाचार्यैः। धर्मस्तु नित्यः अस्ति तत एव अर्थकामयोः प्राप्तिर्जायते। वाल्मीकिः धर्मं चरित्रस्य पर्यायवाचिनमाह। **"रामो विग्रहवान् धर्मः"** इत्यासीत् ऋषेः भावना। वेदे तु **"एकं सद्विप्रा बहुधा वदन्ति"** इत्यादिमंत्रैः "विभिन्ननामभिः स्तूयमानमेकं ब्रह्मतत्त्वमेव सर्वेषां धर्माणां सारः अस्तीति प्रतिपादितम्।

राजतरंगिण्यां चित्रिते भारवर्षे अपि एतादृशाः धर्मसम्बन्धिनो विचाराः प्रसृता आसन्। क्वचित्तत्र वेदसिद्धान्ताः क्वचिच्च बौद्ध-जैन-प्रभृतीनां सिद्धान्ताः, क्वचिच्च शैवादिधर्मसम्प्रदायाः, लब्धप्रभावाः संलक्ष्यन्ते। राजतरंगिण्यां धर्मशब्दः नैकवारं समागतः। चतुर्थतरंगे श्वरूपे धर्मराजस्यावतारस्योल्लेखः कविना कृतः।

**'श्वविग्रहेण धर्मेण पांडुसूनोः पुरा यथा'** प्रथमतरंगे 'अव्यभिचारिणा' (अविनश्वरेण) धर्मेण चंचला लक्ष्मीः परलोके अप्यनुगच्छतीति प्रतिपादितम्। **'यस्तमयोजयत् धूर्तो धर्मेणाव्यभिचारिणा'** धर्माचरणं सुकृत-संप्रापि-हेतोः व्यधायि। क्रूराः पापकारिणो जना अपि धर्माचरणेन पुण्यं प्रापुः। परोपकारकार्याणि एव च धर्मान्तर्गतान्यभूवन्। तथाविधानि कर्माणि कृत्वा मनुष्याः परलोकाय पुण्यसंचयं चक्रुः मोक्षं च प्रापुः। चंडचेष्टितः मिहिरकुलः पुण्यसंचयाय धर्मकृत्यान्यकार्षीत्। **"धर्मम् सुकृत-संप्राप्तिहेतोः सोऽपि यदाददे"**। कूपकुल्या-मन्दिरादीनां, नगराणाञ्च निर्माणं

सत्पात्रेभ्यः दानं, पुण्यकर्मणां सम्पादनेन च पुण्य-प्राप्तिरवगम्यते स्म। दुराचारान् विनाश्य सदाचार-प्रवर्तनमपि धर्मकार्यमभण्यत। दुराचारश्च हिंसा-असत्य-क्रोध-लोभ-मोहादिदुर्गुणानां वर्धनेन, अवर्धत। तन्नाशेन च सदाचारवर्धनं जनाः स्वीचक्रुः। मिहिरकुलः अपि विनष्टधर्मे देशे, दुर्गुणान् तान् विनाश्य मन्दिरादिकं च निर्माय पुण्याचार-प्रवर्तनमकार्षीत्। सततं धर्माचरणेन चपला लक्ष्मीः अपि न जहातीति, लोकानां विश्वासो बभूव। स्वकर्तव्यपालनमपि धर्मत्वेनांगीक्रियते स्म। जनहिताय जीवनोन्नत्यै च क्रियमाणं प्रत्येकं कर्म धर्मपदेन व्यपदिश्यते स्म।

**देवाः**—वैदिकाः पौराणिकाश्चानेके देवी-देवताः तस्मिन् समये अपि जनैः पूज्यन्ते स्म। देवताः खलु देवपदवाच्या अभूवन्। दिवौकसः ते न्यगद्यन्त। एतेषु च इन्द्र-अग्नि-वरुण-सूर्य-द्यावापृथिवी-यम-प्रभृतयः प्रमुखा अभूवन्[1]। अस्मिन् समये वेदेषु वर्णितानां देवानां स्वरूपं विस्मृतप्रायमासीत्। प्रकृतेः दिव्यशक्तीनां प्रभावः अपि समाप्तप्रायोऽभवत्। विष्णुः नासीदिदानीं केवलं सूर्यप्रतीकः, किन्तु पृथक्रूपेण सर्वशक्तिमान् देवः अभूत्। तस्य एव च रामकृष्णादयः अवतारा अमन्यन्त।

नवीनदेवतानामपि कल्पना समुत्पन्नासीत्। ब्रह्म-विष्णु-शिवानां त्रिमूर्तिः, कुबेरः, लांगली, शेषः[2], कामदेवः, लोकपालश्च तत्र मुख्याः सन्ति। ब्रह्मणः कृते कविः स्वयम्भू-चतुरानन-वेधस्-द्रुहिण-प्रभृति-शब्दान् प्रायुंक्त। एवमेव विष्णवे, हरि-पुरुषोत्तम-त्रिविक्रम-पुंडरीकाक्ष-अच्युत-चक्रधर-कृष्ण-नारायण-वासुदेव-प्रभृतीनि नामानि समागतानि। शिव एव च ईश-ईश्वर-महेश्वर-परमेश्वर-अष्टमूर्ति-वृषभध्वज-शूलपाणि-स्थाणु-नील-लोहित-शंभु-हर-गिरीशप्रभृतिभिः नामभिः स्मृतः अस्ति। नागोऽपि पूज्यते स्म।

**देव्यः**—देवीषु इन्द्रस्य पत्नी शची, सरस्वती, पृथिवी, लक्ष्मीः, पार्वती, सप्त-अम्बिकाः, सन्ध्या इत्यादय उल्लिखिताः सन्ति। सरस्वती ब्रह्मणः प्रिया, लक्ष्मीश्च विष्णुप्रिया विख्याता लोके। ब्राह्मी-माहेश्वरी-कौमारी-वैष्णवी-वाराही-इन्द्राणि-चामुण्डा* चेति सप्तमातरः सन्ति। राजतरंगिण्यां सर्वासामपि देवीनां संकेता विद्यन्ते।

**भूचरा देवा देव्यश्च**—अष्ट देवयोनयो निगदिताः खलु भारतीय-ग्रन्थेषु। ताश्च विद्याधराः, अप्सरसः, यक्षा, राक्षसाः, गन्धर्वाः, पिशाचाः, गुह्यकाः, सिद्धाः, भूतगणाश्चेति। सर्वेषामप्येतेषां स्फुटमुल्लेखो वर्तते राजतरंगिण्याम्। विद्याधराणां राजा विद्याधरेन्द्रः न्यगद्यत, अद्यापि च निगद्यते। तस्मै विद्याधरेन्द्राय च सुश्रवसनागेन

---

(1) 1–281, 305, 306, 4–75, 76, 1–281, 305, 306, 307, 314, 318, 312, 1–91, 92, 99: 34, 41, 290।

(2) 1–4, 262, 1, 30, 61, 28, 29, 30। विलोक्यतां चित्रम्।

स्वकन्या विवाहाय परिकल्पिताभवदित्यनेन, विद्याधरेषु नागेषु च विवाहसंबन्धोऽभूदिति निश्चीयते "**पिता विद्याधरेन्द्राय प्रदातुं परिकल्पिता**" यक्षाः प्रस्तरशिलासु न्यवसन्, तोय-विप्लवशान्तिञ्च चक्रुः । किन्नराः पराक्रमिणां पराक्रमगीतमगायन् "**किन्नरैर्गीत-विक्रमः**" । गन्धर्वा विविधकलाकुशला वर्णिताः, तेषां नगरस्य च समृद्धिः कविना वर्णिता "**गन्धर्वनगरोपमाम्**"[3] । पिशाचा भूतेषु परिभ्रमणं कुर्वन्तीति तदा प्रसिद्ध-मासीत्, अद्यापि च तथैव जना मन्यन्ते । सिद्धा भूतगणाश्च शिवस्य अनुचरा अमन्यन्त, मन्यन्ते च । गुह्यकाः प्रस्तरसेतु-प्रभृतीनां कार्ये प्रवीणा निगदिताः, राक्षसाः निशाचर-पदवाच्या इतस्ततो बभ्रमुः जनपीडनञ्च चक्रुः[4] ।

**दैत्य-दानवाः**— देवानां विरोधिनः दैत्याः सुरद्विषश्च न्यगद्यन्त । रावण-कलिय-लवण-मधु-कैटभ-प्रभृतीनां कविना उल्लेखः कृतः । राहु-केतू उभौ क्रूरग्रहौ पुराण-परम्परायां दैत्यरूपे परिणतौ ।

**अन्यत्र देवत्व-कल्पना**—वनवासिनां वनदेवतानामपि संकेतो विद्यते, पितृगणाः, सप्तर्षयः, ब्रह्मर्षयश्चापि देवतुल्या अमन्यत । राजसु राज्ञीस्वपि च देवत्वदेवीत्व-कल्पना अक्रियत ।

काश्मीराः पार्वती तत्र राजा ज्ञेयो हरांशजः ।
नावज्ञेयः स दुष्टोऽपि विदुषा भूतिमिच्छता ।। 1–72 ।।
प्रज्ञानां मातरस्तास्तामपश्यन् देवतामिव ।। 1–73 ।।

इति श्लोकद्वयं तद्देवत्वसूचकम् । अपि च शचीनरः क्षितिशचीपतिरभिहितः । सुरेन्द्रः इन्द्रादप्यधिको निगदितः[6] । सर्वेषामेतेषां देवानां देवीनाञ्च गुणाश्चरितञ्च कविना पृथक् शब्दैः विस्तरेण प्रदर्शितम् । "**इमे देवाः पूज्याः आसन्**"—

**(1) शिवः**—भगवान् शिवः नैकपद्येषु अनेकनामभिः स्मृतः, शंकर-महादेव-महेशप्रभृतीनि तस्य विख्यातान्यभिधानानि सन्ति । एतदतिरिक्तं ईश-ईश्वर-रुद्रपदानि स्वनामभिः अन्यैः शब्दैः सह वा संयोज्य नृपैः, शिवस्यानेकनामभिः मन्दिराणि विनिर्मितानि । पूजा च तत्र प्रारब्धा । तद्यथा **नन्दीशः** शिवः सोदरतीर्थे अवतारं जग्राह । जलौकस्तत्र तत्कृते मन्दिराणि चकार । स नृपः अपि नन्दीशावतारोऽमन्यत । नन्दिक्षेत्रे आसीत् नन्दीशनिवासः । **विजयेशस्य** पूजा श्रीनगर्यामभवत् । तत्रैव तन्मन्दिरं, अशोकेन निर्मितम् ।* भूतानामीशत्वात् भूतेशपदवाच्यः शिवः नन्दिक्षेत्रे अपूज्यत । जलौकः तत्र तन्मन्दिरं निर्माय रत्नस्वर्णादिभिः तत्पूजाञ्चकार ।

---

(3) 1–218, 319, 159, 197, 274 ।
(4) 1–292, 156 ।
(5) 1–26, 27, 262 ।
*विलोक्यतां मंदिरावशेष-चित्रम् ।
(6) 1–99, लेभे यस्य सुरेन्द्रस्य सुरेन्द्रो नोपमानताम् 1–92 ।

हर्म्यकूटसमीपे अपि तस्य पूजा अभूत्। नृपतिरशोकः म्लेच्छ-विनाशाय तपस्तप्त्वा भूतेशादेव तनयं प्राप। **बकेशस्य** शिवस्य वकश्वभ्रे, **शतकपालेशस्य** च खेर्यां मन्दिर-मभूत् पूजा चाभवत्। **उग्रेशाभिधानः** शिवः अनेक-स्थलेषु अपूज्यत। नरेन्द्रादित्यस्य नृपतेः गुरुः उग्रेशमन्दिरं मातृचक्रञ्च निर्ममे।[7]

**ज्येष्ठेश्वरः**—इति नाम्ना शिवः **ज्येष्ठेश**नाम्नापि अर्च्यते स्म। गोपादित्यो गोपाद्रौ तं प्रतिष्ठाप्य तदर्चनां प्रावर्तयत्। अहीनां सर्पाणाञ्च ईशतया शिवः **अहीश्वरः** नीलः वा अभाष्यत। चन्द्रदेवाख्यः द्विजः तपसा तं प्रसाद्य तुहिनविप्लवं शान्तं चकार। नीलस्तस्मै नीलपुराणमपि जगाद। **भूतेश्वर**–प्रतिष्ठा नरेन्द्रादित्येन कृता[8]। **गोकर्णेश्वर** इत्यभिधानस्य शिवस्य मूर्तेः मन्दिरस्य च स्थापनां गोपादित्यसूनुः गोकर्णः अकार्षीत्। दुष्टानां रोदयिता शिवः **रुद्रः** अभिधीयते स्म। वेदेषु अयं देवः अत्यन्त-प्रसिद्धः महत्त्वपूर्णश्चास्ति। पौराणिको रुद्रस्तु ततो भिन्न एव। राजतरंगिण्यां तस्यैव प्रभावः संलक्ष्यते। रुद्रश्चासौ ज्येष्ठरुद्रश्चापि अकथ्यत। ज्येष्ठरुद्रस्य मूर्तेः स्थापनां जलौकः श्रीनगर्यां चकार। चीरमोचनतीर्थे अपि असौ वन्दनां प्राप। **अर्धनारीश्वरस्य** शिवस्य वामार्धे तस्य वामा पार्वती उवास, मस्तकं तस्य वह्निज्वालाङ्कितं, कर्णौ सुकुंडलौ, ग्रीवा ससर्पा, विराजते। दुर्गुणानां पापानाञ्चापहर्ता शिवः हर-संज्ञां लेभे, नन्दिक्षेत्रे तदावासः अभूत्। चन्दनादीनि वस्तूनि तत्पूजायां प्रायुज्यन्त। हासः अपि प्रसिद्ध एव। 'स च धवलः खलु '**हरहास-सितैः**' भक्तः हरप्रसादं प्राप्नोति स्म[9]।" गिरिजायाः, उमायाः गौर्याः वा पतिरसौ, **गिरिजापतिः**, **उमापतिः**, **गौरीश्वरः** च न्यगद्यत। त्रयाणामपि प्रसादेन भुक्तिमुक्ती प्राप्येते। पापसूदनतीर्थे उमापति-मन्दिरं तस्य प्रतिमासीत् काष्ठामयी। **गिरिजापतिः** चीरमोचने अपूज्यत। तत्रैव जलौकः तत्सायुज्यं लेभे। शिरसि चन्द्रधारणत्वात् शिवः **शशिशिखामणिः**, **शशाङ्कशेखरः**, **सुधासूतिमौलिः**, खण्डेन्दुमंडनः, इत्यादि-नामभिरपि वन्द्यते स्म। अभिमन्युः शशाङ्कशेखरस्य मंदिरं तत्र तन्मूर्तिञ्च अभिमन्युपुरे स्थापितवान्। सिद्धः खंडेन्दुमंडनस्य, सुधासूतिमौलेः शिवस्य वा उपासक आसीत्।[10] तस्य च पूजायां मणिरत्नादीनि तेनादीयन्त। षष्ठिमब्दान् भुवं प्रशास्य स शशिशिखामणेः लोकं जगाम।[11]

**लिङ्गपूजा**— शिवस्य लिङ्गपूजापि भारते प्रचलितासीत्, अद्यापि च प्रवर्तते।

---

(7) 1–223, 124, 130, 150, 105, 148, 107 टि० 329, 335, 348।

(8) 1–113, 341, 182, 183, 347, 182।

(9) 1–346, 26, 27, 124, 151, 127, 149, 150, 2, 36, 90, 155।

(10) 1–152, 32, 71, 152, 175, 279, 280, 282।

(11) 1–267, 194।

राजतरंगिण्यामनेकस्थानेषु लिङ्गस्थापनायाः तत्पूजायाश्च स्फुटमुल्लेखो वरीवर्ति। अमरेश्वरे, हिममयस्य अमरेश्वर-लिंगस्य पूजा अभवत्, प्रतिवर्षं यात्रापि अभवत् सम्प्रत्यपि च भवति। मया अपि च सा यात्रा कृता कश्मीर-यात्रायाम् 1967 ख्रीष्टाब्दे। अमरेश्वर-तीर्थमेव सम्प्रति अमरनाथ इति प्रसिद्धम्*। बटेश्वर-लिङ्गस्य, अनेकोषाञ्च शतशः लिङ्गानां वर्णनमपि कविना कृतम्।+

**2. नीलः**— अयं खलु देवः नागाकृतिः अनुमीयते। यतः केषुचित् स नीलनागः निगदितः। नीलस्य पूजा प्रायेण कश्मीर-प्रदेशे प्रचलितासीत्। कविः कथयति यत् तस्य पूजया हि दोषा उपद्रवाश्च शमं यान्ति। तस्य पुराणविधेरपि उल्लेखो वरीवर्ति। अयमेव नागाधीशः अमन्यत।[12]

**भैरवः**-- भगवान् शिवः भैरव-नाम्नापि भारते पूज्यते स्म एतदतिरिक्तं जडचेतन-गुरुरसौ चराचरगुरुः, स्थाणुश्चापि अभण्यत।[13]

**4. इन्द्र**—इन्द्रदेवः नैकनामभिः भारते वन्द्यते स्म। ऋग्वेदे शतशः मन्त्रैः स्तुतः वीरः इन्द्रः, राजतरङ्गिण्यां पौराणिकदेवत्वरूपं प्राप। द्रुहिण-सुरेन्द्र-गोत्रभिद्-इन्द्र-शचीपति-शतमन्यु-शतक्रतु-पुरुहूत-हरि-वज्रपाणि-पुरन्दर-शक्र-मघवा-वासवप्रभृतीन्यनेकानि तन्नामानि प्राप्यन्ते राजतरंगिण्याम्। मथुरासंग्रहालये तस्य प्रतिमाः मया दृष्टाः। तस्य पत्नी शची प्रसिद्धा। अनर्घमहिमः असौ सर्वेषामाश्चर्यजनकानां वैभवानां स्वामी अभिहितः। स्ववज्रेण दुष्टान् हन्ति। इन्द्रः यज्ञस्य देवता मन्यते। स्वयमपि शतं यज्ञान् स चकार, अतएव शतकतुः कथितः। तस्य पुत्रस्य जयन्तस्य, नन्दनोद्यानस्य चापि उल्लेखो विद्यते[14]।

**5. विष्णुः**—वेदानां, महिमाशाली सूर्यरूपः विष्णुदेवः अपि, राजतरंगिण्यां पौराणिक-विष्णुरूपं धत्ते, तस्य पूजा च नैक-स्थानेषु प्रवर्तिताभूत्। उपेन्द्र-चक्रभृत्-चक्रधर-चक्रीप्रभृतीनि तस्य नामानि प्रसिद्धानि खलु। चक्रधारणतया विष्णुः चक्रभृत्-केशव-चक्रधर-चक्री-नामानि प्राप। चक्रेण स मधुकैटभयोः दैत्ययोः नाशमकार्षीत्। तयोश्च रुधिरेण लिप्तयोः विष्णोरुर्वोः उल्लेखः अप्यस्ति। विष्णोः प्रतिमाः मया मथुरासंग्रहालये श्रीनगरसंग्रहालये च विलोकिताः[15]।

**6. कृष्णः**—भगवान् कृष्णः भगवतः अवताररूपः स्मर्यते। वासुदेव-केशव-कृष्ण कंसारि-यादव-मधुसूदनप्रभृतीनि तदभिधानानि राजतरङ्गिण्यां प्राप्यन्ते,

---

+ श्रीनगरसंग्रहालये विजयेश्वरादानीतमेकमतिपुरातनं शिवलिङ्गमद्यापि सुरक्षितं तिष्ठति। विलोक्यतां चित्रम्।

(12) 183, 186, 28, 29, 30।

(13) 1–309, 8–1, 4–1।

(14) 1–26, 27, 92, 99, 174।

(15) 1–26, 38, 261, 262, 270।

*विलोक्यतां चित्रम्।

तच्चक्रस्यौल्लेखोऽपि विद्यते, मथुरायां तद्राज्यमभूत् । जरासन्धेन समं तस्य युद्धवर्णन मपि कृतं कविना । यत्रासौ विजयं प्राप ।[16]

**यमः**—भारतस्य पूज्यदेवतासु यमः अपि आसीदस्ति च । मृत्युदेवः सः अभिहितः शास्त्रेषु । यमयति नियमयति जीवानां फलाफलमिति व्युत्पत्या तत्कार्य संकेतितं कोषकारैः । दक्षिणदिक्पाल-यमुनाभ्राता-धर्मराज-पितृपति-परेतपति-कृतान्त-शमन-यमराट्-काल-दंडधर-श्राद्धदेव-वैवस्वत-अन्तकेत्यादिनामभिः सः कोषैः वर्णितः । बहूनामेतेषामुल्लेखः कल्हणेन कृतः । तस्य दक्षिणदिशाया अपि संकेतो वर्वति (दक्षिणां सान्तकामाशां), स भीषणस्वभावः चण्डचेष्टितश्च निगदितः । तत्पालिता आशापि भीषणा दृश्यते, बालेषु दयां स्त्रीषु घृणां, वृद्धेषु च गौरवं नासौ धत्ते । समये समागते सर्वानिव स्वपाशेन निबध्नाति । मिहिरकुलस्य तुलना एतादृश्येन यमेन सहैव कृता कविना ।[17] यमप्रतिमा अपि मथुरासंग्रहालये मया दृष्टा ।

**प्रजापत्तिः**—भारतीयदेवेषु प्रजापतिः महत्त्वपूर्ण-स्थानं धत्ते अस्माकं शास्त्रेषु । प्रजासृट्-विधि-विरञ्चि–वेधा–विधाता-सुरगुरु-स्थाणु-मनु–दक्ष-त्वष्टा–प्रभृतिभिरनेकैः नामभिः देवैः स अगीयत गीयते च । प्रायेण सर्वाण्येतानि अभिधानानि राजतरङ्गिण्यां समागतानि । प्रजापतिरेव प्रजाः सृजति पालयति च । ब्रह्माण्डं स एव निर्ममे । रम्यनिर्माणशाली स निगद्यते (1–4) ।**प्रजापतीन्, वेधसः** इति बहुवचनैः प्रजापतीनामनेकत्वं सकेतितं कविना । महाभारते मोक्षधर्मे एकविंशति-प्रजापतयो निगदिताः ।[13]

**कुबेरः**—धनस्येशः कुबेर-नाम्ना भारतीयैः पूज्यते । कल्हणः वैश्रवण-कुबेर-धनद-धनपति-प्रभृतीनि तदभिधानान्यददात् । गुह्यकाः खलु तस्य सेवका अभिहिताः, उत्तरदिशा तन्निवासस्थलं चोक्ता । धनपतेः हरित् त्रिभुवने सर्वोत्कृष्टा अमन्यत । "**त्रिलोक्यां रत्नभूः श्लाघ्या तस्यां धनपतेर्हरित्**" ।।1–43।। कुबेरनगरं शंखपद्मैः रत्नमणिभिश्च भासितं वर्णितम् । तस्य निधीनां रक्षका नागा अभूवन्[9] । कुबेरस्य प्रतिमाः श्रीनगरसंग्रहालये, मथुरासंग्रहालये च वर्तन्ते यासु तस्य जठरं स्थूलं, हस्तौ च धनपेटिकान्वितौ प्रदर्शितौ ।

(10) **सूर्यः** सूर्योपासना भारते पुराकालादद्यावधि प्रवर्तते । प्रातरुत्थाय जना जलदानपुरस्सरं तमुपासन्ते । स भगवान् तिग्मांशु-मार्तण्डनाम्ना च राजतरङ्गिण्यां स्मृतः, मार्तण्डमंदिरे स वन्द्यते स्म । अनन्तनागसमीपे मटन इति स्थाने तत्मन्दिर-स्यावशेषाः मया कश्मीरयात्रायां दृष्टाः ।०

---

(16) 1–69, 63, 71, 59 ।

(17) श०क०द्रु० भाग 4 पृ० 18, 1–290, 289, 193 ।

(18) 1–4, 45, श०कु०द्रु० भाग 3 पृ० 249 ।

(19) 1–155, 156, 30, 43 । ० विलोक्यतां **चित्रम्** ।

(11) **अग्निः**—अग्निदेवः ऋग्वेदस्य सर्वाधिकं महत्त्वपूर्णः स्तुत्यो देवः अस्ति। पुराणेषु तन्महत्त्वं न्यूनतां ययौ। तथापि तत्पूजा भारते प्रावर्तत एव अद्यापि च प्रवर्तते। स हि आहुतं घृतादिपदार्थं भुनक्तीति हुतभुक् निगद्यते। यज्ञेनासौ प्रसन्नो भवति-[0]।

(12) **नागदेवः, नीलः**—भारतवर्षे नागपूजापि प्रसिद्धाभूत्। अद्यापि च नागाः पूज्यन्ते। नागपूजा विशेषरूपेण तु नागजातौ प्रचलितासीत्। नागजातेः सुश्रवसप्रभृतीनां केषाञ्चिन्नागविशेषाणामपि उल्लेखो विद्यते। नागानां प्रधानदेवः तक्षकोऽभिहितः। तस्य पूजायै यज्ञाः तीर्थयात्राश्चाप्यभूवन्। बौद्धप्रभावात् क्षीणायाः नागपूजायाः प्रसाराय गोनन्दतृतीयः प्रायतत **"यात्रायागादि नागानां प्रावर्तयत् पूर्ववत्"** ।।1–185।।

तक्षकनागस्य पूजायै प्रतिवर्षमुत्सवा अभवन्, ज्यष्ठमासे कृष्णद्वादश्यां तस्य यात्राभूत्। यात्रामहोत्सवे च नटचारणाः जनसंदोहाश्च समाययुः, सोत्साहं तत्पर्व समपाद्यत। **"क्रमात् प्रववृते सोऽथ नटचारणसंकुलः प्रेक्षिलोकसमाकीर्णस्तत्र यात्रा महोत्सवः"**। नागानामधीशः नीलः अकथ्यत। यः खलु कश्मीरमंडलस्य संरक्षको निगदितः **"यत्सर्वनागाधीशेन नीलेन परिपाल्यते।"** स एव नीलः अहोश्वरः निगदितः यो हि तपस्यतः चन्द्रदेवस्य प्रत्यक्षतां गतः, तुहिनविप्लवविनाशाय यः पुराणविधिं ददौ[21]।

**पूजास्थानं वस्तूनि च**—पूजास्थानानि प्राधान्येन मंदिराण्यभूवन्। पूज्यानां सर्वेषामपि देवानां कृते पृथक् 2 मन्दिरं वर्णितं राजतरंगिण्याम्, विहाराः, चैत्याः, मठाः: यज्ञशालाश्चापि पूजास्थान्यासन्। चन्दन-कुंकुम-कुसुम-धूप-घृतान्नादीनि वस्तूनि पूजायै प्रायुज्यन्त। धनाढ्याः राजानश्च रत्नैः मणिभिर्वा पूजां चक्रुः। शतशः मूर्तीनां मन्दिराणां च वर्णनं मूर्तिपूजां प्रतिपादयति। पूजासमये नृत्यगीतादिकमपि, वाद्यञ्चापि प्रायुज्यत। यज्ञशालायां तु काष्ठ-धृतान्न-धान्यादिभिः हविर्भिः यज्ञाः समपाद्यन्त। कदाचित् पशुहिंसापि व्यधायि। अग्निस्तु तत् सर्वमभक्षयत् स्वज्वालामुखैः[22]।

**व्रतानि**—विविधव्रतान्यपि धर्मसाधनान्यभूवन्। जनाः प्रतिवर्षं विविधव्रतैः स्वात्मनः शुद्धिं सुकृतसंचयञ्च चक्रुः व्रतपालकः पुरुषः व्रती नैष्ठिको वा अभाष्यत। कदाचिदसौ मुंडितमुंडः चूडालंकृतश्चाभूत्। व्रतस्य मुख्यमङ्गमुपवास अभूत्। उपवास-समये विशेषपूजादिकमक्रियत। स्वल्पाहारपारणया व्रतभङ्गो व्यधायि। प्रतिज्ञापूर्तौ यद्वा धार्मिकपर्वसु आसीत् व्रतानां प्रथा। प्रायोपवेश-शब्दः बाहुल्येन

---

(20) 1–34।

(21) 1–203, 185, 220, 27, 28, 182, 183, 1–222।

(22) 1–37, 344, 34, 151।

कविना प्रयुक्तः, तत् वै मरणव्रतमासीत् । यच्च प्रायेण ब्राह्मणैः पुरोहितैर्वा स्वमनोरथसिद्ध्यै व्यधीयत । सत्यादिगुणपालनमपि व्रतममन्यत । जलौक एतादृश एव व्रती आसीत् । "**बोधिसत्वोऽसि भूपाल कोऽपि सत्वोर्जितव्रतः**"[23] ।

**धार्मिक-सम्प्रदायाः**—साम्प्रतमिव पुरापि भारतवर्षे अनेक धर्माः-सम्प्रदायाश्च प्रचलिता आसन् । वैदिकधर्मः, बौद्धधर्मः, जैनधर्मः, शैवधर्मः, वैष्णवधर्मः इति प्रसिद्धा आसन् ।

**वैदिक-धर्मः**—अस्योल्लेखः वेदादिग्रन्थानां, वैदिकयज्ञानां, सामगायनस्य, सृष्टि-सम्बद्धविषयाणां वैदिकदेवतानाञ्च वर्णनेन कविना कृतः, किन्तु राजतरङ्गिण्याः संस्कृतेः समये, वैदिकधर्मस्य सर्वातिशायी प्रभावो नासीत् ।

**बौद्ध-धर्मः**—बौद्धधर्म-प्रवर्तकः भगवान् बुद्धः अस्ति । तस्य च लोकनाथ-महाशाक्य-शाक्यसिंह इति नामानि राजतरंगिण्यां प्राप्यन्ते । बुद्धनिर्वाणस्यापि स्पष्टं संकेतो विद्यते । "**तदा भगवतः शाक्यसिंहस्य परनिवृतेः**" ।।1–172।।, बौद्धः सन्यासी श्रमणः, भिक्षुः वा न्यगद्यत । श्रमणा भिक्षवो वा योगमायया कदाचित् नार्याः अपहरणमपि चक्रुः ।

**तस्य योगबलात् कोऽपि श्रमणोऽपाहरत् प्रियाम्**[24] ।।1–199।।

लब्धनिर्वाणाः बोधिसत्वा भवन्तीति बौद्धागमेषु प्रतिपादितम् । भगवान् सुगतश्च तेष्वाद्यः अभूत् । बोधिसत्वानां स्वरूपं राजतरंगिण्याः श्लोकद्वये वरीवर्ति ।

लोके भगवतो लोकनाथादारभ्य केचन
ये जन्तवो गतक्लेशा बोधिसत्वानवेहि तान् ।।1–138।।
सागसेऽपि न कुप्यन्ति क्षमया चोपकुर्वते ।
बोधिं स्वस्यैव नेष्यन्ति ते विश्वधरणोद्यताः ।।1–139।।

इदमेव बोधिसत्वरूपं बौद्धग्रन्थेषु विलोक्यते । कृत्तिकास्तेषां शरणे निवसन्ति ।

जलौक-नागार्जुन-प्रभृतीनां बोधिसत्व-नृपाणामपि उल्लेखो विद्यते । बौद्धानां तद्धर्मस्य च प्रभावं बहुशः कविः उल्लिलेख ।

प्राज्ये राज्यक्षणे तेषां प्रायः कश्मीरमंडलम् ।
भोज्यमास्ते स्म बौद्धानां प्रवज्योर्जिततेजसाम् ।।
तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः ।।

इति पद्येन तत्प्रभावः संलक्ष्यते । ते हि वादेन विदुषः पराजित्य वेदविधिमनाशयन् । अनेकेषां बौद्धराज्ञामपि नाम तत्रोल्लिखितम् । हुष्कजुष्कनिष्कास्तत्र प्रमुखा विद्यन्ते ।

---

(23) 1–233, 236, 134 ।

(24) 1–138, 141, 172, 199 ।

तैः खलु पुरत्रयेण सह विहारचैत्यमठाश्चापि निर्मिताः[25]। जलौक-नागार्जुन-अशोकाद्यास्तु आसन्नेव। बौद्धानां सर्वप्रधानं सिद्धान्तः अहिंसा वर्तते। तस्य च बहुश उल्लेखः कविना कृतः। बौद्धग्रन्थेषु अविद्यास्मितारागद्वेषाभिनिवेशाः पंचक्लेशाः वर्णिताः खलु। **"ये जन्तवो गतक्लेशाः"** इति पद्यार्धे कविस्तेषां संकेतमकार्षीत्[26]। अपि च बौद्धानां शतशः विहाराणां, मठानां, चैत्यानाञ्चापि वर्णनं राजतरङ्गिण्यां प्राप्यते। तदुल्लेखश्च स्थापत्यकला-प्रसंगे द्रष्टव्यः। इत्थञ्च बौद्धधर्मस्य महान् प्रचार आसीत् राजतरंगिण्याः भारते।

**जैन-धर्मः**—बौद्धधर्मेण सह जैनधर्मस्यापि प्रचारः आसीत्। प्रथमतरङ्गे राजः अशोकस्य विषये एकं पद्यं कविना प्रदत्तम्। "यः शान्तवृजिनो राजा प्रपन्नो जिनशासनम्॥

अत्र जिनशासनं पदेन भगवतो महावीरस्य उपदेशः स्वीकृतः कोविदैः। कोषेषु च जैनानामुपास्यो देवः जिनः अभिहितः। जैनदर्शनस्य विद्वान् जिनदत्तसूरिः जैनं मतं वर्णयन् बल-भोग-रति-राग-द्वेष-हिंसा-प्रभृतीन् अष्टादश दोषानजीगणत्। तत्रैव स आह "**जिनो देवो गुरुः सम्यक् तत्वज्ञानोपदेशकृत्**" अनेनापि जिनशासनपदेन उक्तार्थ एव स्वीकार्यः। वर्णितानां रागद्वेषादीनामुल्लेखः कल्हणकृतावपि वर्तते। "**अहिंसा परमो धर्मः**" इति जैनानां राद्धान्तः स चापि बहुश उल्लिखितः। अपि च जैनागमेषु बहुश्रुतानि जीवाजीव-पाप-पुण्य-मुक्ति-बन्धप्रभृतीनि तत्वानि राजतरंगिण्यामपि वर्णितानि। जैनानां, प्रायोपवेशस्यापि बहुश उल्लेखो वर्तते इति पूर्वमेव प्रतिपादितम्। तस्मात् भारते जैनधर्मप्रचारस्य सूचना प्राप्यते।[27]

**शैवधर्मः**—तस्मिन् समये शैवधर्मः सर्वातिशायी बभूव। शैवधर्मे शिव एव उपास्यदेवो भवति तस्य च पूजाविषये बहूल्लिखितं मया। कविरपि स्वयं शैव आसीदिति तज्जीवने मया प्रदर्शितम्। उपास्यदेवस्य शिवस्य विस्तृतं स्वरूपं प्राप्यते। तच्चापि लिखितमेव। शिवस्य, तृतीयनेत्र-जटा-गजचर्म-धनुष-सर्प-जिह्वा-वाहन-चन्द्र-गणाः प्रभृतयः स्थाने 2 वर्णिताः सन्ति[28]। स हि कल्पतरुरुक्तः योगिनस्तस्य ध्याने मग्नाश्च वर्णिताः। एतादृशस्य शिवस्य उपासकः शैवः उच्यते। स एव माहेश्वरः अभिधीयते। अन्यच्च कविना शैवशास्त्रनिर्मातुः भट्टकल्लटस्य नाम ससम्मानं प्रदत्तं येन प्रतीयते यत् शैवधर्मे कवेः महत्ती रुचिरासीत्। तस्य सिद्धान्ताश्च नाविदिता अभूवन्। राजा जलौकः अपि शैव आसीत्। शिवपूजायै तस्य प्रतिज्ञाभूत्।

---

(25) 1–137, 134, 177, 171, 178, 168, 169।

(26) 1–108, 177, 133, 138।

(27) 1–102, श०क०द्रु० भाग 3 पृ० 546, 1–32, 33।

(28) 1–1, 4–1, 1–2, 3, 1, 41, 54, 6, 2–1।

शिव-प्रसादाय तपश्चापि स चकार । क्रूरः नृपतिः । मिहिरकुलः अपि अन्तिमे भागे शैवत्वं स्वीचकार । पुण्याचारं च प्रावर्तयत् ।[29] कोषे अपि शिवोपासकः शैवः निगदितः ।

अष्टांगयोगसंयुक्तो यजेद्देवीं विधानतः ।
यावद् ध्यानं समाधिश्च तावत् शैवः प्रचक्षते ।।

अष्ट विधाश्च शैवा कथिताः । त एव शैवा माहेश्वर इत्यपि उच्यन्ते स्म । जलौक-दामोदर-रणेश्वर-इत्यादयः माहेश्वरा निगदिताः **'बौद्धभाषासजानानो माहेश्वरतया नृपः** ।[30] अतः स्पष्टं यत् शैवधर्मस्यापि देशे अतीव प्रचारः अभूत् ।

**पाशुपत-सम्प्रदायः**—शैवधर्मस्यैवाङ्गभूतस्य पाशुपतसम्प्रदायस्य उल्लेखोऽपि करणीय एव । अस्य किल महत्त्वं खीष्टाब्दस्य प्रारम्भिकशताब्दिषु आसीत् । अस्मिन् पशुपतिः पूज्यो देवो भवति । पशूनां स्थावरजंगमानां पतिः एव पशुपतिः इत्युक्तः चिन्तामणि-धृतवचने इत्थञ्च तस्य व्युत्पत्तिः कृता—

ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः
तेषां पतिर्महादेवः स्मृतः पशुपतिः स्मृतौ ।।

कल्हणः अस्य सम्प्रदायस्य प्रचारस्य संकेतं ददाति । **भूतेश-भूतेश्वर-भूतनाथ-महाव्रतिना पाशुपतव्रतिवेष-पाशुपताश्रयम्**—इति पदानि तस्यैव संकेतकानि । पशुपतिभक्तः महाव्रती निगद्यते हेलराजः महाव्रती निगदितः । **प्राङ् महाव्रतिना येन हेलराजद्विजन्मना**[31] पशुपत्युपासकः पाशुपतः अपि न्यगद्यत, अस्य शब्दस्य व्युत्पत्तौ कोषकारःलिखति—"**पशुपतिदेवतास्येति । सास्यदेवता –इति अण् पशुपत्यधिदैवतः तद्भक्तः पाशुपतः** ।[32] राजतरंगिण्याः स्थानद्वये पशुपत-शब्दप्रयोगः तत्सम्प्रदायस्य प्रचारसूचको ननु । पाशुपत-सम्प्रदाये खलु 'पतिः', 'पशुः', 'पाशत्रश्च' प्रमुखसिद्धान्तत्वेन सन्ति, पशुपति-पद्धत्याः अस्याः चत्वारः पादाः सन्ति विद्या-क्रिया-योग-कार्याणि चेति । पशुपतेः शासने पञ्चविधाः जीवा निवसन्ति । गौः, अश्वः, नरः, अजः, शेषश्चेति । एतेषाञ्च संकेतः राजतरंगिण्यामपि प्राप्यते । पशुपतिः दृढ़भक्त्या ध्यानेन च सुलभः कथितः । **'दृढ़भक्तियोगसुलभः'** इति कालिदासः अपि भणति । तपसा संतोषितः भूतेशापरनामासौ पशुपतिः अभीष्टं ददाति । अशोकः तपसैव ततः तनयं प्राप । तं प्रसाद्यैव च जलौकः तल्लोकं जगाम ।[33]

---

(29) 5–66, 1–113, 123, 149, 289, टि०, 312, 313, 314, 306 ।
(30) 1–135, 3–439, 453, 154 ।
(31) 1–148, 347, 17 टि०, 3–267, 5–404 ।
(32) श०क०द्रु० भाग 3 पृ० 133 ।
(33) 5–404, महाभारत शान्तिपर्व—अध्याय 349 से 64, 38–40. विक्रमोर्वशीयं

**वैष्णव-सम्प्रदायः** —"विष्णुर्देवता अस्य" इति व्युत्पत्या वैष्णव-शब्दः निष्पन्नः विष्णुमंत्रोपासकः, विष्णुभक्तः, वा तत्तात्पर्यं खलु। विष्णु-पूजा भारते बाहुल्येन प्रचलिताभूत्। अत एव वैष्णवसम्प्रदाय-प्रचारस्य सत्ता निश्चीयते। विष्णुमूर्तीनां तत्पूजायाश्च स्पष्टमेव संकेतः कविना प्रदत्तः। **तां विष्णोः प्रतिमां वीक्ष्य पूजितां तेन धूर्जटिः ॥ 3–444 ॥** सा च विष्णुप्रतिमा शिवशक्तिरूपा निगदिता। **'शून्यामिव तदा मेने शक्तिरूपां विना शिवम् ॥** 3–444 ॥ विष्णुरसौ मधुसूदनप्रभृतिभिरनेक-नामभिः स्मृतः अस्ति। अनेक-स्थलेषु स्वामिपदं अन्येन पदेन संयोज्यापि विष्णुदेवः सूचितः। विष्णोः मन्दिराणि तन्निर्मातुः नाम्ना सह प्रयुज्य तन्नाम्नैव प्रसिद्धान्यभूवन्। जयस्वामी-मातृगुप्तस्वामी-मम्मस्वामी-रणस्वामी-इत्यादि पदानि विष्णोः प्रति-पादकानि विद्यन्ते। इत्थञ्च भारते वैष्णव-सम्प्रदायस्य महान् प्रचारः अनुमीयते।[34]

## देव्यः

**1. दुर्गा** – देवीषु दुर्गा-देवी अत्यन्तं प्रसिद्धाभून्। चामुंडा* चंडिका-दुर्गा-सुरेश्वरी-विन्ध्यवासिनी-भीमा-भ्रमरवासिनी-श्यामा-कान्ता-देवी-हेमवती-प्रभृतिषु तस्या नामसु अनेकानि राजतरङ्गिण्यां वर्तन्ते। दुर्गा दंडं करे दधाति, दानवान् च निहन्ति, रुरुदानव-हत्याया उल्लेखः कविनापि कृतः। तत्पूजायां-नरबलिः अदीयत। कदाचित् अर्घ्य-दानमप्यक्रियत। भीमानाम्नाख्याता सा मार्तण्डसमीपे अपूज्यत। विन्ध्ये निवासतया सा विन्ध्यवासिनी भ्रमणतया च भ्रमरवासिनी निगद्यते। घोराकृतिस्तस्या वर्णिता, सिंहस्तस्या वाहनमभिहितं, दुर्गायाः मन्दिराणामप्युल्लेखः अस्ति।[35]

**2. पार्वती** –पर्वते गृहीतजन्मतया 'पार्वतीति' प्रसिद्धा देवी अद्यापि भारतदेशे पूज्यते। अपर्णा अम्बिका-गौरी-गिरिजा-हिमजा-भवानी-रुद्राणी-शर्वाणीप्रभृतिभिः नामभिः सा राजतरङ्गिण्या भारते अवन्द्यत। गणेशकार्तिकेयौ तत्पुत्रौ निगदितौ। सा हि शिवस्य अर्धाङ्गे तिष्ठतीति कृत्वा शिवः अर्धनारीश्वरः निगद्यते।[36]

**3. शची**—इन्द्रपत्नी शची अपि, कविना उल्लिखिता, तस्याः मूर्तिः श्रीनगर-संग्रहालये मया दृष्टा।

**4. सरस्वती** —क्वचित् ब्रह्मणः कन्या क्वचित् च तत्पत्नी निगदिता सरस्वती. शारदा-भारती-वाग्देवी-भेडा-विद्यादेवी-प्रभृतिनामभिः भारते पूज्यते स्म। अद्यापि च पूज्यते। सा हि कलायाः विज्ञानस्य संरक्षिका कथिता। तस्या हस्ते वीणा भवति अत

---

1–1, राज० 1–107, 149, 152।

(34) श०क०द्रु० भाग 4 पृ० 524, 3–344, 446, 263 टि०, 4–698, 254।

(35) 3–46, 52, 83, 394, 424, 427, 413, 418, 412 से 424, 407, 408, 5–37, 6–177, 178 टि०, 7–1707।

(36) 1–72, 8–1, 1–32, 6–1, 1–1, 2–1, 3–1, 4–1, 5–1, 7–1, 1–29, 2–1। *विलोक्यतां चित्रम्।

एव वीणावादिनी सा निगद्यते । अस्याः तीर्थस्य मंदिरस्य चापि कविः संकेतमकार्षीत् । सा भेडगिरेः शृङ्गे हंसरूपं, आकलय्य सरसः अन्तः उवास । तां संपूज्य विदुषां वाणी मधुमती प्रवाहयुक्ता च जायते स्म ।[37] "**तरंगिणी मधुमती वाणी च कविसेविता ।**" । 1–37 ।

**5. सन्ध्याः** —सायन्तनसमये उपास्या देवी सन्ध्या न्यगद्यत । इयं देवी निर्जले पर्वते निवसन्ती जनानां पुण्यपापनिर्णयं कुर्वन्ती निगदिता । "**सन्ध्यादेवी जलं यस्मिन् धत्ते निःसलिले गिरौ**" । 1–33 । त्रिसन्ध्यातीर्थे सा अपूज्यत । सा हि पितृणां माता कथिता । भारतीयशास्त्रेषु सन्ध्यादेवी एव गायत्रीति स्तुता । तस्या उपासनायाश्च सर्वातिशायि महत्त्वमद्यापि स्वीक्रियते । याज्ञवल्क्यो निगदति—

या सन्ध्या सा तु गायत्री द्विधा भूत्वा प्रतिष्ठिता
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः ।।

भगवान शिवस्तां स्तुवन् वर्णितः कविना ।[38]

**6. लक्ष्मीः** –"लक्षयति पश्यति उद्योगिनमिति व्युत्पत्या लक्षि-लक्षेर्मुट् च उणादिः 3–16 इत्यनेन ईप्रत्यये मुडागमे च" कृते लक्ष्मी-शब्दो निष्पद्यते । लोके लक्ष्मीः विष्णुपत्नीति प्रसिद्धा, सर्वदा च शेषशायिभगवतः चरणसेवातत्परा सा दृश्यते प्रतिमासु । जनैः वा पद्मालया, पद्मा, कमला श्रीः इत्यादिनामभिः स्तूयते स्म पुराकाले साम्प्रतञ्चापि । समराङ्गणे विजयिनं समालिंगति, अत एव जयश्रीः अपि सा निगद्यते । विजेतारं मालयालंकर्तुम् जयस्रजं हस्ते धत्ते । यश एव तस्या दुकूलं यशस्विनश्च तत्प्रीतिपात्राणि निगदितानि । "**बेल्लद्यशो दुकूलायाः प्रीतिपात्रं जयश्रियः**" ।[39]

**7. अप्सरसः** – देवपुरन्ध्र्यो वापि तदा पूज्या अभूवन् । युद्ध-समये क्षत्रियाणां वीराणां विजयिनां च ता वरणं चक्रुः । अष्टदेव-योनिषु अप्सरसां गणना क्रियते शास्त्रैः । स्वर्गे तासां निवासः अभिहितो ननु ।[40]

**8. कृत्तिका**:—कोषेषु डाकिनी इति भाषायां प्रसिद्धा, अभिचारिणी, मायाविनी, योगिनी वा कुरूपा नारी कृत्तिका अभिधीयते । कृन्तति उग्रत्वात् । कृत कृनिमिदिलतिभ्यः कित् । उणां 3–147 इति तिकन् किच्च । अग्निदेव इति हेमचन्द्रः । इति कृत्तिकाव्युत्पत्तिर्विद्यते । कल्हणः अपि कृतिकायाः तादृशमेव रूपं प्रस्तौति । प्रथमतरंगे स एकां कथां ददाति यत् कदाचित् राजा जलौकः विजयेश्वरं गच्छन्

(37) 1–6, 35, 8–2556, 2706 ।
(38) 7–1, 1–33, श. क. द्रु. भा. 5 पृ. 242 ।
(39) श०क०द्रु० भा० 4 पृ० 196, 1–63, 64, 62, 84 ।
(40) 1–68 ।

मार्गमध्यगां कृत्तिकां प्राप सा हि विकृता भूत्वा नृमांसं तमयाचत, **'व्यवृणोद्विकृता भूत्वा सा नृमांसाश्रयां स्पृहाम्'** 1–132 अनया पंक्त्या काचित् उग्रा-कुरूपा च नारी कल्प्यते। **"अथाहमुत्थापिता बौद्धैः क्रोधाद्विप्रकृतैस्त्वया** 11-36। **क्रुद्धैः बौद्धैरनुध्याता त्वद्वधाय प्रधाविता** 1–144 आभ्यां पद्यार्धाभ्यां कृत्तिकायाः डाकिनीरूपं योगिनीरूपं वा तस्याः स्पष्टं जायते, यत्कार्यम् चान्येषां परितापः वधश्चास्ति। कृत्तिका एव कल्हणेन कृत्यापि कथिता सा च उपद्रवनाशाय, कस्यचित् वधाय वा जायते, अपवित्राणां दुष्टानां ब्राह्मणादीनां गृहे कलहरूपमाधाय तन्नाशे सा सन्नद्धा जायते। गृहाणि च अग्निसात् करोति। परेभ्यः पीड़ाप्रदानं खलु तासां कार्यममिहितं, किन्तु महाशाक्यान् नासौ बाधितुं क्षमा।

लोकालोकाद्रौ कथितस्तासां निवासः। बोधिसत्वैकशरणाः तामस्यस्ताः स्वतमसः क्षयं कर्तुं भ्रमन्ति। महाशाक्यं वीक्ष्य च भवति तासां तमसः क्षयः। एतद्रूपा एका कृतिका महाशाक्यं नृपतिं जलौकं वीक्ष्य क्षीणपापा संवृत्ता, देवीपदं च प्राप। कृत्याश्रमे तस्या देव्याः प्रतिष्ठायै एकं विहारं निर्माय नृपः कृत्यादेवीमसंधयत्।[41]

**9. सप्त-अम्बाः**—राजतरङ्गिण्यां मातृचक्रं च पौनः पुन्येनोल्लिखितं तत् मन्दिरेष्वशोभत। **"समातृचक्रं निर्माय यः पूर्व-प्रवरेश्वरम्' क्रुद्धः समातृचक्रस्य भैरवस्याविशद्गृहम्"** इत्यादि-पद्यानि तत्सकेतं कुर्वन्ति। मातृचक्रस्यार्थ एव देवीचक्रमस्ति। उभयमपि सम्प्रत्यपि कश्मीरेषु पूज्यमानं श्रीचक्रं रजनिचक्रमिव वा वर्तते। एताभिः पंक्तिभिः मातृचक्ररूपे शक्तिपूजायाः स्पष्टं संकेतो वरीवर्ति। अमरकोषे सप्तमातृणामुल्लेखो वर्तते।

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा
वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः॥

एतन्नामसु माहेश्वरी, इन्द्राणी (शची) चामुंडा इति नामानि तु स्पष्टमुल्लिखितानि, अन्यासां मातृणां संकेतः अप्रत्यक्षरूपेण मातृचक्र-देवीचक्र-पदाभ्यां कविना कृतः। दुर्गाया एव अपरं नाम वैष्णवी महेश्वरी मातृका चाप्यस्ति।

मातृचक्रेण कस्मिंश्चित् प्रस्तरे खनित्वा निर्मिता काचन दैवी-मूर्तिः कल्प्यते। मातृचक्रं स्थाने-स्थाने पूज्यते स्म, कश्मीरेषु अन्येषु केषुचित् स्थलेषु चेदं सम्प्रत्यपि पूज्यते। तन्त्रशास्त्रप्रतिपादित-विध्यनुसारं, मन्दिरे कस्मिंश्चित् गुप्तगृहे वा मातृचक्राणि निर्मीयन्ते स्म। **"देवः शतकपालेशः मातृचक्रं शिला च सा 1–335।"**

मातृचक्राणां पूजया शक्तिपूजा, सप्ताम्बानां वा पूजा स्वीक्रियते। राजतरङ्गिण्यामुल्लिखितैः नैकनृपैः तत्पूजायै मातृचक्राणि कृतानि। जलौकस्य पत्नी ईशानदेवी अनेकानि मातृचक्राणि चकार। नरेन्द्रादित्यस्य गुरुः उग्रेशः अपि मातृचक्रं निर्ममे।

(41) आ०हि०स० कोष पृ० 240 श०क०द्रु० भा० 2 पृ० 176, 1–131, 137, 147, 7–17 से 19, 1–14, 137, 145 से 147।

देवीचक्रस्य मातृचक्रस्य वा पूजायां नरबलिरपि दीयते स्म । पूर्वन्तावत् तस्य पुरतः यागोत्सवः समजनि । ततश्च नरबलिरभूत् । बलिदान-कार्यं भक्ताभिः योगेश्वरीभिः व्यधायि । राज्ञो बकस्य तस्य शततनयानां च बलिः एकया कान्तारूपधारिण्या योगेश्वर्या कृता खलु ।

प्रायेण मातृचक्रनिर्माणं शिवमन्दिरे अक्रियत । प्रवरसेनः समातृचक्रं प्रवरेश-मन्दिरं व्यदधात् । शिवस्तु भैरवः अपि निगद्यते, अत एव भैरवमन्दिरे अपि मातृचक्रं स्थाप्यते स्म । मातृचक्रपूजका न केवलं साधारणजना एवासन् अपितु शैवा अपि विशेषेण तदुपासका अभवन् । शिवभक्ताः खलु भैरवा अपि निगद्यन्ते, ते अपि मातृ-चक्रमपूजयन् ।[42]

**10. गंगा-यमुना च*** — गंगायमुनयोर्नद्योरपि देवीरूपे भारतीयैः कल्पना अक्रियत । अद्यापि च क्रियते । देशस्य पवित्रतमे नद्यौ इमे मन्येते । उभयोरपि स्नानं पुण्यकरम-मन्यन्त जनाः । अनयोरपि गंगाया महिमा नैकशास्त्रेषु वर्णितो वर्तते । "**गंगा गंगेति यो ब्रूयात् योजनानां शतैरपि मुच्यते-सर्वपापेभ्यः विष्णुलोकं स गच्छति ।**" इति विचाराः पुराणेषु विद्यन्ते । तत्र स्नानं विधाय पुरुषा आत्मनः पुण्यभागिनः अपश्यन् । "**धन्याग्रजःपूतमुर्तिर्जाह्नवीजलमज्जनात्**" । मृतस्यास्थीनां प्रवाहः अपि प्रायेण गंगाया व्यधायि, अद्यापि च विधीयते । गंगायात्रा बहुश उल्लिखिता वर्तते । प्राप्त-वैराग्या अपि पुरुषा आत्मनः शान्त्यै गंगातटं प्रययुः । गंगाया जलतरंगाः कविना शुक्ला वर्णिताः, तस्याः पवित्रं जलं कुम्भेषु निधाय बहिः प्रेष्यते स्म । सा वै शंकरस्य जटा-जूटे न्यवसत् इति जनानां विश्वासः अभूत् ।

कालिका यमुना वापि तथैव पवित्रा आसीत् सा एव कालिन्दी अप्यभण्यत । तृतीय-तरंङ्गे तस्या गंगायाश्च संगमस्योल्लेखः कविना कृतः

**तीर्थयात्राः**—धर्मप्रिया भारतीयाः प्राचीन-कालादद्यावधि पुण्यप्राप्त्यै तीर्थानां यात्राः कुर्वन्ति । धर्मकार्येषु तीर्थाटनमपि आवश्यकमङ्गीक्रियते स्म । तीर्थाटनेन पुण्यप्राप्तिर्भवतीति जनानां विश्वासो बभूव राजतरङ्गिण्यामनेक-तीर्थानामुल्लेखो विद्यते यत्र खलु श्रद्धालवो जनाः समये-समये ययुः । कविरस्मान् सूचयति यत् देशस्य तिलांशः अपि तीर्थशून्यो नाभूत् । "**तिलांशोऽपि न यत्रास्ति पृथ्व्यास्तीर्थैर्बहिष्कृतः**" । तेषु तीर्थेषु गत्वा तत्रस्थानां देवानां दर्शनेन स्पर्शेन च मुक्तिभुक्तिफलं जनाः प्रापुः । तीर्थे कृतवासा देवा देव्यो वा पापपुण्य-निर्णयं कृत्वा तदनुसारं फलं ददतीति जना अमन्यन्त । राजतरंगिण्यां वर्णितेषु तीर्थेषु **नीलनागतीर्थं** प्रथमं वर्णितं यद्रक्षकः नागाधीशो नीलः तत्र पूज्यते स्म । "वेरीनाग" नाम्ना सम्प्रति प्रसिद्धमिदं तीर्थम्* मया

(42) 1–122, 335, 348, 3–99 5–55, 1–133, 331 से 333 ।

(43) 8–1600, 1656, 1661, 2214, 7–485, 8–1626, 1655, 7-602, 897, 3–520, 8–1650, 3–365, 4–416, 145, 1–60, 3–327 ।

* विलोक्यतां चित्रम् ।

कश्मीरयात्राप्रसंगे विलोकितम् । **पापसूदन-तीर्थम्-द्वितीयमवर्तत** । यत्र काष्ठरूपधारिण उमापते पूजया दर्शनेन स्पर्शेन च भुक्तेः मुक्तेश्च फलं जनाः प्राप्नुवन् । तत्रैव तीर्थे कपटेश्वरनामधारी शिवः अपि अपूज्यत । सन्ध्यादेवी **त्रिसन्ध्यातीर्थे दर्शनैः** लोकमपावयत् । पापपुण्य-निर्णयं च व्यदधात् । अग्निरूपः स्वयम्भूः भगवान् शिवः **स्वयम्भुतीर्थे** गर्भान्निष्क्रम्य ज्वालामुखैः पूजकैः प्रदत्तं हविः अगृह्णात् । राज्ञा उच्चलेन कृता अस्य तीर्थस्य यात्रा कह्लणेन उल्लिखता । तस्मिन् तीर्थे गत्वा जना श्राद्धकर्म चक्रुः । भेडगिरेः शृंगे भेडादेव्याः **भेडादेवी-तीर्थमासीत्** यत्र स्थिते सरसि सरस्वती (भेडादेवी) हंसरूपमाधाय उवास । **नन्दिक्षेत्र-तीर्थम्**-हरस्यावासो बभूव । भगवान् शिवः नन्दीशः नन्दीश्वर-नन्दिकेश्वर-भूतेशसंज्ञाभिस्तत्र पूज्यते स्म । कलश-चम्पकप्रभृतयः तस्मिनेव तीर्थे जग्मुः शारदाभिधानायाः सरस्वत्याः तीर्थम् **शारदा-तीर्थमभवत्**, यत्र खलु शारदादेवीं विलोक्य कविसेविता वाणी माधुर्यगुणं दधौ । तस्या मन्दिरं किशनगंगा-मधुमत्योः संगमस्थले अवर्तत । प्राचीन-काले अस्य तीर्थस्य यात्रा अपि अतिप्रचलिताभूत् । पुण्यदा चासावागम्यत । **मार्तण्डतीर्थम्*** प्राचीनकालादद्यावधि प्रथितयशो वरीवर्ति । प्राचीन-समये तद्धि कश्मीरेषु प्रसिद्धं पुण्यं दर्शनीयं स्थानमभूत् । सूर्यः मार्तण्डनाम्ना तत्रापूज्यत । मार्तण्डपत्तनस्य तत्र च मार्तण्डमन्दिर-स्थापनायाः कविना स्पष्टमुल्लेखः कृतः **मार्तण्डस्याद्भुतं दाता द्राक्षास्फीतं च पत्तनम् 4–192** । **शुष्कलेत्र-वितस्तात्रौ** जैनानां बौद्धानां च तीर्थस्थाने अभवताम् । अशोकः स्तूपमंडपैः उभे स्थाने आच्छादितवान् । वितस्तात्रपुरे धर्मारण्य-विहारमपि विदधे देग्रामान्तिकं **कपालमोचन** तीर्थमशोभत । तत्र च भगवान् शिवः ब्रह्मणः कपालछेदनात् संसक्तं पापं मुमोचेति प्रसिद्धिरासीत् । अस्य तीर्थस्य माहात्म्ये इदं हि द्विग्राम नाम धत्ते । **वाराहक्षेत्र-तीर्थम्**-आदिवराहरूपे प्राप्तावतारस्य विष्णोस्तीर्थमासीत्, अत्रैवादिवराहः उवासेति माहात्म्येषु प्रतिपादितम् । वाराह-मन्दिरस्यापि कह्लणेनोल्लेखः कृतः । वाराहक्षेत्रे एव कनिष्कपुर हुष्ककपुर-जुष्कपुरप्रभृतीनि क्षेत्राण्यायान्ति स्म ।* **तूलमूल्य-तीर्थ**-स्योल्लेखः चतुर्थतरङ्गे वर्तते । अत्रैव महाराजनी नामधारिणी दुर्गा न्यवसदिति लोकश्रुतिरवर्तत । बाहुल्येन जनास्तत्पूजायै तत्र तीर्थयात्रायै जग्मुः ।* प्राचीनकालस्य तीर्थेषु **चीरमोचनतीर्थम्** अतीवमहत्त्वपूर्णमस्ति । अस्यैव समीपे कनकवाहिनी नाम पुण्या नदी प्रावहत् । नीलमतपुराणे निगदितमस्ति यत् सप्तर्षयः स्वर्गारोहणात् पूर्वम् स्वजीर्णानि चीराणि अत्रामुञ्चन्, अतएव चीरमोचनसंज्ञामिदं तीर्थम् प्राप । नन्दिक्षेत्र-समीपे एव **भूतेश-ज्येष्ठेशरुद्रतीर्थमभवत्** । यत्र खलु भगवान् शिवः भूतेशभूतेश्वर-ज्येष्ठरुद्रनामभिः वन्द्यते स्म । तीर्थ-स्थितमन्दिरेषु भूतेश-प्रतिमा आसन् । भूतेश्वर-मन्दिरे महती धनराशिरासीत् यां हि कोषार्थी राजवदनः अलुण्ठत् । हरमुक्तपर्वते **अमेरश्वर-तीर्थम्** विरेजे तदेव सम्प्रति अमरनाथनाम्ना भारतवर्षे ख्यातमस्ति च प्राचीन-कालवत् तस्य यात्राः श्रद्धालुभिः विधीयन्ते ।* श्रावणमासे-समस्तभारतात् सहस्रशः तीर्थयात्रिणः

---

* विलोक्यतां चित्रम् ।

आययुः । अमरेश्वर-यात्रायाः स्पष्टमुल्लेखः कल्हणेन कृतः **अमरेश्वर-यात्रायां जनैरद्यापि दृश्यते** 1–127,* तत्र खलु शिवस्य हिमलिङ्गं पूज्यते स्म । **सुरेश्वरी-क्षेत्रं**-खलु डलाख्यस्य महाजलाशयस्योत्तरे बभूव । यत्र च सुरेश्वरी (दुर्गा) अपूज्यत । तत्प्रतिमा एकस्यां शिलायामासीत् । तस्या देव्याः सम्मानाय च बहूनि मन्दिराणि निर्मितान्यासन् शूरेण । तत्रैव स अर्धनारीश्वर-शिवस्य प्रसादं भूतेश्वरहरस्य च प्रतिमामपि स्थापितवान् । **ईशेश्वर-तीर्थं**-डलजलाशयस्य पूर्वोत्तरतटे अवर्तत, तत्रैव गुप्तगंगा इत्याभिधानं पुण्यं स्रोतः अपि अभूत् । प्रभूत-संख्यायां यात्रिणः अत्र यात्रायै आययुः । **प्रयागतीर्थमद्यापि** जगत्प्रसिद्धं ननु. जयापीडस्य तत्र गमनं वर्णितं कविना, तस्मात्तीर्थात् गंगाया पुण्यं पयः जयपीडमुद्राङ्कितेषु कलशेषु ययौ तत्रैव जना दान-दक्षिणां चक्रुः । **गयातीर्थमपि** सम्प्रत्यपि विश्व-विश्रुतं ननु । प्राचीन-काले यात्रिणो महत्यां संख्यायां, तीर्थयात्रायै तत्राजग्मुः । तेभ्यश्च शुल्कमपि संगृह्यते स्म । श्राद्धकर्मापि तत्र जनाश्चक्रुस्तत्कृते च शुल्कमपि ददुः । **अविमुक्ततीर्थम्**-वाराणस्यामभवत्, वाराणसी सम्प्रत्यपि पुण्यक्षेत्रेषु मन्यते । प्रायेण जनाः जीवनावसानकाले वाराणस्यां गत्वा प्राणत्यागं शुभममन्यत । दानिनस्तत्र गत्वा सर्वस्वदानमकुर्वन् । मातृगुप्तस्तत्र गत्वा सर्वसन्यासं कर्तुमियेष, ताञ्च नगरीं प्राप्य स यतिरभवत् । काषायवस्त्राणि च दधार । कलशः अपि हर्षाय सर्वम् प्रदाय वाराणसीं गन्तुमैच्छत् । **वाराणस्यां गमिष्यामि नन्दिक्षेत्रेऽथवा पुनः स** 7–646 । कन्दर्पः अपि जीवनास्यान्तिमभागं सुखेन नेतुं वाराणसीं ययौ "स **विमुक्ताधिकारोऽथ मंत्री वाराणसीं ययौ**" 7–1007 गायकः कनकः अपि वाराणसीं गत्वा प्राणान् परितत्याज । अद्यापि **बहवः धर्मप्रिया भारतीया वाराणस्यां** प्राणत्यागं पुण्यं मन्यन्ते । **विजयेश्वर-तीर्थे**-विजयेशस्य पूजा अभवत् । तत्र विशालमेकं मंदिरमप्यभूत्, तदेव सम्प्रति विजविहारा इति ख्यातमस्ति ।* इमान्येव तीर्थानि राजतरंगिण्यामुल्लिखितानि । एतेषु च वाराहक्षेत्र-तूलमूल्य-मार्तण्ड-सुरेश्वरी-गुप्तगंगा-नीलनाग-बिजबिहारा-वाराणसी-प्रयाग-प्रभृतीनि तीर्थानि मया कश्मीर-भ्रमणे उत्तरप्रदेशभ्रमणे च दृष्टानि[44] ।

---

(44) 1–32, 38 33, 27, 28, स्टी. भा–2 पृ० 466, 470, 34 टि० 8–250, 1–35, 36, 2–170, 7–646, 8–2439, 1037 टि० 4–192, 1–102, 103, 7–266 तथा टि० स्टी० भा० 2 पृ० 472, 482, 6–186, 206, 7–1310, 4–638 तथा टि० 1–149, 150, 483 तथा टि० 1–36 107, 113 टि० 5–55, 59 टि० 8–2756 स पूर्वराज-कोषार्थी भूतेश्वरमलुण्ठयत् । 1–267, तथा टि० 5–37, 40, 41, 8–3365 स्टी० रा० भा० 2 पृ० 45, 5–37, 40, 2–134 तथा टि० 4–414, 417, 6–254 8–1008, 8–3349, 3–297 320, 7–646, 7–1007, 10 10, 8–13

* विलोक्यतां चित्रम् ।

**धार्मिक-पर्वाणि**—प्रतिवर्षम् समयविशेषे भारतीयाः धार्मिकोत्सवान् सम्पादयामासुः। यत्र च देवानां पूजा अभूत् विविधप्रमोदत्सवाश्च समभवन्।

**इन्द्रमहः**—तेषु च केषांचित् इन्द्राद्युत्सवानां कल्हणः स्पष्टोल्लेखमकार्षीत्—

मासार्धदिन-माहेन्द्रमहाद्यवसरेषु सः।
निनाय योद्धान् संनद्धानन्योन्यप्रधनैर्धनम्॥

महेन्द्रमहादि-पदेन इन्द्रोत्सवानामुल्लेखो वरीवर्ति। ते उत्सवाः प्रायेण प्रत्येकं मासे अभवन्। पूजाभिः प्रमोदोत्सवैः समं तत्र, कुश्ती-दंगल इति प्रसिद्धं द्वन्द्वयुद्धमपि आयोज्यत। शुल्कं दत्त्वा जनास्तदपश्यन्। अर्जितधनं राजकोषे ययौ।

**इन्द्रद्वादशीः**—इन्द्रद्वादशी-महोत्सवः पुरा अतीव प्रसिद्धः अभवत्। अस्मिन्नुत्सवे जना एकत्रा भूत्वा नैकप्रमोदकार्याणि चक्रुः कदाचित्तु तस्मिन्नवसरे युद्धमप्यभूत्।

**"यस्येन्द्रद्वादशीयुद्धे सान्द्रसैन्योऽपि विद्रुतः।"**

केचित् राजानः इन्द्रद्वादशी-उत्सवे महार्घाणां वस्त्रादीनां दानं चक्रुः। अत एवाधिकां शोभां दधौ स उत्सवः।

तस्येन्द्र-द्वादशी, भूरि पराध्र्यांशुक-दायिनः।
यथा नृपस्य शुशुभे तथा नान्यस्य कस्यचित्[45]॥

**तक्षक-यात्रा-महोत्सवः**—ज्येष्ठमासे कृष्णद्वादश्यां तक्षकनागस्य यात्रा-महोत्सवः प्रावर्तत। उत्सवे दूरस्थानेभ्यः नटचारणगणाः प्रेक्षिलोकाश्चाययुः। विविधाः प्रमोदोत्सवास्तत्राजायन्त।[46]

**यज्ञः**—वैदिकयुगे यज्ञस्य महत्महत्त्वमभूत्। यच्च न दृश्यते कल्हणस्य राजतङ्गिण्याः भारते। तथापि—"**यागोत्सव-माहात्म्यं द्रष्टुं हृष्टो न्यमन्त्रयत**"—इति पद्यार्धेन यज्ञानां महत्त्वं स्वीकृत्व तत्प्रचलनस्य सूचना कविना प्रदत्ता। काव्ये प्रयुक्ता अध्वर-होम-यज्ञ-यागप्रभृतयः शब्दा अपि यज्ञानां प्रवर्तनस्य सूचनां ददति।

**पञ्च-महायज्ञाः**—आर्याणां नित्यकृत्येषु पञ्चमहायज्ञाः प्रधाना आसन् वैदिक-युगे। कल्हणस्य भारते अपि न ते सर्वथा विलुप्ता आसन्। ब्रह्म-देव-पितृ-वलिवैश्व-अतिथियज्ञाः इमे पञ्चमहायज्ञाः प्रसिद्धाः सन्ति। शास्त्रेषु सर्वेषां भिन्नं-भिन्नं प्रयोजनमित्थमुक्तम्—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलि भौंतो नृयज्ञोऽतिथि-पूजनम्॥

राजतरङ्गिण्या भारते सर्वे अपि इमे यज्ञाः समाजे प्रवर्तमाना अभूवन्। गुरु-शिष्याणां संकेतः विद्यालयानाञ्चोल्लेखः अध्ययनाध्यापनरूपस्य ब्रह्मयज्ञस्य प्रचलनं, श्राद्धकर्मणामुल्लेखः पितृयज्ञं (**बलिहोम-विधायिनः**) (**विच्छिन्न-बलिकर्मभिः**) इत्यादि-पदानि बलि-वैश्वयज्ञं संकेतयन्ति। अग्निहोत्ररूपस्य यज्ञस्योल्लेखस्तु नैकवारं कृतः

---

(45) 8–170, 182, 171, 495। (46) 1–120, 222।

कल्हरणेन । **"जुह्वतां प्रतिगृह्णाति ज्वालाभुजवनैर्हविः"** इत्यादिपदैः स अग्निहोत्रस्य स्फुटं वर्णनं व्यदधात् । अतिथिपूजा पुराकालादद्यापि भारतीयसमाजे पुण्यं कर्म मन्यते । राजतरङ्गिण्यामतिथि-सत्कारस्य नैके दृष्टान्ता दृष्टिपथमायान्ति । राजानस्तु दूरादागतानामतिथीनां कृते पृथक् व्यवस्थां, भोजनालयञ्च, चक्रुः, यत्र ते भोजनमकार्षुः । श्रमार्तेषु अभ्यागतेषु समागतेषु मधुर-वचोभिस्तेषां सत्कारो, व्यधायि । इत्थञ्च पञ्च-महायज्ञानां सत्ता प्रमाणिता जायते ।

**महत्त्वपूर्ण-यज्ञाः**—कल्हणः प्रायेण, यज्ञानामुल्लेखं करोति । विजयसाधनरूपः, अश्वमेधयज्ञः राजनीति-संबद्धः अभूत् स एव च सर्वाधिकं प्रचलितो बभूव । अन्ये यज्ञास्तु विभिन्नोत्सवेषु समजायन्त । ऋतुषु विभिन्ना यज्ञोत्सवा अभूवन् । ते च यज्ञा दीर्घाः अल्पकालीना वाभवन् । यस्मिन् यज्ञे पुरोहिताः यज्ञीयसत्रं यावदतिष्ठन् स दीर्घसत्र-संज्ञः अभूत् । भागवत्-पुराणस्य काल्पनिकसिद्धान्तानुसारं सत्रसंपादनाय कालावधिः एक-संवत्सरात् सहस्र-संवत्सर-परिमितः बभूव । विद्वद्भिः हिंसा-विरहितो यज्ञः अध्वर इति निगद्यते । कल्हणस्तु तमर्थं नाङ्गीचकार, यतो यज्ञेषु पशूनां नरबलेर्वा उल्लेखः बाहुल्येन प्राप्यते । कल्हणकाले यज्ञ-समये पशुहिंसा सामान्याभूत् । बलिपशुः यूपाख्येन स्तम्भेन अबध्यत । इयं बन्धनक्रियापि यज्ञस्यैकः संस्कार आसीत् । संस्काराणां समये अपि यज्ञाः अभूवन् । भिन्न-भिन्न-संस्काराय भिन्नो भिन्नो यागः समजनि ।

**एकस्मिन् स्थाने कविना नागयज्ञस्य संकेतः कृतः ।**

यात्रायागादिनागानां प्रावर्तयत् पूर्ववत्[47] ।।

**तपोवन-जीवनम्**—भारतीय-संस्कृतौ तपोवनस्य, तत्पद्धतेः, तपसश्च महत्महत्त्वमस्ति । तपोवनवासिनस्तपस्विनश्च न्यगद्यन्त । तपश्चर्या तीर्थेष्वपि बभूव । कल्हणकृतौ तपस्विनामनेकभेदान् वयं पठामः । **व्रती-नैष्ठिक-जटिल-साधक-दंडी-सिद्ध-यति-योगि-प्रभृतयः** शब्दास्तद्भेदसूचकाः सन्ति । जटाधारिणस्तपस्विनः जटिला अभाष्यन्त । अनुष्ठानकर्तारः, लक्ष्यसाध्यस्य च प्राप्तौ निरताश्च साधका आसन् । यतिपदवाच्यास्ते तपस्विन आसन् मृत्यूपरान्तं येषां दाहो नाभूत् । सर्वाणि वस्तुजातानि परित्यज्य ते काषायवस्त्राणि धारयित्वा यतिव्रतं जगृहुः । नैष्ठिकस्तपस्वी स आसीत् मुंडित-शिरसि च यश्चूडां दधौ । विविधोत्सेषु व्रतकर्ता व्रती अभूत् । तपस्विनां परिधानमपि भिन्न-प्रकारकं बभूव । परिधाने प्रायेण ते वल्कलं मृगचर्म वा दधुः । तपस्विभ्योऽपि तदेव परिधानमभवत् । शिवस्य परिधानं गजचर्म प्रसिद्धमेव । कदाचित् कैश्चित् तपस्विभिः वस्त्रमप्यधार्यत, तच्च प्रायेण काषायवर्ण-रंजित-

(47) 1–332, 181, 344 श० क० दु० भा० 3 पृ० 11, 1, 348, 42, 6–254, 1–181, 179, 34, 344, 2–58, 1–373, 332, 333, 185 ।

मभूत् **"कृत-काषायसंग्रहः"** कदाचित्तु सर्वथा शुभ्रमप्यम्बरमधार्यत। तपस्विभिः मुञ्जनिर्मिता मौंजी अपि अबध्यत। कदाचित् कुशनिर्मिता मेखलापि तपस्विनां परिधाने अगण्यत। ग्रीवासु अक्षबीजैः, रुद्राक्षैर्वा मालां ते धारयामासुः। मालाश्च ताः कर्णपुष्प-वलय-मालेवाध्रियन्त। तपस्विनां शय्या कुशनिर्मिता स्थण्डिला भूमिर्वा बभूव। दंडिनस्तपस्विनो दंडधारणमकार्षुः। अजिन-कुशासन-कमण्डलु-त्रिशूल-प्रभृतीन्यपि तपस्विचिह्नानि अभूवन्। कन्दमूल-फलानां भक्षणैः तपस्विनः उदर-पूर्तिमकार्षुः।[48]

**तपस्याः**—तपस्विनस्तपश्चर्यानिपुणा बभूवुः। तपस्तपन्तस्ते पूर्णतो ध्यानमग्ना अजायन्त। तपश्चरणं तपोवनेषु तीर्थेषु च व्यधायि। तपस्विनो योगसमाधिमाकलय्य सर्वथा ध्याननिस्पन्दमूर्तयो बभूवुः। ब्रह्मासने ते उपाविशन्।

महान् खलु तपसः प्रभाव इति अङ्गीचक्रुः भारतीयाः। तपोविभूतयः अचिन्त्या अमन्यन्त। यत्प्रभावात् अभिमानवतामपि मानविपर्ययः कर्तुमशक्यत। तपसः महिम्ना पुण्यं मुक्तिरपि सुलभमभूत् तपश्चरन्नेव जलौकः सपत्नीकः चीरमोचनतीर्थे सायुज्य-मुक्तिं प्राप।

**"पत्न्या समं ययौ राजा सायुज्यं गिरिजापतेः" ।। 1–152 ।।**

चंडचेष्टितो मिहिरकुलः दारुणं तपस्तप्त्वा स्ववपुर्दाहमकार्षीत्। पुण्यञ्च प्राप। तपश्चर्या-प्रभावादेव स चन्द्रकुल्यानिर्माणकाले तत्र बाधकं यक्षमपसारयत्। अशोकस्तपसा एव भूतेशाज्जलौक इति तनयं लेभे। **"तपः संतोषिताल्लेभे भूतेशात् सुकृती सुतम्**। 1–107। तपःप्रभावात् भूतं भविष्यं चाप्यगोचरमभवत्। तपस्विनः स्वशापैरेव अपराधिनं दंडयितुमशक्नुवन्। तपोधना ब्राह्मणा दामोदरं सर्पो भवेत्यशपन्। किन्तु इतरसाधनेषु सत्सु शापप्रयोगः तपोविघातकः अमन्यत। विचक्षणा जनास्तपसः कठोरतामल्पां कर्तुम् नैच्छन्। तेषां मते **"शरीरमाद्यं खलु धर्मसाधनम्"** अभूत्। तनौ वाचि विचारे च नैतिक-नियन्त्रणमिति त्रिविधं तप अभवत्[49]।

**तपःस्थथम्**—वनस्य निर्जने प्रान्ते, नदीनां तीरे, गिरीणां कन्दरासु तीर्थेषु वा तपश्चरणं व्यधायि[50]। **"उपह्वरे गिरीणां संगमे च नदीनाम्।"**
इति वाक्यं पाल्यते स्म।

**संस्कारः**--धर्मकृत्येषु संस्काराणां विशेष-महत्त्वमभूत्। वेद-ब्राह्मणग्रन्थेषु संस्कारशब्दः क्वापि नोपलभ्यते। दर्शनेषु भिन्नार्थो ननु अयम्। लौकिक-साहित्ये नैकविधार्थेषु अस्य प्रयोगो दृश्यते। शिक्षा-प्रशिक्षण-परिष्कार-परिशोधन-परिशोधन-पूर्णता-अलंकरण-व्याकरणशुद्धि-पवित्रीकरण-प्रभाव-स्मरणशक्ति-प्रभृतयः अर्थास्तत्र

---

(48) 1–234, 112, 4–1, 3–320, 1।

(49) 1–149, 160, 153, 313, 319 से 321, 107, 165।

(50) 1–149, 150।

प्राप्यन्ते । मीमांसाशास्त्रे यज्ञपात्रादीनां शास्त्रोक्तपरिशोधनविध्यर्थमयं शब्दः खलु प्रयुक्तः । किन्तु शनैः शनैः एतादृशये परिशोधनविधये प्रवर्तितो बभूव यथा मनुष्य-शरीरेण समं तस्य बुद्धि-मनसात्मस्वपि परिशोधन-परिष्कारालङ्करणं जायेत । वीर्य-मित्रोदय-संस्कारप्रकाशे "**आत्म-शरीरान्तरनिष्ठो विहितक्रियाजन्यः अतिशयविशेषः संस्कारः**" इति लक्षणं वरीवर्ति । अतः संस्कारा न केवलं क्रियाकलापमात्रमवगन्तव्या किन्तु ते तथाविधधर्मकृत्यान्यवगन्तव्या येषां संपादनेन शरीर-मनोबुद्धि-आत्मसु उत्तम-प्रभावः संजायेत । आंग्लभाषाया (सैक्रेमेन्ट) शब्दः संस्कारशब्दतुल्यः वरीवर्ति । इदमेव च रूपं राजतरंगिण्या भारते स्वीक्रियते स्म ।

**संस्काराणां संख्या** :—हिरण्यकेशीधर्मसूत्रे संस्कारद्वैविध्यं प्रोक्तं "**संस्कारो द्विविधः भवति ब्राह्मणो दैवश्च ।**" अग्निवायु-प्रभृतीनां देवानां शुद्ध्यै क्रियमाणः अग्निहोत्रादियज्ञो दैवः संस्कारः, मनुष्यशुद्ध्यै विकासाय च संपाद्यमानो गर्भाधानादि-कृत्य-संदोहः ब्राह्मण-संस्कारः अभिधीयते । मनु-याज्ञवल्क्य–प्रभृतिभिः त्रयोदश संस्काराः परिगणिताः । महर्षिः दयानन्दः सरस्वती, अधोलिखितान् षोडशविधान् संस्कारानलिखत् ।

| **संस्कारः** | **समयः** |
|---|---|
| (1) गर्भाधानम् | ऋतुकालस्य दिनचतुष्टयानन्तरम् |
| (2) पुंसवनम् | द्वितीय-तृतीय-मासयोः |
| (3) सीमन्तोन्नयनम् | चतुर्थे मासि |
| (4) जातकर्म | शिशोरुत्पत्तौ |
| (5) नामकरणम् | जन्मनः एकादशे, एकोत्तरशते दिवसे वा **(दशम्यामुत्थाप्य पिता नाम करोति)** |
| (6) निष्क्रमणम् | तृतीये चतुर्थे मासे वा **(चतुर्थे मासि निष्क्रमणिका । (ततः तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम्)** |
| (7) अन्नप्राशनम् | जन्मनः षष्ठमासे । **(षष्ठे मास्यन्न-प्राशनम् दधि-मधु-घृत-मिश्रितमन्नं प्राशयेत्)** |
| (8) चूड़ाकर्म | प्रथमे तृतीये वा वर्षे, **(तृतीये वर्षे चौलम्)** **(सांवत्सरिकस्य चूडाकरणं, तृतीये वा प्रतिहते)** |
| (9) कर्णवेधः | कर्णवेधो वर्षे तृतीये पंचमे वा |
| (10) उपनयनम् | अष्टमे वर्षे ब्राह्मणस्योपनयनम्, एकादशे क्षत्रियस्य द्वादशे वैश्यस्य । |
| (11) वेदारम्भः | अष्टमे, एकादशे, द्वादशे वा वत्सरे |
| (12) समावर्तनम् | शिक्षा-समाप्तौ |

| | |
|---|---|
| (13) विवाहः | पञ्चविंशे संवत्सरे |
| (14) वानप्रस्थः | पंचाशते वर्षे |
| (15) सन्यासः | पंचसप्ततितमे वत्सरे |
| (16) अन्त्येष्टिः | प्राणावसाने |

एतेषां संस्काराणां प्रचलनं राजतरङ्गिण्या अपि भारते आसीदिति, कैश्चित् पद्यैरनुमीयते। वैजनने मासे देव्यां यशोवत्यां जातस्य गोनन्दस्य विषये कल्हणः श्लोकद्वयं लिलेख।

तस्य राज्याभिषेकादिविधिभिः सह संभृताः।
द्विजेन्द्रैः निरवर्त्यन्त जातकर्मादिकाः क्रियाः ।।1–75।।
स नरेन्द्रश्रिया सार्धं लब्धवान् बाल-भूपतिः।
नाम गोनन्द इत्येवं नप्ता पैतामाहं क्रमात् ।।1–76।।

अनयोः श्लोकयोः जातकर्मनामकरण-संस्कारयोरुल्लेखोऽस्तीति नात्र संशयावकाशः। विवाहस्यान्त्येष्टि-क्रियायाश्चापि वर्णनं बहुशः प्राप्यते राजतरङ्गिण्यां, श्मशानोल्लेखः अपि बहुशः समागतः। उपनयन-वेदारम्भ-संस्कारानन्तरं ब्रह्मचर्याश्रमे निवसन् छात्रः ब्रह्मचारी न्यगद्यत,तस्मात् ब्रह्मचारिपद-प्रयोग उपनयनवेदारम्भ-संस्कारयोः संकेतं करोति। अन्यच्च वानप्रस्थानां सन्यासिनाञ्च पौनः पुन्येन वर्णनं उभयोः संस्कारयोः संकेतं विदधाति। एतेषाञ्च संस्कारणां प्रचलनमनुभूयान्येषामपि प्रवर्तनं सहजमेवानुमीयते। एकस्मिन् पद्ये संस्कार-शब्दः अपि समागतः "**तत्रापि पूर्व-संस्कारादुक्तत्रासं दधे जनः।**" किन्तु उक्तार्थेषु कस्मिन्नर्थे नायं प्रयुक्तः[51]।

---

(51) 1–76 टि॰ 326, 319, 320, 149, 326, 7–515।

# दर्शनम्

राजतरङ्गिण्यां विद्यमानानां दार्शनिक-सिद्धान्तानामुल्लेखाः तत्कालीने भारते प्रचलिताध्यात्मिकविचारधारासु भृशं प्रकाशं निपातयन्ति । यद्यपि आस्तिक-नास्तिक-दर्शनां नाम्नोल्लेखं नाकार्षीत् कविस्तथापि तेषां सत्ता अध्ययनमध्यापनं, जन-जीवने प्रभावश्चासीदित्यनुमीयते ।

**सांख्यदर्शनम्**:—सांख्यदर्शने चतुर्विंशति-तत्त्वानि परिगणितानि । तेषु प्रकृति-पुरुषौ प्रधानौ खलु । इमावेव जगतः कारणे, उभयोरपि संसर्गात् सर्गः प्रजायते, ततश्च सर्वे पदार्थाः प्रजायन्ते । राजतरङ्गिण्यां प्रकृतेः पुरुषस्य च नैकवारमुल्लेखो विद्यते । सृष्टेः रचनायां गुणत्रयस्य महन्महत्त्वं ननु । ते च गुणाः सत्वरजस्तमाः सन्ति । एते गुणा एव परस्परं साहाय्यं कृत्वा कार्यं सम्पादयन्ति ।

कविः त्रयाणामप्युल्लेखमकार्षीत् । सत्त्वगुणयुक्तो नरो रागद्वेष-बहिष्कृतः क्षमावान् तेनोक्तः । "**सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः**" इति सांख्य लक्षणानुसारं सर्वं प्रवृत्तिजातं रजोगुणाज्जायते । रजस्-पर्यायं च कर्म कविनोल्लिखितं खलु । मोहात्मकं तमो भवति । अयमेव गुणः सर्वेषां क्रोधज-कामज-व्यसनानां मूलं नाशस्य च कारणं, संकेतितः कल्हणेन । तच्छद्वेषु नृपो नरः तमोगुण-प्रभावादेव जीवनान्तमकार्षीत् । सांख्यदर्शने वर्णितं दुःखत्रयमपि नाविदितमभूत् जनानाम् । दुःखानां फलमवश्यं भोक्तव्यमस्तीति जना अमन्यन्त "**युज्यतेऽवश्यभोग्याननां दुःखानामप्रकाशनम्**" 1-226 आध्यात्मिकमाधिदैविकमाधिभौतिकञ्चेति दुःखत्रये चरमयोः स्पष्टं संकेतो वर्तते । दैवी-मानुषी-विपत्तिरूपे, राजतरङ्गिण्याम् । इन्द्रियाणि बुद्धिः अहंकारः प्रभृतीनामन्येषामपि सांख्यदर्शन-तत्वानामुल्लेखं वीक्ष्यानुमीयते तस्मिन् समये सांख्यदर्शनस्य प्रभावः ।[1]

**योगदर्शनम्**—योगदर्शनं भारतीय-मनीषिभिः स्वविशिष्ट-सम्पत्तिरिवागम्यत । ऋषीणां प्रातिभज्ञानस्य अन्तर्दृष्टेर्वा उत्पत्तौ योग एव प्रधानं हेतुः । योगाभ्यासेनैव सर्वविधाः सिद्धयः प्राप्यन्त इति पुराकालादेव प्रवर्तते धारणा जनमानसेषु । न केवलं श्रुति-ब्राह्मणोपनिषत्सु एव किन्तु जैन-बौद्धागमेष्वपि योगसमाधेः प्राणविद्यायाश्च महिमा गीतो वर्तते । योगशब्दो राजतरङ्गिण्यां नैकस्थलेषु विलोक्यते । तस्य च यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधीनामष्टाङ्गानामपि उल्लेखस्तत्र प्राप्यते । अनेके राजानः योगसमाधिषु स्थिता एव प्राणान् तत्यजुः । तपस्यतो जलौकस्य दशां वर्णयन्नाह कविः—

---

(52) 1–3, 7, 134, 138, 2–93, 1–250 से 259, 226, 2–17, 120 ।

चीरमोचन-तीर्थान्तर्गणरात्रं तपस्यता ।
ब्रह्मासन-निविष्टेन ध्याननिः स्पन्दमूर्तिना ।। 1–149 ।।

अत्र नहि केवलं, ध्यान-आसनयोरेव. अपितु योगस्थितस्यापि संकेतो विद्यते । योगाभ्यासकर्ता तदा योगी न्यगद्यत । **गीतायाः समत्वं योग उच्यते "इति वचनानुसारं** सुख-दुःखे लाभालाभे, जयपराजये सर्वप्राणिषु समदृष्टिः पुरुषः योगीत्यभिहितः । कल्हणः अपि योगिन इममेव गुणमुल्लिलेख । "**सर्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनः**" समाधिसमये योगिन आसनं ब्रह्मासनं न्यगद्यत । ध्यानसमये तच्छरीरं सर्वथा निस्पन्दं मनश्च केवलमुपास्ये देवे निमग्नं भवतीति कल्हणेन प्रतिपादितम् । एतादृशो योगी पुरुष एव स्वाभीष्टलोकं सिद्धिञ्च लभते ।[53]

**न्यायदर्शनम्**—न्यायदर्शनस्योल्लेखः कल्हणेन कैश्चित् शब्दैः कृतः । एतस्मिन् दर्शने प्रमाण-प्रमेय-संशयप्रयोजन-दृष्टान्त-सिद्धान्त-अन्वय-तर्क-निर्णय-वाद-जल्प-हेत्वाभास-जाति-निग्रहस्थानानां षोडशपदार्थानां यथार्थ-ज्ञानेन निःश्रेयसप्राप्तिर्भवतीति प्रतिपादितम् । कविरपि प्रमाण-संशय-प्रयोजन-वाद-प्रभृतीनां शब्दानां प्रयोगञ्चकार । **(ते वादिनः पराजित्य वादेन निखिलान् बुधान्)** । किञ्च अनुमान-प्रमाण-प्रसङ्गे अन्वय-व्यतिरेकयोः अनिवार्यता स्वीकृता तस्मिन् दर्शने । कल्हणः अपि "**दर्शनं पुण्यपापानामन्वयव्यतिरेकयोः**" इति पद्यार्धेन तयोरुल्लेखमकार्षीत् । एतेन न्याय-दर्शनस्य प्रचलनमनुमीयते । अपि च घोरमूलकनगर-प्रसंगं दत्त्वा, न्यायमंजरीत्याख्यस्य न्यायग्रन्थस्य तदध्ययनस्य च संकेतमकार्षीत् कविः । घोरमूलकनाम तत्र प्राप्यते । न्यायमञ्जर्या लेखकः अभिनन्द आसीत् ।[54]

**वेदान्तदर्शनम्**—कविना.वेदान्तदर्शनस्य कस्याश्चित् विशेषधाराया रूपे उल्लेखो न कृतः किन्तु अज्ञान-माया-जीव-ब्रह्म-ईश्वर-प्राज्ञशब्दानां प्रयोगं विधाय, तद्दर्शनसत्तायाः स सूचनामदात् । कविः वेदान्तदर्शने प्रसिद्धस्य लिङ्गशरीरस्यापि संकेतं ददाति ।···· **अथपुर्यष्टकं भ्राम्यदनाक्राम्य विग्रहम्**········2-105 । शरीरं खलु अष्टपुरीयुक्तमाभहितं, तत्र च सूक्ष्मशरीरं भ्रमतीति वेदान्तदर्शने पठामः । तस्यैव शरीरस्य कविनात्रोल्लेखो विहितः । सूक्ष्मशरीरञ्च सप्तदशावयवं प्रोक्तम् । "····सूक्ष्मशरीराणि सप्तदशावयवानि, लिङ्गशरीराणि, अवयवास्तज्ज्ञानेन्द्रिय-पंचकं, बुद्धिमनसी, कर्मेन्द्रिय-पंचकं, वायुपञ्चकं चेति । ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षु-जिह्वा-घ्राणाख्यानि····कविस्तु ज्ञानेन्द्रियाणां तेषां पंचविषयाणाञ्चोल्लेखं विधायापि सांख्यवेदान्तयोः संकेतमकार्षीत् । **विषयान् वशिनामग्र्यः स तान् पंचापि विस्मृतिम्** । "**व्यधाद्विषय-दोषेण महानर्थपरम्पराम्** "शब्दस्पर्शरूप-रस-गन्ध-विषयाः कर्णत्वक्चक्षुजिह्वा-घ्राणानां सन्ति । लिंग-शरीरावयवेषु, एतेषु, एतेषां पञ्चेन्द्रियाणामपि महत्त्वमस्तीत्युपरि लिखितम् ।[55]

---

(53) 1–149, 355, 149, 152 । (54) 1–8, 178, 8–161 तथा टि० ।
(55) 2–105, 3, 1–198 वेदान्तसारः पृ० 36 ।

**वैशेषिक-दर्शनम्**— कणादमुनेः वैशेषिक-दर्शनं, नैक-सिद्धान्तेषु न्यायतुल्यमस्ति। तस्मात् समानतन्त्रं तदुच्यते। न्यायस्य प्रधानमुद्देश्यं, अन्तर्जगतो ज्ञानमीमांसास्ति। वैशेषिकस्य च मुख्यं तात्पर्यं बाह्यजगतः विस्तृतसमीक्षा विद्यते। वैशेषिकमते द्रव्य-गुण-कर्म-सामान्य-विशेष-अभावश्चेति सप्त पदार्था विद्यन्ते। द्रव्याणि तत्र नव निगदितानि--"**तत्र द्रव्याणि पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मनश्चेति नवैव।**" समेषामप्येतेषां कल्हणेन उल्लेखो विहितो विविध-प्रसंगेषु। गुणास्तावत् द्रव्याश्रिताः खलु, ते च रूप-रस-गन्ध-स्पर्श-प्रभृतयः चतुर्विंशतिः विद्यन्ते। एतेषु रूपादीनां पंचविषयत्वेनोल्लेखः कल्हणेन विहितः। शब्द-बुद्धि-सुख-दुःखेच्छा-द्वेष-धर्मा-धर्म-संस्काराः इत्यादिशब्दा अपि राजतरंगिण्यां दृश्यन्ते। सामान्य-शब्देनोल्लिखिता जातिरपि कविना संकेतिता।[56]

**मीमांसा-दर्शनम्**--"**मण्डले विप्लुताचारे विच्छन्न-बलिकर्मभिः**"।... ........ **बलिहोमविधायिनः**........**विनष्ट-धर्मे देशे ऽस्मिन् पुण्याचारप्रवर्तनम्**........इत्यादिषु आचारपदेन धर्मपदेन होम-पदेन च तस्यैव कर्मकांडस्य, तस्यैव च धर्मस्य कविना संकेतः कृतः यस्य विस्तरशो व्याख्या मीमांसा-दर्शने विद्यते।........**धर्माख्यं विषयंवक्तुं मीमांसायाः प्रयोजनम्**"....इति मीमासायां प्रतिपादितम्।....**चोदना लक्षणोऽर्थो धर्मः**....इति च तत्र धर्मलक्षणं विहितम्। शाबरभाष्ये....."चोदना हि भूतं भवन्तं भविष्यन्तं च सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत् किंचनेन्द्रियम्"।[57] एतस्यैव मीमांसा-सारस्य कल्हणः संकेतं कृत्वा भारते तदाख्यदर्शनस्य सत्तां प्रकटयति।

**नास्तिक-दर्शनानि**— नास्तिकदर्शनेषु चार्वाक-बौद्ध-जैन-दर्शनानि परिगण्यन्ते।

**चार्वाक-दर्शनम्**—अस्य दर्शनस्योल्लेखः एकस्मिन् पद्ये कविना कृतः "**चार्वाकाणामिवेषां हि भयं न परलोकतः।**" चार्वाकाः खलु पृथ्वी-जलाग्निवायव इति चत्वारि तत्त्वानि जगति स्वीकुर्वन्ति। भौतिकं शरीरं, इन्द्रियग्रामश्च तत एव समुत्पन्नम्। तन्मते शरीराद्व्यतिरिक्तो न कश्चित् आतम नाम पदार्थो विद्यते। चार्वाकदर्शनं शब्द-अनुमान-साध्यस्येश्वरस्य सत्तां नाङ्गीकरोति। दृश्यमानजगतः नानन्यस्य सत्तां ते चार्वाकाः मन्वते। नापि धर्मार्थ- काममोक्षरूपं पुरुषार्थं ते गणयन्ति। अतएव चार्वाका नास्तिकाः सन्ति तद्दर्शनञ्च नास्तिकं निगद्यते। '**नास्तिको वेदनिन्दकः**'इति मनुवचनेन ज्ञायते यत् चार्वाका अपि वेद-विहित-विचाराणां खंडका भवन्ति। अत एव तेषां कुतः अपि भयं नास्ति नापि परलोकात् नापि ईश्वरात्। कविस्तावत् एकपद्ये नैवेमं सारं प्रदर्श्य, चार्वाकदर्शनसत्तां प्रतिपादयति।[58]

**बौद्धदर्शनम्**--असकृत् कल्हणेन बौद्धप्रभावः प्रदर्शितः इति बौद्धधर्मप्रसंगे विलोकितम्। तत्प्रभावेणैव बौध-दर्शनप्रभावः अप्यनुमीयते।

---

(56) कणादगौतुमीयं पृ० 3, 4, राज० 2–3, 1–216। (57) 1–179, 181, 312 श्लोकवार्तिके श्लोकः 11, तदेव 1–1–2 शाबरभाष्य 1–1–2। (58) 4–345।

ते वादिनः पराजित्य वादेन निखिलान् बुधान् ।
क्रिया नीलपुराणोक्तामच्छिन्दन्नागमद्विषः ।। 1–178 ।।

इति पद्ये बौद्धदर्शन-पंडिताः विवदमाना दृश्यन्ते । आगमद्विषः पदं बौद्धानां, तद्दर्शनस्य च नास्तिकत्वं प्रतिपादयति । बौद्धदर्शनस्य परनिर्वृतेः (मोक्षस्य), बोधेः **"बौधि स्वस्यैव नेष्यन्ति,"** क्लेशानाञ्च **"ये जन्तवो गतक्लेशा बोधिसत्वानवेहि तान्"** **कल्हणः** स्पष्टमेवोल्लेखमकार्षीत् । अविद्या-स्मिता-राग-द्वेष-अभिनिवेशाः इति पंचक्लेशा एव बन्धकारिणो निगदिता बौद्धदर्शने । तेभ्यश्च मुक्त एव निर्वाणं लभते । भगवान् बुद्धस्तत्कृते एवोद्योगं चकार । बौद्धदर्शने शील-समाधि-प्रज्ञारूपस्य रत्नत्रयस्योल्लेखः आस्ते । अहिंसा सत्य-अस्तेय-ब्रह्मचर्य-मद्यसेवनाभावश्चेति पंचशीला भणिताः । कल्हणः सर्वेषामप्येतेषां, समाधिप्रज्ञयोश्च संकेतमकरोत् ।

वेदेषु आस्तिक-दर्शनेषु च स्वीकृतमात्मानं बौद्धदर्शनं नाङ्गीकरोति । कविः आगमद्विषः पदेन तदुल्लेखं करोति । बौद्धदर्शनमते शरीरं चतुर्भिः महाभूतैःखलु निर्मितम् । बौद्धेषु तावत् महासंघिक-सर्वास्तिवाद- साम्मितीय-वैपुल्यवादेति चत्वारः सिद्धान्ताः प्रचलिता आसन् । वैपुल्यवादस्य सर्वाधिकः प्रचारकः नागार्जुनो ननु कल्हणेनापि ससम्मानमुल्लिखितः ।····**स च नागार्जुनः श्रीमान् षडर्हद्धन-संश्रयी** 1-173 बौद्धानां महायानहीनयानौ द्वौ सम्प्रदायौ खलु प्रसिद्धौ । महायाने बोधिसत्वस्य-कल्पना सर्वोत्कर्षेण वर्तते ।····**बोधौ सत्वमभिप्रायो अस्येति बोधिसत्वः**····इति तद्व्युत्पत्तिः । इमामवस्थां लब्धवतः साधकस्य जीवनलक्ष्यं नितान्तमुदात्तं महनीयं व्यापकञ्च जायते । तस्य जीवनोद्देश्यं प्राधान्येन कल्याणसाधनं भवति । तस्य हृदयं प्राणिनां क्लेशान् वीक्ष्य द्रवीभवति । "नैरात्म्य-परिपृच्छा-सत्रे बोधिसत्वस्य विशदवर्णनमित्थं प्रदत्तम् :—

निःस्वभावं निरालम्बं सर्वशून्यं निरालयम् ।
प्रपंचसमतिक्रान्तं बोधिचित्तस्य लक्षणम् ।।

कल्हणः बोधिसत्वस्येमं स्वरूपं जलौक-कृत्तिका-देवी-कथाप्रसंगे विस्तरशो ददाति । स आह····सत्वोर्जितव्रतः बोधिसत्वः प्राणिषु दृढं करुणां निधत्ते, विगतक्लेशाः अपराधिष्वप्यकुपिता विश्वपालननिरता, क्षमया चोपकुर्वाणा बोधिसत्वा भवन्तीति । जलौक-नागार्जुन प्रभृतयः तादृशा एव बोधिसत्वा अभिहिताः । इत्थं बौद्धदर्शनं भारते लब्धप्रतिष्ठं, अधिगतप्रभावञ्चासीदिति सम्यक् निश्चीयते ।[59]

**जैनदर्शनम्** — **यः शान्तवृजिनो राजा प्रपन्नो जिनशासनम्** "इति पद्यार्थेन कविः जैन धर्मस्य तद्दर्शनस्य च प्रचारमनुमापयति । जैनदर्शने मोक्षलाभाय साधन-त्रितयं निगदितम् सम्यक्-दर्शनम् (श्रद्धा), सम्यक्ज्ञानं(जीव-अजीव-आस्रव-बंध-संवर-निर्जरा-

---

(59) 1–178, 172, 139, 138 भारतीय दर्शन पृ० 181, 178, 173 बौधिचर्यावतराज-पंजिका पृ० 421 भा० पृ० 193, 194 नैरात्म्य परि० सूत्र-श्लोक 12–1–134, 138, 139 177 ।

सत्यास्तेय-ब्रह्मचर्य-अपरिग्रहाणां पंचव्रतानां पालनं नितान्तमनिवार्यं तत्र कथितम् । प्रकारान्तरेण जैनदर्शम् षड्द्रव्याणि स्वीकरोति, कालः (एकदेशव्यापी), अस्तिकायः (बहुदेशव्यापी) स च जीव-पुद्गल-आकाश-धर्माधर्मभेदेन पंचविधः । राजतरङ्गिण्यां सर्वेषां त्वेतेषां न वर्तते वर्णनं तथापि जीव-बन्ध-मोक्ष-अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-आकाश धर्माधर्म-कालप्रभृतयः शब्दास्तत्र बाहुल्येन व्यस्ताः प्राप्यन्ते । किञ्च जैन-धर्मस्य प्रायोपवेशशब्दः (आमरणमुपवासः) बहुषु स्थलेषु समागतो ननु ।[60]

**प्रचलित-दार्शनिक-विचाराः**—सर्वेषु भारतीय-दर्शनेषु केचित् विचाराः समाना सन्ति ते च राजतरंगिण्यां लभ्यन्ते ।

**मोक्षः**—राजतरंगिण्यां प्रधानरसः शान्तो वरीवर्ति मोक्षाय च स एव रस उपयोगी विद्यते । तस्य प्राप्त्यै एव मानव-जीवनं समाप्ति ययौ । मोक्ष एव मुक्तिः कथ्यते "मुंचन्ति पृथक् भवन्ति जना यस्यां सा मुक्तिः" इति मुक्तिपदव्युत्पत्तिरस्ति । जना दुःखस्य परित्यागं कामयन्ते, अतः यस्यामवस्थायां पुरुषाः दुःखेभ्यो विमुक्ता-भवन्ति सा एव मुक्तिरभिधीयते । कल्हणः अस्या मुक्तेरुल्लेखञ्चकार, (भुक्ति-मुक्ति फलप्राप्तिः) बौद्धदर्शनेषु मोक्षपर्यायः निर्वाणः निर्वृतिर्वा वर्तते तस्य चापि वर्णनं कविना विहितम् । पुराणेषु पंचविधा मुक्तिः प्रतिपादिता ।

**(1) सालोक्यमुक्तिः**—ईश्वरस्य लोके निवासः । **(2) सानुज्यमुक्तिः**—अनुजवत् ईश्वरेण समं वसतिः । **(3) सारूप्यमुक्तिः**—उपास्यदेववत् आकृतेः प्राप्तिः । **(4) सामीप्य-मुक्तिः**—सेवकवत् ईश्वरसमीपे वासः । **(5) सायुज्य-मुक्तिः**—ईश्वरेण सार्धं योगः । किंच वेदान्तिनो ब्रह्मणि लयमेव मोक्षं निगदन्ति । एतासां मुक्तीनामुल्लेखः कल्हणेन—

(1) हरहास-सितैः राजा क्रीतान् लोकान् क्रमाद्ययौ ।।
(2) पत्न्या समं ययौ राजा सायुज्यं गिरिजापतेः ।।
(3) आरुरोह सदेहोऽयं लोकान् शशि-शिखामणेः ।।
(4) अनघान् लोकानासदत् सुकृतैः कृती ।।
(5) प्रलीन-मुक्ताय हरकल्पमहीरुहे ।।

इत्यादिषु पदेषु कृतः । मुक्तपदेनात्र लब्ध-मुक्तीनां पुरुषाणामुल्लेखो वरीवर्ति । संसारस्य सर्वजन्तूनां क्षणभंगुरतां प्रदर्श्य कल्हणः मुक्तिलाभाय शान्तरसगरिमाणं प्रकटीकरोति—

क्षणभंगिनि जन्तूनां स्फुरिते परिचिन्तिते ।
मूर्धाभिषेकः शान्तस्य रसस्यात्र विचार्यताम् ।। 1–23 ।।

---

(60) 1–102, 4–82–, 99, 5–468, 6–25, 336, 343, 7–13, 1088, 1157, 1611, 8–51, 110, 658, 709, 768, 808, 939, 2224, 2733, 2739 ।

प्रलीनमुक्ताय-पदेन कविः वेदान्तिनां मोक्षं प्रतिपादयति। पुण्यकर्मभिः जना मुक्ति प्राप्तुं समर्थाः। ब्रह्मासनेन, समाधिना, तपश्चरणेन चैव सा लभ्यते। मुक्तेरेवापरं नाम कौसीद्यमाह कल्हणः। राज्यं, लक्ष्मीवैभवं, सर्वाः संसारसामग्र्यः मुक्तौ बाधिकाः सन्ति। तेषां परित्यागेनैव मुक्तिमार्गः प्रशस्तो जायते। आर्यराजः तादृशीमेव मुक्तिं प्राप्तुमियेष। पंचविषयाणां कामक्रोधलोभमोहादीनामपि परित्यागः अनिवार्यः।[61]

**सृष्टि-विषये-धारणाः**— सृष्टिविषयक-विचारेषु कल्हणेन सांख्यमतं संपुष्टम्। प्रकृतिरेव सृष्टेः मूलकारणम्। विधातैवास्या जनयिता, पोषयिता संहर्ता चास्ति। तस्मादेव सर्वमुत्पद्यते, तत्रैव च जगल्लीयते। कल्पो ब्रह्मण एकदिवसतुल्यो विद्यते। यत्र च स सृष्टिं विधत्ते। एतावतः कालस्यैव रात्रिरायाति। यत्र च सर्वत्र प्रलय-साम्राज्यं जायते। विष्णुश्च क्षीरसागरे शेषशय्यामधिशेते। प्रातःकाले पुनः सृष्टिर्भवति। कल्हणः सृष्टेर्युग-चतुष्टयस्योल्लेखञ्चकार, कलियुगं, द्वापरयुगं, सत्युगं (आदियुगंवा), त्रेतायुगञ्चेति। देवानां चतुर्युगं द्वादशसहस्रवत्सराणां, मानवानाञ्च विंशतिसहस्राधिकं त्रिचत्वारिंशल्लक्षपरिमाणं युगं भवति। सत्ययुगस्य 1728000 वर्षाणि, त्रेतायुगस्य 1296000 संवत्सराः, द्वापरयुगस्य 864000 संवत्सराः कलियुगस्य तु 432000 वर्षाणि अभिहितानि शास्त्रकारैः, ऋषिभिरपि युगानि चत्वारि निगदितानि—

चत्वारि भारतवर्षे युगानि ऋषयोऽब्रुवन्।
कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम्॥

**मन्वन्तरम्**—दिव्यानामेतेषां युगानामेकसप्ततिः मन्वन्तरं निगद्यते। एको मनुः यावदधिकारी भवति स कालो मन्वन्तरसंज्ञको ननु। इदमेव मनोर्मन्वतरमप्युच्यते। एवञ्च चतुर्युगाख्यानां साधिककह्येकसप्ततिः कृतत्रेतादि-युगानां मनोरन्वन्तरमप्युच्यते इति लिङ्गपुराणे लिखितम्। मनवः चतुर्दश अभिहिताः। अतः मन्वन्तराण्यपि चतुर्दश निगदितानि एभिः। चतुर्दशभिः मन्वन्तरैः कल्पो निगद्यते। कल्हणः श्लोकद्वये कल्पस्य मन्वन्तराणाञ्च सूचनां ददौ।

पुरा सतीसरः कल्पारम्भात्प्रभृतिभूरभूत्।
कुक्षौ हिमाद्रेरर्णोभिः पूर्णा मन्वन्तराणि षट्॥ 1–25॥
अथ वैवस्वतीयेऽस्मिन् प्राप्ते मन्वन्तरे सुरान्।
द्रुहिणोपेन्द्ररुद्रादीनवतार्य प्रजासृजा॥ 1–26॥

---

(61) 1–23, 32, 65, 172, 90, 152, 282, 349, 1, 90 96, 349, 1, 149 से 155, 2–2 1–39, 64, 65, 69।

अत्र कविना सप्तमन्वन्तराणामुल्लेखो विहितः। सप्तमनवश्चेमे सन्ति। "स्वायम्भुवो मनुः स्वारोचिषस्तथा। औत्तमिस्तामसश्चैव रैवतश्चाक्षुषस्तथा, षडेते मनवोऽतीताः साम्प्रतं रवेः सुतो वैवस्वतोऽयं तस्मै तत् सप्तकं वर्ततेन्तरम्।"[62]

**लोकः**—पुराणादिषु सृष्टिप्रसंगे सप्तलोकानां कल्पना कृतास्ति। अग्निपुराणे ते इमे उक्ताः।

भूर्भुवः स्वः महश्चैव जनश्च तप एव च।
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्तिताः॥

कविस्तु क्रीतान् '**लोकान् क्रमाद्ययौ**', '**अनघान् लोकानासदत्**' इत्थादिपदेषु लोकान् पदेन सप्तलोकानां चर्चाञ्चकार। जनेषु तु लोकत्रयं प्रसिद्धं नाम, तच्च – **भूर्लोको भुवः स्वर्लोकस्त्रैलोक्यमिदमुच्यते,** इति देवीपुराणे कथितम्। कल्हणस्तु '**त्रिलोक्यां रत्नसूः श्लाध्या', त्रिदिवदुर्लभं, त्रैलोक्यस्यापि विप्लवं, त्रिभुवनगुरोः**', इत्यादिषु पदेषु लोकत्रयस्य संकेतमकार्षीत्। किंच लोको हि स्थावरजंगमभेदेन द्विविधः अपि प्रोक्तः शास्त्रेषु। तदुल्लेखः कविना चराचरगुरोः पदेन कृतः।[63]

**मृत्युः परलोक-जीवनञ्च**—मृत्युः चेतन-प्राणिनां स्वाभाविको धर्मः अमन्यत। (मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितसुच्यते) इति कालिदास-महाकवेः धारणा राजतरंगिण्यामपि प्राप्यते। आत्मा अमरो वर्तते, अतः तस्य जीवनस्य च अन्तिम-निराकरणं मृत्युर्नास्ति किन्तु तस्य दीर्घनिद्रा वर्तते, एकस्मिन् पद्ये दीर्घनिद्रायाः संकेतो विद्यते।

'**वैरिणश्चित्रं दीर्घनिद्राविधेयताम्**'—मृत्योरनन्तरं परलोकवास जायते इति जनभावनासीत्। परलोकात् जना अबिभ्यन् तत्कृते च सततं प्रयासं चक्रुः। परलोक-प्राप्तिः केवलं पुण्यबलैर्जायते। कविसम्मतौ। सदसत्कर्मानुरूपं स्वर्गनरकयोः धारणा पूर्वकालादेव भारतीयेषु प्रवर्तते। स्वर्गप्राप्तिः पुण्यकर्मभिर्जायते। स्वर्गे खलु सुन्दर्यः अप्सरसश्च पुण्यशालिनामभिनन्दनं कुर्वन्ति। पुण्यकृतामागमनमाकर्ण्य देवा अपि प्रमुदिता भवन्ति।

**"सिद्धः-सिद्धः सदेहोऽयमिति शब्दं सुरा दिवि।**
**प्राघोषयंस्ताडयन्तः पटहं सप्तवासरान्॥"**

कल्हणः 'गतिं प्रवीरसुलभां' हरहाससितैः कृत्यैः क्रीतान् लोकान् क्रमाद्ययौ—'आरुरोह संदेहोऽसौ लोकान्शशिशिखामणेः'—'अनघान् लोकानासदत् सुकृतैः कृती'—'भोक्तुं पुण्य-परीपाकं लोकात् सुकृतिनामगात्'—'सुरा दिवि' – इत्यादिषु पदेषु

(62) 1–4, 25, 26, 45, 4–508, 1–49, 50, 339, श.क.द्रु. भा. 4 पृ. 43, भा. 3 पृ. 631, 632, 1–25, 26।

(63) श.क.द्रु. भा. 4 पृ. 231, 1–90: 152, 42, 43, 272, 3–530, 8–1।

परलोकस्य स्वर्गस्य वा कल्पनाया रूपं प्रस्तुतकरोत् । इदञ्चावगम्यते यत् सत्कर्मकृतां लोक एव स्वर्गः परलोको वा वरीवर्ति । यत्र खलु धर्म एव निवसति **'लोकान्तरादिवायातं धर्मं मेने तदा जनाः'** स्वर्ग एव देवानां निवास स्थलं ननु । यत्र ते विविधान् प्रमोदोत्सवान् कुर्वन्ति । तत्र पापस्य सर्वथाभावो भवति । स्वर्गजयस्तावत् केवलं शिवाट्टहासतुल्यैः शुभैः कर्मभिः पुण्यवलैश्च संजायते । तत्रैव अप्सरसो निवसन्ति, स्वर्गे केवलं सुखमेव तिष्ठति ।[64]

**नरकः**—नरकस्तावत् निरयपदेन संकेतितः कविना । यत्र केवलं, दुःखमेव तिष्ठति, प्रेतास्तत्र निवसन्ति, विविधास्तत्र विप्लवा भवन्ति, क्षुधापिपासादीनां तत्र बाहुल्यमास्ते ।[65]

---

(64) रघुवंशे, 8–87, राज. 1–39, 328, 85, 68, 69, 285, 64, 90, 282, 349, 345, 285, 338, 285, 339 ।

(65) 1–20 ।

सप्तमः तरंगः

# संस्कृतौ कलाः

## काव्यकला

भारतीय-संस्कृतौ कलानां गौरवपूर्णम् स्थानमास्ते । राजतरङ्गिण्यां चित्रिते भारतवर्षे विविधललितकलानां रमणीयं रूपं विलोक्यते, तत्र च काव्यकला महत्गौरवं धत्ते । समस्ते अपि भारतवर्षे काव्यकला प्रसृता आसीत् । सहस्रद्वयस्यास्मिन् समये शतशः कवयः भारतभूमाववातरन् यैर्ननु स्वलेखनीभिः काव्यकलाया चरमोत्कर्षः प्रदर्शितः । कल्हणस्य राजतरङ्गिण्यामपि अस्या कलाया परमरमणीयं रूपं दृष्टिपथं समायाति । राजतरङ्गिण्या भूमिकायां समस्ता अपि काव्यसिद्धान्ताः कविना संगृहीताः संकेतिताश्च सन्ति ।

कवते कवयति सर्वं वर्णयति सर्वं सर्वतो गच्छतीति वा व्युत्पत्या कुगतौ कवृवर्णे वा धातोरिनिप्रत्यये यद्वा कौतीति व्युत्पत्या कुशब्दे धातोः, **'अच इति'** उणादिसूत्रेण[1], इप्रत्यये कृते कविशब्दो निष्पद्यते । अमरकोषे कवते श्लोकान् ग्रंथते वर्णयतीति वा कवृधातोरिनि प्रत्यये कविः पंडितः इत्युक्तं, तथा च **'संख्यावान् पंडितः कविः ।'**[2] हेमचन्द्रः कविशब्दपर्यायं ब्रह्मा इत्यददात् । ध्वन्यालोककारमते काव्यसंसारे कविरेव प्रजापतिर्वरीवर्ति यश्च यथेष्टं विश्वं विपरिणामयति ।[3] अग्निपुराणेनापि तदेव प्रतिपादितम् । कल्हणः अपि कविं प्रजापतिं वेधसं वा भणति । तन्मते कविप्रजापतिरेव व्यतिक्रान्तं कालं प्रत्यक्षतमानेतुं क्षमः खलु—**'कविप्रजापतींस्त्यक्त्वा....।'**[4] राज्ञां कीर्तिकायस्य कर्तारस्त एव वर्तन्ते **'कर्तारः कीर्तिकायस्य नाभूवन् कविवेधसः ।**[5]

प्रजापतिरिव कविरपि दिव्यदृष्टिं धत्ते ।[6] कविरेव सूरिः कथ्यते स्म ।[7] कालिदास अपि रघुवंशे वाल्मीकिप्रभृतीन् कवीन् 'सूरि' पदेनोल्लिखितवान् ।[8]

---

(1) उणादिः—4–138 ।

(2) अमरकोष: 2–7–5 ।

(3) अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथा विपरिवर्तते ।। ध्वन्यालोकः—पृ० 422 ।

(4) 1–4 । (5) 1–45 । (6) 1–5 ।

(7) 1–14 'दृष्टिगोचरं पूर्वसूरिग्रन्था राजकथाश्रयाः ।

(8) अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ।। रघुवंशे 1–4 ।

कवेः कर्म एव काव्यमकथ्यत । मेदिनीकोषे—'काव्यं कवेरिदं कर्म भावो वा । ष्यञ्, ग्रन्थः इति प्रतिपादितम् । कह्लणः अपि असकृत् तत्पुष्टिञ्चकार[9] । काव्यस्यापरपर्यायाः कोषेषु कविकृतिः, कविता,[10] ग्रन्थः[11] इत्यादयः प्रदत्ताः सन्ति । कविताशब्दपर्यायेषु च कवित्वं, काव्यञ्चेति प्रदत्तम् । तथाहि उद्भटः अपि आह "कवितावनिता वापि आयाता सुखदायिनी"[12] । अन्येषु कोषेषु च कविता-पर्याये कवित्वं, कविताकला, काव्यप्रबन्धः, काव्यबन्धः, काव्य-रचना, कवित्वं चेत्यादयः शब्दा विद्यन्ते[13] ।

कह्लण-काले काव्यशब्दस्य तात्पर्य सन्दर्भः, कविगुणः प्रबन्धः ग्रन्थः, कविकर्म, आम्नायः इति शब्दाः प्रयुज्यन्ते स्म ।[13]

किं खलु काव्यस्वरूपं किञ्च तस्य गुणा भवन्तीति सम्यक् प्रतिपादितं साहित्यशास्त्रप्रबन्धेषु आचार्यप्रवरैः । बहूनि काव्यस्वरूपविधायकानि तैः कृतानि लक्षणानि, भामहरुद्रयोर्मते शब्दार्थ-साहित्ये काव्यमस्ति,[15] श्रीवत्सलांछनः आस्वादप्राणे पदसंदर्भे काव्यं पश्यति,[16] अग्निपुराणे, इष्टार्थयुक्तापदावलिरेव काव्यं खलु ।[17] दंडी चापि तथैवाह,[18] वामनमते रीत्यलङ्कारौ काव्यसर्वस्वं-विद्येते[19] । वाग्देवतावतारो मम्मटः सगुणे दोष-शून्ये, रससिक्ते, अलंकारयुक्ते च शब्दार्थयुगले काव्यत्वमभिधत्ते । [20] विश्वनाथस्तु रससंवलित-वाक्यमेव काव्यमाह[21] । पण्डितराजजगन्नाथश्चमत्कारार्थ-प्रतिपादकं शब्दमेव केवलं काव्य संजगाद ।[2] सर्वेष्वप्येतेषु काव्यलक्षणेषु मम्मटलक्षणं सर्वाण्यतिशेते ।

---

(9) 1–13, 45, 8–682 ।
(10) आ० हि० सं० को० पृष्ठ 106 ।
(11) श० क० द्रु० द्वि० भा० पृष्ठ 68 ।
(12) तदेव ।
(13) आ० हि० सं० को० पृष्ठ 98 ।
(14) 1–22, 3, 11, 14, 17, 13, 45, 16, 8, 682 ।
(15) शब्दार्थौ सहितौ काव्यम्—भामहः, शब्दार्थौ काव्यम्–रुद्रटः ।
(16) काव्यमास्वादजीवातुः पदसन्दर्भ उच्यते ।
(17) संक्षेपादिष्टार्थव्यवच्छिन्ना पदावलिः ।
(18) शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावलिः ।
(19) रीतिरात्मा काव्यस्य सौन्दर्यमलंकारः ।
(20) तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ।
(21) वाक्यं रसात्मकं काव्यम् ।
(22) रमणीयार्थप्रतिपादकः शब्दः काव्यम् ।

कह्लणकृतौ काव्यस्वरूप-प्रतिपादका सर्वे अपि शब्दाः लभ्यन्ते । इमे शब्दाः पदानि वा द्रष्टव्यानि वर्तन्ते—**"सुधास्यन्दास्कन्दी" 'सुकवेर्गुणः', 'यशः कायः', 'कीर्तिकायस्य' 'रम्यनिर्माणशालिनः', 'सर्वसंवेद्यान् भावान् प्रतिभया यदि', 'वैचित्र्ये अप्यप्रपंचिते'....वस्तु यत् प्रीतये सताम्, गुणवान् रागद्वेषबहिष्कृतः, सताम् वाच्यप्रकाशने दुष्टवैदुष्यतीव्रा, कविकर्मणि....निर्दोषः, नमः कवि-कर्मणे, भैषज्यभूतसंवादिकथा, मूर्धाभिषेकः शान्तस्य रसस्य, संक्रान्तप्राक्तनानन्तव्यवहारः.... सुचेतसः संदर्भः हृदयंगमः । अमन्दरसस्यन्दसुन्दरा....निपीयताम्, तरंगिणी मधुमती वाणी च कविसेविता ।**[23]

एतेषु उध्दृतपदेषु न केवलं काव्य-सिद्धान्ता एव संकेतिताः किन्तु काव्यकारणप्रयोजनात्मादीनामप्युल्लेखो वर्वर्ति । ग्रन्थारम्भे अनुबन्धचतुष्टयोल्लेखो विधीयते, **अधिकारी विषयः प्रयोजनं सम्बन्धश्चेति** अनुबन्धचतुष्टयमस्तीत्यभिमतमाचार्याणाम् ।

तस्मिन् समये।काव्यास्याधिकारिणः सचेतसो विद्वासः अमन्यन्तेति निष्कर्षः पदद्वयेत निष्पद्यते । **"वस्तु यत् प्रीतये सताम्....सुचेतसः । कस्य न संदर्भो यदि वा हृदयंगमः ।"** सहृदयस्येव रससिक्तचेतसि काव्यप्रबन्धो हृदयंगमो जायते ।[24]

काव्यप्रतिपाद्यं कथा-वस्त्वेव तद्विषयः अभवत् । राजतरङ्गिण्याः विषयो राज्ञामितिवृत्त-प्रदर्शनमस्ति ।[25] प्रतिपादकस्तु कह्लणः अवर्तत एव....अतः प्रतिपाद्यप्रतिपादकभावरूपः सम्बन्धः अस्ति, सर्वेष्वपि काव्येषु अयमेव च सम्बन्धो अवगम्यते ।

अन्तिमः अनुबन्धो ननु प्रयोजनम् । प्रत्येककाव्यस्य तत् भिन्नमेवाभवत् । कह्लणकाव्यप्रयोजने विचारणायाः पूर्वं मूर्धन्याचार्यमतेष्वपि विचारसरणिः प्रसारणीया ।

आचार्यो भामहः धर्मार्थकाममोक्षेषु विविधकलासु च पुण्यं, कीर्ति प्रीतिञ्च काव्यप्रयोजनमाह । वामनः प्रीतिं यद्वा आनन्दानुभूतिं काव्यस्य दृष्टप्रयोजनं, कीर्तिञ्चादृष्टप्रयोजनमलेखीत् । वक्रोक्तिसिद्धान्तप्रतिपादकः स्वग्रन्थे काव्यप्रयोजनमधिकं स्पष्टं करोति । स प्राह यत् काव्यन्तावत् अभिजातपुत्रेभ्यः धर्मार्थकाममोक्षाणां सिद्धेः सरलतमो मार्गः अस्ति । सत्काव्यपरिज्ञानेनैव विविधव्यवहारपरिज्ञानं भवति । सर्वाधिकं प्रधानञ्च प्रयोजनम् सहृदयहृदयाह्लादकत्वं काव्यामृतरसेन चमत्कृत्युत्पादनञ्च वरिर्वति । इत्थञ्च तन्मते धर्मार्थादिज्ञानं व्यवहारज्ञानं रससुधास्वादने चमत्कारश्चेति प्रयोजनत्रये तृतीयं प्रयोजनं सर्वाण्यति-

---

(23) 1–3, 45, 4 से 7, 18, 12, 13, 45, 21, 23, 24, 37 ।

(24) 2–6, 22 ।

(25) भूतार्थकथने यस्य स्थेयस्वेव सरस्वती । 1–7 ।....अस्मिन् भूतार्थवर्णने....
सर्वप्रकारं स्खलिते योजनाय ममोद्यमः ।। 1–10 ।।

क्रामते । विश्वनाथोऽपि चतुर्वर्गफलप्राप्ति काव्यप्रयोजनत्वेनाह । रसगङ्गाधरकारो जगन्नाथपण्डितः, यशः परमाह्लादः गुरुराजदेवताप्रसादादिकं प्रयोजनं जगाद । मम्मटः समेषामप्येतेषां प्रयोजनानामेकस्यामेव कारिकायां संग्रहं चकार [26] । तस्य सम्मत्यां यशः अर्थप्राप्तिः, व्यवहारज्ञानं, अमंगलनाशः आनन्दानुभूतिः उपदेशश्चेति षट् प्रयोजनानि भवन्ति ।

कल्हणः राजतरङ्गिण्यां समेषामप्येतेषामुल्लेखं विदधौ । **'येनायाति यशः कायः····कर्तारः कीर्तिकायस्य,** इत्यादिषु यशः प्राप्ति काव्यप्रयोजनत्वेन संकेतयित्वा भामहस्य, वामनस्य पण्डितराजजगन्नाथस्य, मम्मटस्य च कीर्तेर्यशसो वा, स्पष्टं संकेतं करोति ।

आनन्दवर्धनभवभूतिप्रमुखानां विद्वत्प्रवराणामुल्लेखं विधायार्थप्राप्तिमपि काव्यप्रयोजनं स्वीचकार कविः । किंच **'संक्रान्तप्राक्तनानन्तव्यवहारः'** इति पद्यार्धेन कुन्तकस्य **'व्यवहारपरिस्पन्दिसौन्दर्यम् व्यवहारिभिः** 'पदेन मम्मटस्य च **व्यवहार-विदे'** पदं सकेतयति ।

अन्यच्च प्रत्येकं तरङ्गस्य मंगलाचरणं 'शिवेतररक्षतये' पदमिंगितयति । मंगलाचरणानामिमे अंशा अत्र विशेषं द्रष्टव्याः सन्ति **'हरः पातु वः, व्यपोहतु वपुः स्थाणोरभद्राणि वः········ भिन्नार्थामपि सदृशाक्षरामपि वदन्त्येव गिरं पातु वः···· शृण्वन्न्यपर्णावितात् स जगत्प्रीणातु गौरीश्वरः, सा भिद्याद् दुरितं चराचरगुरोरन्तः पुरं पार्वती····**एतैः पदांशैः स्पष्टं यत् अमंगलानाशः अपि काव्यप्रयोजनममन्यत । [8]

किंच 'सद्यः परनिर्वृतये' पदस्य वृत्तौ मम्मटो लिलेख—**सकलप्रयोजन–मौलिभूतं समनन्तरमेव रसास्वादन–समुद् भूतं विगलितवेद्यान्तरमानन्दम्** [29] अनेनैव वाक्येन भामह-वामनयोः प्रीतिः, कुन्तकस्य **'काव्यामृतरसेनान्तश्चमत्कारः'** जगन्नाथस्य च परमाह्लादः समाह्रियते ।

---

(26) 'धमार्थकाममोक्षेषु वैचक्षण्यं कलासु च
करोति कीर्ति प्रीतिं च । साधुकाव्यनिषेवणम् ।। भामहकाव्यालंकारः 1–2 ।।
'काव्यं सद्दृष्टादृष्टार्थ-प्रीति-कीर्ति-हेतुत्वात् ।। वामन-काव्यालंकारः 1–1–5 ।
'वक्रोतिः काव्यजीवितम्-प्रथमोन्मेषः—3–5 कारिकाः ।
चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि काव्यादेव····साहित्यदर्पणम् । 1–2 ।
'तत्रकीर्तिपरमाल्हादगुरुराजदेवताप्रसादाद्यनेकप्रयोजनकस्य····रस गङ्गाधरः—प्रथमाननं पृष्ठ 9 ।
'काव्यं यशसे अर्थकृते व्यवहारविदे शिवेतररक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।। काव्यप्रकाशः 1–2 ।

(27) 1–3, 45, 22 ।

(28) 3–1, 4–1, 5–1, 6–1, 7–1, 8–1 ।

कल्लणस्तु 'प्रीतये सताम्' इत्यभिधाय भामहवामनयो: प्रीतिं सम्यक् प्रकटयति । अथ च "**सुधास्यन्दास्कन्दी मधुमती वाणी च, तदमन्दरसस्यन्दसुन्दरेति**" बहुभि: पदैरसंशयमेव रसामृतरसेन सहृदयाह्लादकत्वरूपं काव्यस्य मूर्धन्यप्रयोजनं प्रदर्शयामास । **रम्यनिर्माणशालिन:** पदमपि विचारार्हं ननु । 0 इदं पदं पण्डितराजजगन्नाथस्य '**रमणीयार्थ-प्रतिपादक: शब्द: काव्यमिति** लक्षणं स्मारयति रम्यशब्दस्य स एवार्थ: यो हि रमणीयपदस्य । पण्डितराजो ब्रूते । **रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता । लोकोत्तरत्वञ्च आह्लादगतश्चमत्करापरपर्यायोऽनुभव-साक्षिको जाति-विशेष: ।**[31] अनेनेदं निष्पन्नं यत् रमणीय: चमत्कारश्च पर्यायरूपौ ननु, चमत्कारश्च रसस्य सारो वर्तते '**रसे सारश्चमत्कार: सर्वत्राप्यनुभूयते**' इति नारायणपण्डितवाक्यात् । इत्यञ्चावगम्यते यत् रसएव आनन्दं जनयति ।

आस्वाद्यमानरसेनैव च सद्य: परनिर्वृ॒ति भवतीति सिद्धं, तदपि चास्ति प्रयोजनं कल्लणमते । किंच मोक्षविधायकं शान्तरसं मूर्धाभिषेककेनांगीकृत्य कवि: मोक्षादिप्राप्तिमपिकाव्यप्रयोजनं संकेतयति ।

**काव्यकारणम्**—काव्यहेतुप्रकरणे आचार्यैर्बहुशो लिखितं, भामह: प्रतिभामेव काव्यकारणं मनुते मन्मते गुरूपदेशात् शास्त्रज्ञानन्तु मन्दधियामपि भवति, किन्तु न खलु प्रतिभाशून्ये जने तत् स्फुरति ।[32] तन्मते काव्यरचनापूर्वमितरे ग्रन्था अपि सम्यगवलोकनीया: । भट्टतौतमते प्रतिभालक्षणमिदमस्ति '**प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता**' । वामनमते काचिदद्भुतशक्तिरेव प्रतिभा वरीवर्ति '**प्राक्तनाद्यतनसंस्कारपरिपाकप्रौढ़ा प्रतिभा काचिदेव कविशक्ति: ।**

आचार्यो दंडी प्रतिभां विविधशास्त्रज्ञानं (श्रुतं) अभ्यासञ्च काव्यकारणत्वेनांगीकरोति ।[33] वामन: प्रतिभामेव कवित्वमूलमाह । '**कवित्व-बीजं प्रतिभानम्**' अन्यस्मिन् स्थाने स अलेखीत्—**लोको विद्या प्रकीर्णञ्च काव्याङ्गनानि**' राजशेखरमत्यामपि शक्ति: प्रतिभा वा काव्यहेतुरस्ति । **सा (शक्ति:) केवलं काव्यहेतुरिति यायावरीय: ।** ध्वन्यालोककार: प्रतिभां व्युत्पतिञ्च काव्यहेतुत्वेनाङ्गीचकार । स प्राह प्रतिभया अव्युत्पतिकृतदोष: अपि आच्छाद्यत इति ।[34]

---

(29) काव्यप्रकाश: 1–2 वृत्ति: । (30) 1–6, 3, 36, 4 ।

(31) रस-गङ्गाधर: प्रथमाननं पृष्ठ 9 ।

(32) गुरुपदेशादध्येतुं शास्त्रं जड़धियोऽप्लम् ।
काव्यन्तु जायतेजातुकस्यचित् प्रतिभावत: ।।

(33) नैसर्गिकी च प्रतिभा श्रुतंच बहुनिर्मलम् ।
अमन्दश्चाभिमोगोऽस्या: कारणं काव्यसम्पद: ।।

(34) अव्युत्पतिकृतो दोष: शक्त्या संव्रियते कवे: ।
यस्त्वशक्तिकृतस्तस्य झगित्येवावमासते ।।

भामह-मम्मटावपि तस्यैव पुष्टिं कुरुतः । किन्तु आचार्यों मंगलस्तावत्तद्विपरीतमेवालिखत् **'कवेः संव्रियतेऽशक्तिर्व्युत्पत्या काव्यवर्त्मनि'** । श्यामदेवमते समाधिः चित्तस्यैकाग्रता वा काव्यस्य प्रधानं हेतुरस्ति **'काव्यकर्मणि समाधिः परं व्याप्रियते इति श्यामदेवः'** ।

रुद्रटः शक्तिं व्युत्पत्तिमभ्यासं च त्रितयमपि समुदये काव्यकारणमभिधत्ते । **'त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः'** मंगलः अभ्यासं प्रधानमब्रवीत्-**अनुभव इतिमंगलः** । राजशेखरमते समाधिनाभ्यासेन च शक्तिराभासते। वाग्देवतावतारः मम्मटः काव्यहेतुविवेचनावसरे सर्वेषामपि मतानां सारं संगृह्य शक्तिनिपुणताभ्यासेषु अन्तर्भावं चकार ।[35] जयदेवो ब्रवीति-**'प्रतिभैव श्रुताभ्याससहिता कवितां प्रति हेतुः………'**

कह्लण एतेषा संकेतं विधायापि प्रतिभामेव प्राधान्येन काव्यकारणमुद्घोपयति । **"श्लाध्य : स एव गुणवान्"**, इत्यत्र कविः गुणवान् भवेदित्युक्त्वा, स एव कविगुणः श्लाध्यः यःअमृतवर्षणसमर्थस्स्यात् इत्याह । कः अयं कविगुणः अस्ति केन वा गुणेन कविः गुणवान् भवतीति प्रश्ने कह्लणः उत्तरमदात्-प्रतिभा एव स गुणो विद्यते । यदि कविः प्रतिभा-गुणेन सर्वविधान् संवेद्यान् भावान् पश्येत्, तर्हि अधिगतदिव्यदृष्टिः सः सर्वं वेत्ति । प्रतिभावता कविना सेविता वाणी एव तरङ्गिणी मधुमती च जायते । तस्यैव च प्रतिभायुक्तस्य कवेः सरस्वती भूतार्थकथने स्थेयसी जायते । प्रतिभाशालिनः कवेरेव कृतिः सचेतसां चेतस्सु प्रीतिं जनयति । स च सन्दर्भः सम्यक् हृदयङ्गमो जायते । इत्थं प्रतिभैव काव्यकारणे प्रधानं नाम ।[36]

मम्मटस्य निपुणतायाः राजशेखरस्य व्युत्पत्ते र्वापि काव्यहेतुत्वेन कविः संकेतं ददाति । मम्मटः निपुणताया व्याख्यायामलिखत् यत्-'**लोकस्य स्थावरजंगामत्मकस्य लोकवृत्तस्य, शास्त्राणां, छन्दोव्याकरणः………आदि-लक्षणग्रन्थानां, काव्यानाञ्च** आदिग्रहणात् इतिहासादीनाञ्च विमर्शात् व्युत्पत्तिः ।[37] कह्लणेन राजततरंगिण्या आरम्भात् पूर्वं सम्यक् व्युत्पतिरधिगता, प्रभूतास्तेन इतिहास-ग्रन्था दृष्टाः । बहूनि शास्त्राणि प्रशस्तिपट्टानि च गम्भीरमधीतानि **'प्रशस्तिपट्टैश्च शास्त्रैश्च····।**[38]'

रामायण-महाभारत-विक्रमांकदेवचरित-हर्षचरितप्रभृतीनामसकृदुल्लेखात् तेषां सूक्ष्माध्ययनमनुमीयते । विविधकलानामुल्लेखेन, साहित्यशास्त्रप्रतिपादकेन काव्यगुणो-

---

(35) शक्तिर्निपुणता-लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इतिहेतुस्तदुद्‌भवे ॥

(36) 1–7, 5, 37, 7, 6, 22 । (37) काव्यप्रकाशः 1–3 वृत्तिः । (38) 1–9, 14, 15 ।

ल्लेखेन च स्य कला-कोष-साहित्यशास्त्रादि-विषयाणामध्ययनं सुस्पष्टम् । अतः अप्रत्यक्षेण व्युत्पत्तिः प्रदर्शिता, 'संक्रान्तप्राक्तनानन्तव्यवहारः'पदेन लोकवृत्तमिंगितं करोति कल्हणः काव्यहेतुत्वेन । किंचासकृत् गजतुरगादीनामुल्लेखेन तस्य तद्विषयक-व्युत्पत्तिरवगम्यते । समाधेरपि संकेतः वर्तत एवाप्रत्यक्षरूपे-'**केनाप्यनवधानेन कविकर्मणि सत्यपि, लेशोऽपि नास्ति निर्दोषः**'-अत्र कविराह असावधानतया लेशमात्रमपि न निर्दोषो भवति कवित्वे, अतः सदा अवहितेन कविना भाव्यं, सावधानता च समाधिना चित्तस्यैकाग्रतया वा आगच्छति नान्यथा । अतः समाधिरप्युल्लिखिता कविना । अभ्यासं विना तु नैव कश्चित् किमपि कुर्तुमर्हतीति । अभ्यासस्तु स्वत एवानुमीयते । इत्थं कल्हणकाले तन्मते चापि काव्यस्य प्रधानं हेतुः प्रतिभैवासीत् किन्तु व्युत्पत्तिः समाधिरभ्यासश्चापि आवश्यको वभूव ।

**काव्यात्मा**—को नाम काव्यात्मास्तीति विविधा विप्रतिपत्तयो वर्तन्ते विदुषाम् । अलङ्कारवादिनो भामहप्रभृतयः आचार्या अलंकारमेव काव्यतत्त्वमंगीकृत्य रसमपि रसवत् प्रेयोप्रभृतिष्वन्तर्भूतं कुर्वते । आनन्दवर्धनः ध्वनिं काव्यात्मानमभणत् । '**काव्यस्यात्माध्वनिः**[39] तत्र चापि रसध्वनेः सर्वाधिकमहत्त्वं स्वीचकार, वामनः रीतिं काव्यात्मत्वेनाह-**रीतिरात्मा काव्यस्य'**,[40] क्षेमेन्द्रः औचित्यं काव्यजीवितं न्यगदत् '**औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्**,[41] कुन्तकमते वक्रोक्तिः काव्यात्मास्ति '**वक्रोक्तिः काव्यजीवितम्** ।[42] रसवादिनो भरतमम्मट-विश्वनाथ-जगन्नाथप्रभृतय आचार्या रसं काव्यात्मत्वेन मन्वते । अग्निपुराणकारो ब्रवीति'**वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्**'[43] भरतमते रसं विना कस्मिंश्चिदर्थे प्रवृत्तिर्नहि जायते' **न हि रसादृते कश्चिदर्थः प्रवर्तते**'[44] स हि एकं रससूत्रमपि निर्ममे-**विभावानुभावसहचारिसंयोगाद्रसनिष्पत्तिः** विश्वनाथस्तु रससंवलितवाक्यायैव काव्यसंज्ञां दत्त्वा तन्महत्त्वं प्रकटीचकार । '**वाक्यं रसात्मकं काव्यम्**', **रसापकर्षका दोषाः** इति दोष-लक्षणं '**रसस्यांगित्वमाप्तस्य धर्माःशौर्यादयो यथा गुणाः**' इति गुणस्वरूपं च प्रतिपाद्य,किंच रीतिप्रसंगे **पदसंघटनारीतिरङ्गसंस्थाविशेषवत् उपकर्त्री-रसादीनाम्**'....इतिरीतिरूपं विधाय रसस्यैव पुष्टिमकार्षीत् ।[46] आचार्यवरो मम्मटः अपि **प्रल्हादैकमयीं नवरसरुचिरां**', '**सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम्**, इत्यादि-पदैः, किंच **मुख्यार्थहतिर्दोषः रसश्चमुख्यः**, इति दोषस्वरूपं, **ये रसस्याङ्गिनो धर्माः**, इति गुणलक्षणञ्च प्रतिपाद्य **अनलंकृती पुनः क्वापि**, इत्यस्य व्याख्यायां रसानिवार्यत्वं,

---

(39) ध्वन्यालोकः । (40) वामनस्य काव्यालंकारः । (41) औचित्यविचारचर्चा । (42) वक्रोक्तिजीवितम् । (43) अग्निपुराणम् । (44) नाट्यशास्त्रम् । (45) तदेव । (46) साहित्यदर्पणम्, 7–1, 8–1, 9–1 ।

"**अलंकारविरहे अपि न काव्यत्वहानिरिति**" स्पष्टमभिधाय, विस्तृतं रससूत्र व्याख्याय, रस एव काव्यात्मेति संकेतं ददौ ।[47]

कवि-शिरोमणिः कल्हण अपि रसवादिभिरेवाचार्यैः सह स्वसम्मतिं प्रदर्शयामास । रजतरंगिण्यां बहूनि तादृशानि पदानि विद्यन्ते यत्र रसरूपस्यात्मनः संकेतः स्पष्टं प्रतिभाति । 'सुधास्यन्दास्कन्दी,इति पदमेव प्रथमतो विचारार्हो नाम । 'सुधास्यन्दः' पदं रसामृतप्रवाहं संकेतयति, रसस्यैव पीयूषवत् प्रतिपाद्यत्वात्, तथा च कुन्तकः अपि वक्रोक्तिजीवते -

चतुर्वर्गफलास्वादमप्यतिक्रम्य च तद्विदाम् ।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते ।। प्रथमोन्मेषः–5

अतः स्पष्टं यत् रस एव काव्यामृतं तत एव च कविः चमत्कारं जनयतीति,सुधा स्यान्दास्कन्दी पदं रसामृतास्वादमेव इंगितयतीति न संशयावकाशः । अथ "**रम्यनिर्माणशालिनःपदं**"विचारपथमायाति । अत्र हि रम्यपदस्य स एवार्थो यः पंडितराजगन्नाथस्य काव्य-लक्षणे रमणीय-पदस्य । रमणीय पदं दृष्टमेव प्राक् यद्धि रसमेव द्योतयति । ततश्च "**न पश्येत् सर्वसंवेद्यान् भावान् प्रतिभया यदि**" इति पद्यार्धो दृश्यते, अत्र खलु कविः रसनिष्पत्ति-कारकाणानामेव विभावानुभाव-सहचारिभवानां संकेतं ददाति यतः रसानुभूतिः "**सचेतसामनुभवोऽत्रप्रमाणं** इति वाक्यात् सहृदयैरेव क्रियते । दर्पणकारो ब्रूते-"**लोकोत्तर-चमत्कारप्राणः कैश्चित्प्रमातृभिः स्वाकारावदभिन्नत्वेनेवायमास्वाद्यते रसः** ।।3-3।। इति वाक्याच्च प्रमातारः सचेतसो वा न सामान्या व्याकरणादिज्ञातारः किन्तु प्रतिभाशालिन एवेति प्रतिभा-पदमपि रसात्मत्वं प्रतिपादयति । एतदनन्तरं "**वैचित्र्येऽप्यप्रपञ्चिते·······तदत्र किञ्चिदस्त्येव वस्तु यत्प्रीतये सताम्**"[49] इति श्लोकांशो पुरतः आयाति । इदन्नु महत्त्वपूर्णपद्यमस्ति । किमिदं वैचित्र्यं नामेति प्रथमं विचारणीयम् काव्यप्रकाशपंचमोल्लासस्येमाः पक्तयः अत्र साहाय्यमाचरन्ति —

"**तत्र वाच्यतासहमविचित्रं विचित्रञ्चेति । अविचित्रं वस्तुमात्रं विचित्रन्त्वलंकाररूपम्**" नवमोल्लासे च-**किंच वैचित्र्यमलंकार इति य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रता इति सैवालंकारभूमिः** ।[50]

इदं साधु स्फुटं यत् वैचित्र्यं पदमलङ्कारं बोधयति । अप्रपंचिते पदं प्रयुज्य कविः वक्तुकामः यत् अलंकाराप्रयोगे अपि किञ्चिदन्यत् वस्तु भवत्येव यत्सतां चेतस्सु प्रीतिं जनयति । तदद्भुतं वस्तु रसादृते न किंचिदस्तीति सम्यक् प्रतिपादयितुं शक्यते ।

---

(47) काव्यप्रकाशः 1–1, 1–2, वृत्तिः, 7–49, 8–66 चतुर्थः समुल्लासः–सूत्र 10 ।

(48) 1–3 । (49) 1–4, 5, 6 । (50) काव्य-प्रकाशः 7–47 पृ० 216 एवं पृ० 432 ।

प्रीतिशब्दः आनन्दपर्यायः-आनन्दश्चैव रसरूप अस्तीति ज्ञायते-"**रसौ वै सः रसं ह्येवायं लब्ध्वा आनन्दीभवतीति** उपनिषद्वाक्यात्। "रस एव प्रतीयमानो भवति–"**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनां, यत् तत् शरीरावयवातिरिक्तं विभाति लावण्यमिवांगनासु**[51] इति ध्वन्यालोक-वाक्यात्। अपि च रस एव काव्यात्मा सिद्ध्यति। ततः परं "**मूर्धाभिषेकः शान्तस्य रसस्यात्र विचार्यतामिति**"[52] श्लोकार्धः अस्ति येनेदं सम्यगवगम्यते यत् कल्हणः शान्तोऽपि नवमो रसः "इति मम्मटवाक्यात् सहमतो ननु। अथापि चेत् रसस्य काव्यात्मत्वे संशयः अवशिष्येत तर्हि "**तदमन्दर-सस्यन्दसुन्दरेयं निपीयताम्**"। इति पदेन स निराक्रियते। कृतिः रसस्यन्दनेनैव सुन्दरा भवतीति स्पष्टमुद्घोष्य कविः रस एव काव्यात्मास्तीति स्पष्टं संकेतितवान्। अन्ततश्च "तरंगिणी मधुमती वाणी च कविसेविता" इति पद्यार्धमायाति। कविवाणी तदैव च मधुमती भवितुमर्हति यदा रससिक्ता स्यात् नो चेत् "**स्वच्छन्दोच्छलदच्छकुच्छकुहर**" इत्यादि, अलंकृतं काव्यमपि माधुर्यं जनयेत् न च जनयति रसाभावात्। यदि मधुपदेन केवलं माधुर्यगुणग्रहणमपि क्रियेत तदापि ये **रसस्याङ्गिनो धर्माः**" इति गुणविधायक-वाक्याभिधानात् रसस्यैव सर्वथा प्राधान्यं सिद्ध्येत। इदमधुना स्फुटं यत् काव्यकलाया आत्मा रस एव उवास।

साम्प्रतं कैर्गुणैः समलंकृता काव्यकला सहृदयहृदये अमन्दमानन्दं संचारयतीतित्यत्र विचारप्रसारो विधेयः। कल्हणः अत्रावोचत् "स एव कवेर्गुणः सर्वैः स्तूयते यः सुधावर्षी स्यात्, यद्वा सततं सतां चेतस्सु प्रीतिमुत्पादयेत्, रम्यं सचमत्कारं वा काव्यमेव श्लाघ्यं भवति चमत्कारो रम्यता वा रसादृते नैवायाति "**रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते**" इति वचनात्। स चमत्कारस्तदैव जायते यदा कविः प्रतिभया सर्वविध-भावान् विलोक्य दिव्यदृष्टिं धत्ते। सर्वदैव रससिक्तेन ननु काव्येन भाव्यम्। न क्वापि रसभङ्गो भवेत् काव्ये, अतः प्रवाहः अप्यनिवार्य एव काव्यवस्तुनि। तरङ्गिणी वाणी एव माधुर्यमावहति। अन्यच्च काव्यकलायाः कृते एकंवाक्यमन्यत् कविरलिखत् "**भैषज्यभूतसंवादिकथा**" इति-अर्थात् कथा सैव सफला या सहृदयानां चेतस्सु विद्यमानशोकस्योन्मूलनाय भैषज्यमाचरेत्। अतः कवेः स एवाभिप्रायो यो ननु भरतस्यास्यश्लोकस्यास्ते—

दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।
विश्रान्ति-जननं लोके नाट्मेतद् भविष्यति॥[54]

इत्थञ्च कृतिसाफल्यं दुःखापनयने एवास्ते इति स्मारं स्मारमेव कविः भैषज्यभूत-संवादिकथामनिवार्यां मनुते" श्रीहर्षस्य काव्यमपि विदुषामौषधमभिहितम्। "**नैषधं**

(51) ध्वन्यालोके प्रथमोद्योते। (52) 1–23। 2–काव्य प्रकाशः चतुर्थोल्लासः।
(53) 1–24, 37, 36, 5, 24, 37। (54) नाट्यशास्त्र 1–114।

**विद्वदौषधम्**"। काव्ये केवलं रस एव न भवेत् अपितु ध्वनिरपि भवेदेव, तेन च समं वैचित्र्यं (अलंकार-सौन्दर्यम्) स्यात्। कविना यथा स्थानमलंकारा अपि प्रयोज्याः किन्तु ते अनायासेनैवागच्छन्तु येनाधिकचमत्कारमेव ते जनयन्तु।[55] एतादृशी च रसालंकारध्वनिपूर्णा कृतिः लोकोत्तराल्हादं जनयति। काव्ये पूर्वेषां सुचरितं व्यवहारः संस्कृतिः सभ्यता चापि संक्रान्तो भवेत् "**संक्रान्त-प्राक्तनानन्तव्यवहारः**[56] तादृश एव सन्दर्भो हृदयंगमो जायते। काव्ये माधुर्यप्रभृतिभिर्गुणैरपि भाव्यम्।

काव्यगुणैः सह कविगुणानप्याह कल्हणः। तन्मते गुणवान् कविरेव प्रशास्तो विद्यते[57] तस्य च प्रधानं गुणो वर्तते प्रतिभा, यया हि दिव्यदृष्टिं स प्राप्नोति, न च किमपि तदविदितं तिष्ठति।[57] कविः काव्यसंसारस्य प्रजापतिर्मन्यते,[59] तद्वत् सः अपि अप्रत्यक्षं, प्रत्यक्षम्, असंभवमपि संभवं, अकल्पनीयमपि कल्पनीयं विधातुं शक्तः।[60] अत एव तेन सर्वदैव रागद्वेष-विवर्जितेन भाव्यम्। तदैव च तस्य सरस्वती स्थेयसी जायते।[61] रागद्वेषयुक्तः कविः न ननु न्यायमाचरितुमर्हति। भूतार्थवर्णने च तथाविधः न श्लाध्यो भवति।[62] केवलं वैचित्र्यप्रपञ्चे, अलंकारप्रकाशने एव वा स न रमेत किन्तु रसध्वन्यादिभिः प्रीत्युत्पादनमपि तेन कार्यम्। वाच्यार्थमेव प्रयुज्य स वैदुष्यमात्रप्रतर्शनपर एव न भवेत्,[63] अन्यथा तत्काव्ये दोष-बाहुल्यमुत्पद्यते। न च लेशः अपि तत्र निर्दोषो भवति[64]। एतदुक्त्वा च कल्हणः मम्मटस्य अदोषौ पदं समसंकेतयत्। कविकर्मणि दोषस्तदैवोद्भवति यदा कविः काव्यगुणस्मरणे नावहितः स्यात्। अतः सर्वथा अवहितचेतसा कविना भाव्यम्।[65]

काव्यकर्मणः प्राक् विशदं प्रामाणिकञ्चाध्ययनं कविना विधेयम्। कल्हणः अपि सर्वविषयाणां सूक्ष्माध्यनञ्चकार।[66]

आश्रयदातॄणामन्येषां वा जनानां कविं प्रति किं कर्तव्यमस्तीति कल्हः अलेखीत् यतः कवय एव राज्ञा कीर्तिकायस्य कर्तारः सन्ति, काव्येनैव लोकः पूर्वेषा चरितं सम्यगवगच्छति। ॰कविकृतिं विना जगदन्धमास्ते।[68] जगदितिहासः, लोकव्यवहारः संस्कृतिः सभ्यता च काव्येनैव ज्ञायते। अत एव कवयः तत्कृतयश्च सर्वेः वन्दनीया ननु विद्यन्ते।[69] विल्हणः अपि नरेन्द्रान् निवारयति कोपात् कवीन्द्रेभ्यः। "न कोपनीयाः कवयः क्षितीन्द्रैः॥[70]

---

(55) 1–6, 24। (56) 1–22।
(57) 1–7। (58) 1–5। (59) 1–4, 47। (60) 1–4। (61) 1–7। (62) तदेव। (63) 1–12। (64) 1–13। (65) 1–13 (66) 1–9 से 19 पर्यन्तम्। (67) 1–46। (68) 1–47। (69) 1–46। (70) विक्रमाङ्कदेवचरितं 1–27।

# नाट्य-कला

"**काव्येषु नाटकं रम्यं, नाटकान्तं कवित्वम्**" इत्यादिवाक्यानि नाट्यकलामहत्त्वं प्रतिपादयन्ति । राजतरंगिण्यां चित्रिते भारते नाट्यकला चरमोत्कर्षं प्रापेति अनेकेषां नाटकानां, नाटकसिद्धान्तानाञ्चोल्लेखेन दृष्टिगोचरो जायते ।

राजतरङ्गिण्यां चित्रितः समाजः नाटकविलोकने अधिकां रुचिं दधौ । समये-समये नाटकानामभिनयो बभूव । इदं खलु नाटकं दशविधस्य रूपकस्य प्रधानतमो भेदो वरीवर्ति । "**अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते रूपकं तत्समारोपात्**" इति दशरूपक-वाक्यनुसारम् । किन्तु नाटकस्य गुणबाहुल्यं विलोक्य रूपकस्य व्यवहारः नाटकपदेन विधीयते । कल्हणः अपि क्वापि रूपकप्रयोगं न चकार । नाट्शब्दस्य[1] नाटकशब्दस्य वापि प्रयोगमकार्षीत् । नाटकं खलु तस्मिन् समये दर्शनीयमभूत् "नाट्यं सर्वजनप्रेक्ष्यं", विविधोत्सवेषु तत्प्रदर्शनमजायत । एतादृशेष्वसरेषु नटाः एकत्रीभूय प्रेक्षिलोकस्य मनोरंजनं चक्रुः ।

क्रमात् प्रववृते सोऽथ नट-चारण-संकुलः ।
प्रेक्षिलोकसमाकीर्णस्तत्र यात्रामहोत्सवः ।। 1–222

नाट्कलायाः मर्मज्ञस्य भरतस्य तत्प्रणीतनाट्यशास्त्रस्य कविरुल्लेखमकार्षीत् । भरतशास्त्रानुसारं नाट्य-संगीतनृत्तप्रभृतीनां शिक्षणस्यापि प्रचारः अभवत् । राजा जयापीडस्ता विद्या जज्ञौ ।[2] तदिदमनुमीयते यन्नाट्यकलां प्रति महती रुचिरासीत् भारतीय-समाजे । कल्हणः केषांचित् नाट्यकलाविदां कविप्रवराणां तेषां नाटकानाञ्चापि वर्णनं व्यधात् । द्वितीयतरङ्गे चन्दको नाम कविरुल्लिखितः यो हि सर्वजन-प्रेक्ष्यं नाटकमेकं निर्ममे । अस्य नाटकस्यानेकशः प्रदर्शनमभूदित्यनुमीयते । तृतीय-तरंगे महाकविः भवभूतिः ससम्मानमुल्लिखितः । भवभूतेः महावीरचरितम्, मालती-माधवम्, उत्तररामचरितञ्चेति नाटकत्रयं सुविख्यातं नाम । राजतरंगिण्या भारते अपि तेषां सम्मानः प्रचारश्चाभूत् । कालिदास-भासप्रभृतीनां नाटकान्यपि प्रचलिता-न्यभूवन् । एतेन नाट्यकलायाश्चरमोत्कर्षः द्योत्यते । नाटकस्य साफल्यं तदैवामन्यत यदा तत् विद्वद्भिः प्रशंसां प्राप ।[3] नाटकस्य महत्ता तत्प्रयोगे एवातिष्ठत् । सत्वादि-युक्ततया तत्कालीनसमाजेन सह नाटकस्य घनिष्ट-सम्बन्धः अभूत् ।

**नाट्यकलायाः विकासः**—नाटकस्य नाट्यस्य वा प्रायेण सर्वेषामप्यङ्गानां, अनेक-पारिभाषिकशब्दानाञ्च प्रचलनं तदासीत् ।

**रंगः**—सम्पूर्णनाट्यगृहग्रहणाय कविः रंग-शब्दस्य प्रयोगं करोति । रंगस्योल्ले-खेनैव रंगमंच-अभिनेता-दर्शक-गणेति त्रयाणां संग्रहो जायते ।

---

(1) 2–16 (2) 4–422

(3) 2–16, 4–144 ।

**नाट्यनंडपः**—नाट्यमंडपेन तत्स्थानं गृह्यते, यत्र नाटकमभिनीयते स्म। नाट्यमंडप एव भरतस्य नाट्यशास्त्रे 'प्रेक्षागृह' इत्यपि निगदितः।

**प्रेक्षिलोकः**—सर्वजनप्रेक्ष्यस्य नाटकस्य दर्शकः प्रेक्षिलोकः प्रेक्षको वा न्यगद्यत।[4]

**नेपथ्यम्**—इदं तत्स्थानमभूत्, यत्र पात्राणि शृंगारं विधाय अभिनयं कर्तुं प्रस्तूयन्ते स्म। अद्यत्वे तदेव 'ग्रीनरूम' इति निगद्यते।

**अभिनयः**—नाटकस्य मूलपत्राणां, भावानां, अङ्गविक्षेपाणां, अवस्थानाञ्चानुकृतिरेव अभिनयो निगद्यते, अवस्थानुकृतिर्नाट्यम् इति दशरूपकवाक्यात्। कह्लणः अभिनयस्योल्लेखं 'नाट्यम्' इति मूलशब्देनैव चकार। स चासौ अभिनयः आंगिक-वाचिक-सात्विकभेदैः त्रिविधः प्रोक्तः। **विडम्बना**-पदेनापि कविः अभिनयोल्लेखं करोति।[5]

**अभिनेता**—अभिनयस्य कर्ता एव अभिनेता कथ्यते, स च नाटकेषु शैलूषः नटश्चाभिहितः, कविः, उभावपि शब्दौ प्रयुज्य तदुल्लेखमकार्षीत्। "**शैलूषस्येव राज्यरंगेऽस्मिन्**" '**नटस्येव विडम्बनाम्**'। नटते अभिनयं करोतीति नटः इति तत्व्युत्पत्तिः। '**छन्दानुवृत्या स प्राप नटस्येव विडम्बनाम्**।" इति पद्यार्धे कविः नटस्य वेषपरिवर्तनं सूचयति। वेषपरिवर्तनं विधाय नटित्वा च नटः जनानुरंजनमाकर्षीत्।[6]

**जवनिका**—अयं शब्दः त्रिषु स्थलेषु कविः प्रायुंक्त। भाषायां 'पर्दा' इति प्रसिद्धा एव जवनिका-पदेन नाटकेषु प्रयुज्यते। जवनिकायाः पतनमेव नाटकेषु पटाक्षेप इत्यस्ति।[7]

**संगीतम्**—संगीतमपि नाट्यकलायाः प्रधानमङ्गमासीत् अस्य च विस्तारेणोल्लेखः संगीत-कलाप्रसंगे विद्यास्यते।

**हास्यम्**—नाटकस्य प्रधानं लक्ष्यं जनानामनुरञ्जमासीत्, अत एव नाटकेषु संगीतेन समं हास्यमपि प्रयुज्यते स्म, तदर्थमेव च नाटकेषु विदूषक-कल्पना क्रियते। कविः हास्योल्लेखमप्रत्यक्षञ्चकार।

**नर्म**—हास्योत्पादनाय कैशिकीवृत्तिः प्रयुज्यते नाटकेषु, तत्रापि च नर्मकथाः प्रायेण प्रायुज्यन्त। "**वैदग्ध्यक्रीडितं नर्म प्रियोपच्छन्दनात्मकम्। हास्येनैव स**

(4) 7–1606, 8–346, 2855, 7–707, 8–858, 1–122, 7–1606, 2–156।

(5) 2–16, 7–707, 858, 5–208।

(6) 8–346, 1–122, 7–1413, 1731, 8–2825, 2–156, 5–208, 3–218।

(7) 7–853, 1731, 8–2883।

**श्रृंगारमयेन विहितं त्रिधा।"** इति सभेदं तल्लक्षणं प्रतिपादितं दशरूपके।[8] कल्हणः स्थानद्वये नर्मशब्दप्रयोगं विधाय तन्महत्त्वं सूचयामास। इत्थञ्च स्फुटः ननु भारते नाट्कलायाः महान् प्रचारः, उन्नतिश्चेति।

## संगीत-कला

ललितकलासु संगीतस्य महत्महत्त्वं पुराकालादस्ति। कविः कल्हणः अपि नाट्यकलावत् संगीतकलाया गरिमाणमनुभूय, तत्प्रचारस्यासकृत् संकेतान् ददाति। भारतीय-विचक्षणानां मते भाषा संगीतञ्चेति एकस्या एव विद्याया द्वे अङ्गे खलु। संगीतव्याकरणयोः तत्वसूत्रं माहेश्वरसूत्राण्येव वर्तन्ते। व्याकरणे अ-इ-उ-ऋ-लृ इति पंच शुद्धस्वराः सन्ति। ए-ओ-ऐ-औ चेति मिश्रितस्वरा निगदिताः। प्रथमस्य स्वर-त्रयस्य अ-इ-उ इत्यस्य दीर्घरूपाः आ-ई-ऊ इति विद्यन्ते। इत्थञ्च द्वादश स्वरा भवन्ति। संगीतस्य सप्तस्वरेष्वपि मध्यमगान्धार-ऋशभ-षड्ज-धैवताख्याः पंच प्रधान-स्वराः, पंचमनिषादौ गौणस्वरौ, च वर्तन्ते। केचित्तु धैवतं निषादञ्च गौणं मन्यन्ते अवशिष्टाश्च पंच प्रधानास्तेषां मते। काकली-अन्तरस्वराख्यौ द्वौ मिश्रितस्वरौ स्तः इत्थञ्च संगीतशास्त्रेपि स्वरा द्वादश एव। कल्हणः स्वाराणामेतेषां प्रत्यक्षेणा-प्रत्यक्षेण च संकेतं चकार। नाट्य-प्रसंगे स संगीतमप्युलिलेख। वस्तुतः अपूर्णं खलु नाट्यं भवति संगींतं विना। त्रिविधं च तत् प्रोक्तं गीत-वाद्य-नृत्य-भेदेन।

**गीतम्**—साम्प्रतमिव पुरापि गीतस्य शास्त्रीय-गीतं साधारणगीतञ्चेति द्वौ भेदौ आस्ताम्। लय-ताल-स्वर-उपगान-मूर्छना-प्रभृतीन् पारिभाषिकशब्दान् वीक्ष्य अनुमीयते यत् रागबद्धं 'शास्त्रीयगीतम्' उत्सवादिषु गीयमानं च लोकगीतम् इति द्विविधं-गीतमभवत्। कल्हणः नैकस्थलेषु गीतशब्दस्य प्रयोगमकार्षीत्।[9] **"क्षणाच्च ते समापद्य गीत-नृत्तैः"** कविना संगीतशब्दः अपि प्रयुक्तः, परन्तु गीते संगीते च नासीत्, महदन्तरम्। तन्मते गीते तु केवलं कण्ठगीतं भवति संगीते च वाद्यादिप्रयोगः अप्यनुमीयते। कल्हणः अनेकेषां गायकानामप्युल्लेखमकरोत्। राजा हर्षः स्वयं संगीतकलानिपुणः आसीत्, स्वपितरञ्च स गीतैः रंजयन् पारितोषिकं प्राप। तन्निर्मितगीतानि गायतः गायकानपि वयं पश्यामः राजतरंगिण्याम्। कल्हणस्य पितृव्यः चम्पकावरजः कनकः अपि महान् गायकः अभवत्। हर्षनृपतिस्तस्य गुरुरासींत्, गीताभ्यासनिरतः सः पुरस्कारे कांचनदींन्नारान् लब्धवान् हर्षात्।[10]

---

(8) द्वितीय-प्रकाशः श्लोक 48।

(9) 4–267, 7–606 (उपगीतम्), 614, 717, 942, 1117।

(10) 7–617, 717 (बहिर्हर्षकृतं गीतं गायकानाञ्च गायतः), 1117, 1118।

कासाञ्चित् संगीतमंडलीनामपि वर्णनं वयं प्राप्नुमः । पंचमतरंगे एकस्याः संगीत-मंडल्याः गायन-नृत्यकार्यक्रमः वर्णितः । स्पष्टमनेन यत् भारतीयसमाजे तस्मिन् समये संगीतं प्रति महती रुचिरभवत् । अस्याः कलायाः च प्रचारः चरमोत्कर्षे आसीत् ।[11]

**संगीतस्य पारिभाषिकशब्दाः**

**नादः**—संगीतस्य परिभाषायां नादस्यार्थः ध्वनिर्वर्तते, द्विविधश्च सः, कोलाहलः संगीतोपयोगी चेति । नादपदेन द्वितीय एव गृह्यते । कल्हणः "**गीतध्वनिरजृम्भत**" पदेन नादस्योल्लेखमकार्षीत् ।

**स्वरः**—"**गायन्त्येवंविधैः स्वरैः**" इत्यत्र स्वरैः पदेन कल्हणः सर्वेषां गान्धार-षट्ज-प्रभृतीनां स्वराणां संकेतमकार्षीत्, नाम तु कविः केवलं पंचमस्वरस्यैव जग्राह । **पंचम-स्थान-चारिणः** ।[12]

**लास्यम्**—भावाश्रयं, तालल्याश्रयं वा नृत्यं संगीतशास्त्रे लास्यमभिधीयते, अस्योल्लेखः पंचमतरंगे कविना कृतः ।

**मूर्छना**—सप्तस्वराणां, क्रमशः आरोहावरोहः[13] मूर्छना कथ्यते । प्रत्येकस्मिन् सप्तके सप्तमूर्छना भवन्ति ।

**तालः**—गानसमये वाद्य-वादनसमये च उत्पन्न-स्वराणां गणना एव संगीत-शास्त्रे 'ताल' इति भणिता । कविः एकस्मिन् पद्ये इमं शब्दं प्रायुंक्त ।[14]

**लयः**—एकस्याः मात्रायाः द्वितीयां मात्रां ततः तृतीयां, तृतीयायाः चतुर्थीं मात्रां यावत्, कथने यः समानः समयः गृह्यते स एव संगीतशास्त्रे लय इत्यभिधीयते । स च त्रिविधः । प्रथमः लयः मन्दगतिर्भवति, द्वितीयस्य गतिः पूर्वस्मात् द्विगुणिता, तृतीयस्य च ततः अपि द्विगुणा भवति । पंचमतरंगे वर्णितस्य रंगाख्यस्य डोम्बस्य कन्याभिः प्रस्तुते गीतनृत्य-कार्यक्रमे कल्हणः लयस्य संकेतञ्चकार ।

वंशे रागविशेषस्य दत्ते स्थाने ततः शनैः ।5–363 ।।[15]

**तानम्**—तानशब्दस्यार्थः विस्तारो वर्तते । स्वराणां स समूह एव तानमुच्यते येन रागस्य विस्तारो विधीयते । स्वयं कविः तानस्येममेवार्थं जग्राह । पुरा हि वंशस्य वाद्यं तानरूपे प्रायुज्यत । रागेण सममेव कविः तानस्य संकेतं चकारः ।[16]

---

(11) 7–933, (गायकगणाः), 947 (सगन्धर्वेव गायनैः), 5–354, 375 ।
(12) 5–374, 363
(13) 5–422 ।
(14) 5–465 ।
(15) 5–358 से 75 ।
(16) 5–363 ।

**मायूरी-मार्जना**—मृदंगस्य विशेषप्रकारेण वादनाय मायूरी-मार्जना-शब्दयोः प्रयोगो जायते ।

**पादन्यासः**—नृत्यसमये क्रियमाणः विशेष-प्रकारकः चरणन्यास एव पादन्यासः निगद्यते ।[17]

**उपगानम्**—गीतगायनात् पूर्वं स्वरालापेन रागस्याह्वानं विधाय यत् रागरूपं, स्पष्टीक्रियते, तदेवोपगानं वर्तते । अस्मिन् तालस्यावश्यकता न भवति, किन्तु स्वर-ज्ञानमुत्तममपेक्ष्यते । कल्हणः उपांगगीतपदेन अस्यैवोपगानस्य संकेतं चकार ।[18]

**द्विपदिका**--एका विशेषप्रकारका मुद्रा अस्तीति मजूमदार-महोदयस्याभिमतं वरीवर्ति छन्दविशेषः अपि द्विपदिका इति निगदितः । कल्हणः विविध-मुद्राणां संकेतमकार्षीत् । वस्तुतः गीतसमये वाद्यस्थाने कदाचित् द्विपदिका प्रयुज्यते स्म अद्यापि च प्रयुज्यते ।[19]

**रागः**—रागशब्दस्य कविना नैक-स्थलेषु प्रयोगः विहितः भैरव-कैशिक-हिंडोल दीपक-सुरागमेघानां षट्रागाणां वर्णनं भरतो मुनिरकार्षीत् । कविः गीतप्रसंगे राग-पदं प्रयुज्य सकेतं कृतवान् ।[20]

**वाद्य-संगीतम्**—प्राचीनैः वाद्यविद्भिः वाद्यं चतुर्षु भागेषु विभाजितम् । तन्त्रीगतम्, आनद्धमवनद्धम्, सुषिरम्, (रन्ध्रयुक्तं), धनवाद्यं धातुनिर्मितं वा, तन्त्री-गतवाद्ये तारनिर्मितवाद्यानि आयान्ति । यथा वीणा-अवनद्ध-मुरज-पटह-पुष्करादीनां नामानि प्रसिद्धानि खलु । वेणु-प्रभृति–रन्ध्रयुक्तं वाद्यं सुषिरं निगद्यते । करताल-प्रभृतीनि धातुमयवाद्यानि धनवाद्यानि वर्तन्ते ।

**तन्त्रीगत-वाद्यम्**— तन्त्रीगतवाद्ययन्त्रस्य सामान्यं नाम वीणा विद्यते । संगीत-रत्नाकरे एकोन्त्रिशत् वीणानामुल्लेखो वर्तते । कल्हणः साधारणतः वीणाशब्दं प्रायुंक्त । वल्लकीतन्त्री-परिवादिनी नामान्यपि राजतरंगिण्यां समागतानि ।

---

(17) तदेव ।

(18) 5–382 ।

(19) 5–364, 66, 67, 71, 73 ।

(20) 5–363, 67 ।

**सुषिर-वाद्यम्**—एतेषु वाद्येषु शंख-शृंग-वेणूनां समस्तप्रकाराः परिगण्यन्ते। कल्हणेन सुषिरवाद्येषु वेणु-वंश-शंख-नूपुर-तूर्य-प्रभृतीनां नाम्ना वर्णनं कृतम्।[21] तूर्यानां शब्दस्य तुलना कविना मेघैः सह कृता (मेघशब्दैरिवात्रासत्), शंखः मांगलिकं वाद्यममन्यत। विवाहादिषु शुभावसरेषु रणे चास्य प्रयोगः व्यधीयत तूर्यवाद्यमपि मांगलिकमासीत्। युद्धे चापि तस्य प्रयोगः अभवत्।[22]

**अवनद्ध-वाद्यम्**—वाद्यानामस्मिन् प्रकारे चर्मबद्धानि वाद्यान्यायान्ति। कविः अस्य वर्गस्य पटह-ढक्का-तबला-इत्यादीनां वर्णनं चकार। राजाज्ञायाः घोषणा-समये पटहाः प्रयुज्यन्ते स्म। "**सर्वतोऽमारमर्यादापटाहानुदघोषयत्**"। "**प्रादात् मदनादित्यनाम्नो ढक्का व्यदीर्यत**" इति पंक्तयः पटह-ढक्का-वाद्यस्य प्रचलनं सूचयन्ति। अपि च भाषायां तबला इत्यस्य प्रचलनस्यापि संकेतः पद्ये अस्मिन् वर्तते। "**तामेवमुक्त्वा पर्यकं सांगुलीयेन पाणिना वादयन्निव....**4–440 संभवतः कुंम्भमुख-चर्मणा,'रबड़' इत्याख्येन पदार्थेन वा बद्ध्वा तद्वादनं व्यधायि। अद्यापीदं विलोक्यते। हुडुक्कावाद्यं "**हुडुक्कामुखचर्माभो दृश्यादृश्योऽभवद्रविः**।" इति पंक्त्या कविः सम-संकेतयत्। मुरज-पुष्कर-मृदंग-दुन्दुभिप्रभृतीनामपि संकेतमात्रं कविश्चकार। संगीते जलस्यापि विशेषमहत्त्वमासीत्। वितस्तायाः जलतरंगेषु कविः संगीतमश्रौषीत्। अद्य खलु जलतरंगवाद्यं प्रसिद्धमेव। संकेतस्तावदस्याप्रत्यक्षेण कविना प्रदत्तः।

**घनवाद्यम्**—किंकिणी नूपुरं वा, मन्दिरेषु घंटा-काहल-कांस्यतालप्रभृतीनि धातुनिर्मितानि वाद्यानि धनवाद्यन्येवाभूवन्।[1]

उपरिवर्णितानां गीतानां वाद्यानाञ्च ज्ञातारः अपि वर्णिताः सन्ति तादृशो ज्ञाता पुरुषः आतोद्यवित् इति न्यगद्यत। आतोद्यविदे कनकाय हर्षः पुरस्कारमपि प्रादात्।[24]

---

(21) वेणु-रणितोन्मिश्रैः, रन्ध्रमुखेन वंशः, यामतूर्यरवैरपि 2–167, 7–160, 5–363, 1–30 206, सुश्रुवे, नूपुरध्वनिः), 8–2563।

(22) 1–140, 3–5, 2–1।

(23) 3–5, 6–133, 4–440, 8–98, 1173, 1–206, 5–465।

(24) 7-1116, 1117।

# नृत्य-कला

प्राचीनकालादेव भारतवर्षे नृत्यस्य नर्तनस्य वा अभ्यासो बभूव । राजतरंगिण्यान्तु तस्य चरमोत्कर्षः दृष्टिपथमायाति । नृत्यकलायां नृत्यस्य त्रीन् भेदानाहुः शास्त्रकाराः । **नाट्यं नृत्यं**, नृत्तञ्चेति दशरूपककारमते, आंगिक-वाचिकाहार्यसात्विकाभिनयः विविधावस्थानामनुकृतिरेव **नाट्यमस्ति** । अवस्थापदेन, गति-वेषभूषा-आलापप्रलापादीनां सर्वासां दशानां वर्णनं वरीवर्ति । इदं खलु नाट्यं रसाश्रितं भवति, तत्र चतुर्विधः अभिनयः भवति । **नृत्यं** ननु भावाश्रयमस्ति । नृत् गात्र विक्षेपे धातोरयं शब्दो निर्मीयते । यदाशयश्चांगिकाभिनयस्य बाहुल्यमस्ति । **नृत्ते**–खलु अंगविक्षेपमात्रं प्राप्यते । तालाश्रयमभिनय-शून्यं च तत्भवति । लयानुसारं नृत्ते द्रुत-मध्य-मंदगतिश्च भवति । नृत्यं ननु **पदार्थाभिनयरूपः नृत्यमार्गः** अपि निगद्यते, नृत्तञ्च देशी इति उच्यते । नृत्यं तावत् लास्यं, नृत्तञ्च ताण्डवमपि कथ्यते । तथाहि दशरूपके प्रथमोद्योते 7–10 **"अवस्थानुकृतिर्नाट्यं, अन्यद्भावाश्रयं नृत्यं, नृत्तं तालयाश्रयम् । आद्यं पदार्थाभिनयः मार्गो देशी तथा परम् । मधुरोद्धतभेदेन तत् द्वयं द्विविधं पुनः लास्य-तांडवरूपेण नाटकाद्युपकारकम् ।।**

अयमत्र निष्कर्षः, नृत्ते भावा न भवन्ति, नृत्ये च ते विद्यन्ते । नृत्ते पुरुषत्वं, ओजः कठोरतास्ति, नृत्ये च भावः, सौकुमार्यं स्त्रीत्वञ्च लभ्यते । नाट्ये तु भावरसाभिनयानां समन्वयो भवति ।

राजतरङ्गिण्यां नृत्य-शब्दः पृथक् तु न लभ्यते । नृत्यन्ती-पदे तु स अस्ति । किन्तु पत्पर्यायः लास्यम् चतुर्थतरंगे विद्यते । **(लास्यं स द्रष्टुमविशत् कार्तिकेयनिकेतनम्)**, किंच नर्तनशब्दः अपि तत्र खलु प्रयुक्तः । चतुर्थतरङ्गे कल्हणः नृत्यगीतनिरतयोः द्वयोः कन्ययोः वर्णनं करोति । **"एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि ।** अत्र नृत्यन्ती-पदे नृत्यशब्दो विद्यते । परन्तु अग्रिमे 'पद्ये **क्षणाच्च ते समापय्य गीतनृत्ते मृगीदृशौ'** । इति पद्यार्धे नृत्यन्त्याः नृत्यमेव कविः नृत्तमाह । नृत्तशब्दप्रयोगः नैकवारं समागतः राजतरंगिण्याम् । इदमनुमीयते यत् तस्मिन् काले नृत्यनृत्तयोः भेदो नावगम्यत । कविरपि तत्र भेदं न पश्यति । एकतस्तु असौ युद्धभूमौ पतितानां कबन्धानां नर्तनं नृत्यं भणति, अपरत्र च भटानां परस्परं युद्धाय इतस्ततो गमनमपि ताण्डवनृत्तमभणत् । रंगाख्यस्य डोम्बगायकस्य नर्तनमपि कविः ताण्डवनृत्यं लिलेख । अन्यस्मिन् स्थले च हंसीनागलतयोः रंगकन्ययोः गीतयुक्तं त्रिविधभाव-भंगिमा-अभिनय-संवलितं नर्तनमपि नृत्यमेवोक्तम् ।[25]

नाट्यं ननु सर्वजनप्रेक्ष्यमभिहितम् । मंदिरेषु नृत्यसम्पादनाय कासाञ्चित् नर्तकीनामपि कविना उल्लेखः कृतः । बहवः खलु तन्नृत्यगीतप्रसंगाः प्रदर्शिताः । इत्थञ्च विविधनृत्यानां संगीतानाञ्च प्रसंगः संगीत-नृत्य कलायाः प्रचारं सूचयति । नृत्यं प्रांगणे नाट्यमंडपे वाभवत् ।[26]

(25) 4–420, 422, 466, 467, 436, 435, 1–151, 3–390, 8–1518, 5–363 से 381 ।

(26) 2–16, 1–151, 4–36, 7–1140 ।

# स्थापत्य-कला

कह्लणस्य कृतौ विद्यमानैः शतशः संकेतैः भारतस्य स्थापत्यकलायाः चरमोत्कर्षः दृष्टिगोचरो जायते। वयं हि असकृत् नगराणां, मन्दिराणां, विहार-चैत्य-स्तूपमठानां, अन्येषाञ्च नैकविधभवनानां निर्माणस्योल्लेखं पश्यामः। स्थापत्यस्य उल्लेखः कविना '**वास्तु**' शब्देन कृतः। कविः स्वकाव्यनिर्माणात् पूर्वं बहूनि प्रतिष्ठा-वास्तुशासनानि ददर्श। '**दृष्टैश्च पूर्वभूभर्तृप्रतिष्ठावास्तुशासनैः**', नगर-मन्दिर-भवनादीनां निर्माणकर्ता शिल्पी कारुः, स्थपति र्वा न्यगद्यत।

**नगराणि**—कवेः वर्णनेषु नगरस्य स्थापत्यस्य सम्पूर्णं चित्रं चित्रितं खलु। नगरनिर्माणयोजना सुनियोजिाभूत्। समृद्धमेकं नगरं वर्णयन् कविर्लिलेख—

श्रद्धापणं राजपथैः नौयानोज्वलनिम्नगम्।
स्फीतपुष्पफलोद्यानं स्वर्गस्येवाभिधान्तरम्॥
वितस्तापुलिने तेन नगरं निरमीयत॥

अनेन पद्येन प्राचीनं नगररूपमेवं वर्णयितुं शक्यते। नगरे विस्तृता मार्गा अभवन्। मुख्यमार्गः राजपथ इत्यभिधीयत यश्च देशस्यान्यनगरैः सह तत् समायोजयत्। नगरे व्यस्ता ऋद्धियुक्ता च विपणिः अभूत्। उभयतश्च विपणि विशालभवनान्यभूवन्। कालिदास-शब्देषु येषां लाक्षणिकं नाम '**आपण-मार्ग**' इति अभवत्[1]। नगरे खलु विशालमुद्यानं शुशुभे, यत्र पुष्पवाटिका फलवाटिका चाभवत्। क्वचित् कुल्या क्वचित् निम्नगा चासीत्। मिहिरकुलस्य नगरे चन्द्रकुल्या, बकस्य लवणोत्सपुरे च बकवती कुल्या उल्लिखिता कविना। क्वचित्तत्र सरः अभूत्। सरांसि प्रायेण उद्यानेष्वेव शुशुभिरे। यत्तटे स्थिताः श्रान्ताः जनाः मंदसमीरैः गतक्लमा अभूवन्। प्रायेण नगरमध्ये भगवत्मन्दिरं व्यराजत। क्वचित् वाप्यपि अभूत् यत्र स्तम्भेषु लिंगानि प्रतिष्ठाप्यन्ते स्म।[2]

राजधान्यां, अधिष्ठाने वा समृद्धनगरे च अभ्रंकषाः सौधाः, उत्तुंगानि हर्म्याणि, वेश्मानि, अट्टालिकाः, धवला, परार्ध्यविभवाः प्रासादाश्चाभूवन्, नगरान्तिकं उपवनान्यासन् यत्र च कदाचित् नूतनस्य राज्ञः अभिषेकः बभूव। कृत्रिमाः क्रीडाशैलाः, क्रीडारामविहाराश्चापि अवर्तन्त, यत्र राजानः पौरा वा क्रीड़ां मनोरंजनञ्च चक्रुः[3] परितश्च नगरं प्राकारेण प्रावेष्ट्यत, सर्वतश्च प्राकारं परिखाः (खाताम्बुः) अभवन्। नगरमध्ये उपनगराणां संयोजनाय रथ्या अविद्यन्त विशालभवनेषु च वलभ्यो बभूवुः (**भवनवलभीः**)।

---

(1) 1–15, 363, 3–353, 1–201, 202, 367, 2–58, 162, 29, कुमारसंभवम् 8–55।
(2) 1–201, 318, 329, 203, 205, 175, 2–130।
(3) 6–99, 4–496, 1–298, 2–119, 4–70, 17, 19, 1–42, 301 316, 326, 366, 4–192, 2–117, 4–184, 7–607, 608।

**विहारा:**—स्थापत्यकलाया अद्भुतं रूपं बौद्धविहारेषु दृष्टिगोचरं जायते। इमे बौद्धविहाराः एव बोद्धभिक्षूणां निवासस्थानानि शिक्षाकेन्द्राणि चासन्। तक्षशिला हि पुरा सुप्रसिद्धं शिक्षाकेन्द्रमवर्तत। कल्हणेन शतशो विहाराणां वर्णनं कृतम्। वर्णितेषु विहारेषु केषाञ्चित् अवशेषा अद्यापि भारते विराजन्ते। कश्मीरयात्रायां केचिदवशेषा मया विलोकिता: आसन्। अत्र तावत् तेषां विहाराणां सारिणी प्रस्तूयते:—

| विहार-नाम | निर्माता | विशेषता | स्थानं | संकेत |
|---|---|---|---|---|
| नरेन्द्रभवनविहार: | सुरेन्द्र: | — | सोरकाख्यनगरे | 1–93 |
| सोरस-विहार: | ,, | — | ,, | 1–94 |
| जालोर-विहार: | जनक: | — | जालौराग्रहारे | 1–98 |
| धर्मारण्य-विहार: | अशोक: | चैत्ययुक्त: | वितस्तात्रपुरे | 1–103 |
| कृत्याश्रम-विहार: | जलौक: | कृत्यादेवीयुक्त: | कृत्याश्रमे | 1–148 |
| जुष्क-विहार: | जुष्क: | — | जुष्कपुरे | 1–169 |
| किन्नर-विहार: | किन्नर: | भिक्षुणा किन्नरप्रियापहरणम्, राज्ञा दहनं च | किन्नरग्रामे | 1–199 |
| विहार-सहस्राणि | — | — | ,, | 1–200 |
| अमृतभवन-विहार: | अमृतप्रभा | देश्यभिक्षुनिवासाय | अन्तवने | 3–9 टि० |
| यूकदेवी-विहार: | यूकदेवी | शिक्षा-केन्द्रं, निवासस्थानं च | वडवने | 3–12 |
| इन्द्रदेवीभवन-विहार: | इन्द्रदेवी | सचतु: शालस्तूप: | काष्ठील-समीपे | 3–13, 8 1169, 72। |

(4) 4–192, 2–29, 1–366।

| विहार-नाम | निर्माता | विशेषतया | स्थानं | संकेत |
|---|---|---|---|---|
| विहाराः | खादनादयः | सुसमृद्धाः | श्रनेकेषु | 3–14 |
| श्रीजयेन्द्र-विहारः | जयेन्द्रः | सबुद्धमूर्तिः ह्य्नसांग-शिक्षा | प्रवरपुरे | 3–355 टि० |
| स्कन्द-भवन-विहारः | स्कन्दगुप्तः | पर्वगुप्तेश्वर-प्रतिष्ठा | श्रीनगरसमीपे | 3–380, 6–137 |
| भिन्ना-विहारः | भिन्ना | बुद्धप्रतिमायुक्तः | — | 3–364 |
| रत्नावलीभवन-विहारः | गल्लूनः | — | — | 3–367 |
| प्रकाशिका-विहारः | प्रकाशदेवी | — | — | 4–79 |
| क्रीड़ाराम-विहारः | ललितादित्यः | मनोरंजनाय | — | 4–184 |
| बृहत्-विहारः | ,, | सस्तूपः | हुष्कपुरे | 4–188 |
| राजविहारः | ,, | सचतुः शालः सबुद्धप्रतिमः | परिहासपुरे | 4–200 |
| कय्यविहारः | ,, | सर्वज्ञमित्रभिक्षुवासः | श्रीनगरे | 4–210, 15 |
| चंकुण-विहारः | चंकुणः | सचैत्य-बुद्धमूर्तिः | परिहासपुरे | 4–262 |
| ईशान-विहारः | ईशानचन्द्रः | — | — | 4–216 |
| विहारः | जयापीडः | सबुद्धप्रतिमः | जयपुरे | 4–507 |
| दिद्दा-विहारः | दिद्दा | सचतुः शालः, निवासः | — | 6–303 |
| जयमती-विहारः | जयमती | समठः | — | 8–246 |
| सुल्ल-विहारः | उच्चलः | — | — | 8–248 |
| रत्नादेवी-विहारः | रत्नादेवी | — | — | 8–2402 |
| सुस्सल-विहारः | जयसिंहः | — | भलेरकप्रपास्थाने | 8–2410 |
| विजज-विहारः | धन्यः | — | — | 8–3343 |
| चिन्ता-विहारः | चिन्ता | — | वितस्तापुलिने | 8–3352 |

राजतरंगिण्यामुल्लिखितेषु सहस्रशः विहारेषु एते प्रमुखाः सन्ति । विहाराणां निर्माणे स्वर्णस्यापि अतिमात्रं प्रयोगः व्यधीयत । 1–142, अनेक-विहाराणामवशेषा मया कश्मीरयात्रायां दृष्टा आसन् ।

**चैत्यम्** —कोषेषु चैत्यं, आयतनं देवमन्दिरम् यज्ञस्थानं चाभिहितम् । अस्मिन् देवायतने मृत्तिकामयी मूर्तिः स्थाप्यये स्म । भरतस्तावत् मृदां देवकुलं चैत्यमाह । एतादृशं च मयापि नालन्दा-विश्वविद्यालयस्य अवषेषु दृष्टं, यत्र मृतिकानिर्मिता बुद्ध-मूर्तिरपि विराजते । एतानि चैत्यान्यपि बहुशः उल्लिखितानि ननु राजतरंगिण्याम् । वास्तुकलायाश्च रमणीयं चित्रं प्रस्फुटीकुर्वन्ति । तानि खलु प्रायेण विहारेषु एव निर्मीयन्ते स्म । अशोकनृपतिना धर्मारण्यविहारे गगनचुम्बि चैत्यं निर्मितमासीत् । तुरूष्कान्वयोद्भूतैः हुष्कजुष्ककनिष्कैः नृपतिभिः शुष्कलेत्रादिदेशेषु बहूनि चैत्यानि कृतानि । तृतीयतरंगे युधिष्ठिर-द्वितीयस्य मन्त्रिभिः निर्मितानि चैत्यानि वर्णितानि सन्ति । चतुर्थतरङ्गे ललितादित्यनिर्मितानां बृहच्चैत्यानामुल्लेखः कविना विहितः । क्वचित्तु तेषु निवासस्योल्लेखः अपि कविना कृतः[5] । यत्र समीपस्थ-विहारनिवासिनः स्नानादिविधिं सम्पाद्य पूजायै चैत्येषु आययुः । नालन्दाविहारस्य चैत्यदर्शने अपि मया तदेवानुभूतम् ।

**मठः**—कोषेषु मठन्ति वसन्ति छात्रादयः अत्र इति मठव्युत्पत्या, छात्रादि-निलयः मठः निगदितः । आदिपदेन परिव्राजक-क्षपणकादीनां ग्रहणं क्रियते । तस्मात् छात्र-परिव्राजकक्षपणक-यात्रिणां वासस्थलं एव मठः इति अवगम्यते ।[6] राजतरंगण्यां विद्यमानाः शतशः मठाः एतमर्थमेव प्रकटीकुर्वन्ति । मठा अप्येते वास्तुकलायाः दृष्टान्ता वर्तन्ते । वर्तमानसमये "सराय" धर्मशाला इति वा प्रसिद्धः पुराकालस्य मठः आसीत् । मठेषु पूजाकर्म अपि व्यधायि । केषाञ्चित् प्रधानमठानामप्युल्लेखः विभिन्नेषु तरंगेषु कविना कृतः ।

विस्तारभिया संकेतस्तेषां दीयते । शिलाभिः श्वेतप्रस्तरैः (संगमरमर) वा निर्मिताः, शिल्पिभिः विरचितास्ते मठाः विविधकलाकौशलपरिपूर्णा अभूवन् । भारतीयवास्तुकलायाश्च रमणीयं रूपं दधुः ।

राजतरंगिण्यां वर्णिता मठा अधस्तनाः सन्ति—

---

(5) श० क० द्रु० भाग 2 पृष्ठ 462, 1–103, 170, 3–380, 381, 4–200 204 ।

(6) श० क० द्रु० भाग 3 पृष्ठ 568 ।

| मठ-नाम | निर्माता | विशेषता | स्थानं | संकेत |
|---|---|---|---|---|
| मठाः | हुष्कजुष्ककनिष्काः | — | शुष्कलेत्रादिषु | 1–170 |
| ” | रावणः | सचतुःशालः, वटेश्वरलिङ्गयुक्तः | — | 1–195 |
| खेरीमठः | वकः | शतकपालेशयुक्तः, समातृचक्रः वकवलिस्थानम् | खेरी | 1–335 |
| मठाः | संधिमान् | — | येदा, भीमादेवी | 2–135 |
| मेघमठः | मेघवाहनः | — | — | 3–8 |
| मठः | रणारम्भा-स्वामिदेवी | पाशुपतनिवासः | प्रद्युम्न-शिखरे | 3–460 |
| ब्रह्ममठः | ब्रह्मा | — | — | 3–476 |
| मठः | जयदत्तः | प्राचेश्वरशिव-प्रतिष्ठा | जयपुरे | 4–512 |
| मठः | गुणादेवी | — | पद्मपुरे, विजयेश्वरे | 4–696 |
| शूरमठः | शूरः | शूरेश्वरस्थापना, तपस्विभोगाय | सुरेश्वरीक्षेत्रे, सुगन्धापुरे | 3–24, 38, 5–24 |
| नन्दामठः | नन्दा | छात्रावासः, मठाधिपतियुक्तः, मृत्युसमये यशस्करागमनं | — | 6–87, 88, 99, 104 |
| दिद्दामठः | दिद्दा | मध्य-लाट-गौडदेशीयानां निवासः | दिद्दापुरे | 6–300 |
| मठः | दिद्दा | देशिक-द्विज-निवासः | वितस्ता-सिन्धु-संगमे | 6–304, 305, 6–308 |
| तिलोत्तमा-मठः ] लोठिका-मठः ] | लोठिका | — | श्रीनगरे | 7–120, 141, 8–435 |
| मठद्वयं | श्रीलेखा | — | — | 7–142 |
| ग्रन्थमठः | उत्पलः | — | — | 7–149 |

| मठ-नाम | निर्माता | विशेषता | स्थानं | संकेत |
|---|---|---|---|---|
| मठः | आसमती | — | त्रिपुरेश्वरे | 7–151 |
| वल्गामठः | वल्गा | — | — | 6–308 |
| सुभटामठः | सुभटा (सूर्यमती) | — | वितस्तापुलिने | 7–180 |
| मठद्वयं | सूर्यमती | — | विजयेश्वर-अमरेश्वरसमीपे | 7–183 |
| मठः | हलधरः | स्वर्णालंकृतः | वितस्ता-सिन्धु-संगमे | 7–214 |
| भावन्मठः | — | — | — | 7–1678 |
| मठः | उच्चलः | प्रतिष्ठासमये स्वर्णादिदानं सुकृतसिद्धये | — | 8–242, 44, 8–246, 47 |
| नवमठः | जयमती | विहारे निर्मितः | — | 8–246, 47 |
| नागमठः | — | — | — | 8–673, 782 |
| मठः | जयसिंहः | — | — | 8–2401, 2408 |
| मठः | धन्यः | — | सुरेश्वरीक्षेत्रे | 8–2419 |
| मठः | उदयः | — | सुरेश्वरीक्षेत्रे | 8–2420, 2421 |
| मठः | शृंगारः | — | श्रीनगरे | 8–2422 |
| मठः | अलंकारः | — | — | 8–2423 |
| शृंगारमठः } भट्टारकः } | शृंगारभट्टः | — | — | 8–2436 |
| वैकुंठमठः | रत्नादेवी | सुकृत-प्राप्तिः | रत्नापुरे | 8–2433, 34 |
| मठः | भुट्टः | सविहारमठोदग्रवेश्मः | भुट्टपुरे | 8–2431 |

| मठ-नाम | निर्माता | विशेषता | स्थानं | संकेन |
|---|---|---|---|---|
| रत्नामठः | रत्नादेवी | अलंकृतः | — | 8–2442 |
| नैकमठाः | जयसिंहः | शिल्पकलायुक्तः | — | 8–2447 |
| मठः | उच्चलः | कोषयुक्तः | — | 8–3317 |
| मठः | जयसिंह | तपोधनभूषितः, रुद्रलोकातिशायी | — | 8–3350 |
| मठः | मंखकः | — | — | 8–3354 |
| मठद्वयं | सुमना | — | भूतेश्वरे, त्रिग्राम्यां च | 8–3356 |

शिलाभिः श्वेतप्रस्तरैः (संगमरमर) वा निर्मिताः, शिल्पिभिः विरचितास्ते मठाः विविधकलाकौशलपरिपूर्णा अभूवन्। भारतीय-वास्तुकलायाश्च रमणीयं रूपं दधुः।

**स्तूपाः**—विहारेषु, धर्मक्षेत्रेषु च निर्मिताः, स्तूपा अपि स्थापत्यकलायाः द्योतकाः सन्ति। अशोकमेघवाहन-ललितादित्य-प्रभृतीनां राज्यकाले, निर्मितानामनेकस्तूपानां कविरुल्लेखं चकार। ते स्तूपाः विविधकलाभिरलंकृता अभूवन्। एतादृशाः स्तूपाः मया नालन्दाविश्वविद्यालये दृष्टा ननु।[7]

**मन्दिराणि**—राजतरङ्गिण्यां वर्णितानि सहस्रशः मन्दिराणि अपि स्थापत्य-कलायाः हृदयावर्जकं चित्रं प्रस्तुवन्ति। तेषु अनेकेषां मया, धर्मप्रसंगे विस्तरेणोल्लेखः कृतः। मन्दिराणि खलु, समृद्धानि, रत्नस्वर्णरजतालंकृतानि, गगनचुम्बीनि, प्राकार-वेष्टितानि चाभूवत्।

---

(7) 1–102, 3–10, 13, 4–188, 121।

**सेतुः**—नदिषु निर्मिताः सेतवः (पुल-बांधवाच्याः) जलबन्धा वापि स्थापत्य-कलाया रूपं प्रदर्शयन्ति, कविः अनेकेषामश्ममयानां सेतूनामुल्लेखं चकार। तोयविप्लशान्तये, ते बन्धवाच्याः सेतवः निर्मीयन्ते स्म। केचित् सेतवः नदीनामुत्तरणाय विरचिता अभूवन्। कुशलाः शिल्पिनः प्रस्तरैस्तन्निर्माणं चक्रुः।[8]

**वापी-कूप-उद्यान-सरांसि**—कविः बहुषु स्थानेषु वापीकूप-उद्यानप्रभृतीनां वर्णनमकार्षीत्। प्रायेण नगरेषु ते निर्मीयन्ते स्म।[9]

**कुल्याः**—कुल्यानां निर्माणमपि बहुशः उल्लिखितम्, अनेककुल्याश्चापि कविना वर्णिताः।[10]

**गृहम्**—गृहनिर्माणकलायां महती उन्नतिः कृतासीत् भारतवासिभिः, अट्टालिकासौधगृह-कुटि-भवन-हर्म्य-वेश्म-प्रभृतीनां भिन्ननाम्नां गृहाणां रूपाणि वर्तन्ते कल्हणकृतौ। गृहाणां निर्माणे प्रस्तराणामिष्टिकानां च प्रयोगः प्राचुर्येणाभवत्। तेषां भित्तिषु शिल्पिभिः चित्रकला व्यधायि। सुधाधवलिताश्च ते व्यधीयन्त। गृहेषु शौचालय-स्नानागार-भोजनालय-शयनकोष्ठ-चतुःशाला-प्रभृतयः पृथक्-पृथक् विभागा बभूवुः तेषामाकारः रमणीय आकर्षकश्चाभूत्।[11]

**प्राकारः परिखा सोपानम्**—प्राकाराः खलु परितः नगरं निर्मीयन्ते स्म। ते हि प्रस्तरमया आसन् प्राकारात् बहिः नगररक्षायै परिखाः अभूवन्। यत्र सदा जलं प्रावहत्। भवनेषु सोपानान्यभूवन्।[12]

**दुर्गाः**—शतशो दुर्गाणां दुर्गपदेन कोट्टपदेन च कल्हणेनोल्लेखः कृतः। प्रस्तरैः निर्मिताः ते हि अतीवसुदृढ़ाः अभूवन्। युद्धसामग्री योद्धारश्च तत्रातिष्ठन्। प्रायेण दुर्गाः पर्वतेषु व्यधीयन्त। लौहरदुर्ग-दुग्धघात-वाणशालाप्रभृतयः दुर्गास्तत्र विशेषमुल्लेखनीया ननु। (8–16, 66)।

इत्थञ्च प्राचीनभारतस्य वास्तुकलायाः चरमोत्कर्षः राजतरङ्गिण्या नगर-प्रासाद-उपवन-प्राकार-मंदिर-दुर्ग-विहार-स्तूप-चैत्य-मठप्रभृतिभिः निश्चीयते।

## मूर्तिकला

मूर्तिकलायामपि राजतरंगिण्यां चित्रितं भारतं चरमशिखरे अशोभत। पदे-पदे कविः मूर्तीनां निर्माणस्य देवमूर्तीनां, प्रतिष्ठायाः, शिवलिंगानां च संकेतं करोति।

**शिव-प्रतिमाः**—वयं खलु असकृत् नन्दीश-विजयेश-भूतेश-बकेश-शतकपालेश-

---

(8) 3–354, 483, 5–120, 1–156, 57, 59।

(9) 1–130, 203। (10) 1–318, 329।

(11) 1–301, 2–119, 1–298, 4–70, 2–50. 1–247, 38, 57, 4–17, 19, 1–42, 195।

(12) 2–123, 1–105।

उग्रेश-ज्येष्ठेश्वर-अहीश्वर-गोकर्णेश्वर-ज्येष्ठरुद्र-नन्दिरुद्र-अर्धनारीश्वर-हर-गिरिजापति-उमापति-गौरीशंकर-शशांकेश्वर-खंडेन्दुमंडन–सुधासूतिमौलि–शशिशिखामणि–प्रभृति–नामभिः पूजितस्य शिवस्य प्रतिमानां स्थापनायाः वृत्तं, पूजावृत्तं च पठामः।[1] काश्चन मूर्तयस्तु अतीव हृदयावर्जिकाः भव्याश्चोल्लिखिताः, यथा हि प्रथमतरंगस्य द्वितीये श्लोके शिवस्य मूर्तिम् वर्णयन्नाह कविः—'तस्य भाले वह्निः वर्तते। ग्रीवायां सर्पाः सर्पन्ति श्रोत्रोयोः कुंडले शोभेते, कण्ठः गरलकान्ति धत्ते, वक्षः निष्कचुकं ननु, अर्धभागे च प्रिया पार्वती विराजते। तृतीय-तरंगे प्रियया सममालपतः शिवस्य भव्या मूर्तिर्वर्णिता। चतुर्थतरंगे पुनरपि अर्धनारीश्वर-शिवस्यैकाद्भुता मूर्तिर्वर्णिता, अर्धभागे च तस्य प्रिया वर्तते, केशेषु स्थितस्य सर्पस्य शरीरमपि दयितामूर्त्या युक्तं प्रतीयते।[2]

**विष्णु-प्रतिमाः**—उपेन्द्र-चक्रभृत्-केशव-चक्रधर-चक्रीप्रभृतिनामभिः कृतपूजनस्य विष्णोः प्रतिमा अपि अनेका वर्णिताः। एकस्यां विष्णुमूर्तौ विष्णोः हस्ते चक्रं विराजते, तेन च निहतयोः मधुकैटभयोः दैत्ययोः रुधिरेण तस्य ऊरुद्वयं रक्तमस्ति। स्वामिपदं संयोज्य विष्णु-पदवाच्यानां प्रतिमानामसकृदुल्लेखः दृष्टिपथमायाति।[3]

**इन्द्रः**—कुवेर-यम-गुह-किन्नरप्रभृतीनां वहुश उल्लेखः दृश्यते राजतरङ्गिण्याम्। एतेषां मूर्तयः मथुरासंग्रहालये मया दृष्टाः।

**बुद्धमूर्तयः**—कविः नैकबुद्धप्रतिमानामुल्लेखमकार्षीत्। प्रवरसेन-मातुलो जयेन्द्रः श्रीजयेन्द्रविहारं निर्माय तत्र बुद्धप्रतिमां प्रतिष्ठापितवान्। अतिविशालाकृतिरभूत् सा मूर्तिः, कांस्यनिर्मिता सा च हेमादिरचितभूषणैलंकृताभवत्। पश्चाच्च राजा क्षेमगुप्तः स्वशत्रोः नाशाय तं विहारमदाहयत्, तत्प्रतिमां चापसार्य क्षेमगौरीश्वरं तत्र समस्थापयत्। मेघवाहनपत्न्या भिन्नाख्यया-स्वनिर्मिते विहारे एकं बुद्धविम्वं विनिवेशितं, तद्धि अतिविशालं रमणीयं हृदयाह्लादकञ्चासीत्। जयापीडः जयपुरनगरं संस्थाप्य तत्र निर्मिते विशाले विहारे, तिस्रः बुद्ध प्रतिमाः स्थापितवान्। नयनानन्दिकाः विशालाकृतयः धातुनिर्मिता भव्याश्च ता आसन्। चतुर्थतरंगे परिहासपुरे एकस्याः अद्भुताया बुद्धमूर्तेः अपि कविः वर्णनं व्यधात्। सा प्रतिमा राज्ञो ललितादित्यस्यान्तिकमभूत्। तां चासौ नरपतिः गजस्कन्धमारोप्य मागधेभ्य आहृतवान्। संसार-सागरतरणोपाय इवामन्यत सा जनैः। धातु-निर्मितां, कपिशवर्णाम् द्योतमानां तां प्रतिमां भूपतेः प्राप्यः चंकुणः स्वविहारे विनिवेशितवान्। मूर्तेः आयसकटैः परिवेष्टितं सिंहासनमतीव रमणीयतां दधौ। परिहासपुरे एव कनक-निर्मितौ द्वौ विशालौ बुद्धावुल्लिखितौ। अष्टम-तरंगे एका दग्धा धूमश्यामा, सिंहासनशून्या अतिविशाला

---

(1) 1–123, 24, 30, 50, 105, 18, 329, 35, 48, 41, 182, 83, 347, 46, 124, 51, 127, 1–2, 36, 52, 32 7–1, 1–175, 279, 80, 82। (2) 1–2, 3–1, 4–1।

(3) 1–32, 26, 27, 38, 260, 62।



कुबेरप्रतिमा (पृ. २२३) श्रीनगरसंग्रहालये स्थिता अतिप्राचीना मूर्तिः



गङ्गा यमुना च अवन्तीश्वर - मन्दिरस्य भग्नावशेषेषु, स्थिता गङ्गा-यमुना मूर्तिः पृ. ७५, २३१



चामुण्डा (दुर्गा) श्रीनगर-संग्रहालये स्थिता अतिप्राचीना मूर्तिः पृ. २१६, २२८

# शिवलिङ्ग-पूजा



अमरेश्वर-तीर्थे हरमुक्त-पर्वतस्थितायां "अमरनाथ-गुहायाम्", हिमलिङ्गम्
पृ. २२२, २७३



विजयेश्वरतीर्थे वितस्तातटे, विजयेश्वर-मन्दिरस्य भग्नावशेषाः तत्र शिवलिङ्गं शोभते
पृ. २३३, २७४



विजयेश्वर-तीर्थात् [संप्रति बिजबिहारा] आनीतं श्रीनगरे संग्रहालये स्थापितमतिप्राचीनं शिवलिङ्गम्, पृ.२२२,२७४

वृद्धमूर्ति: दृष्टिपथमायाति । चतुर्थतरंगे वर्णिता अपरा वृहत्वुद्धस्य व्योमव्यापिनी, विशालाकारा, चतुरशीतिसहस्रै: प्रस्थपरिमाणै: कांस्यधातुभि: निर्मिता भव्या मूर्ति: वर्णिता ।[4]

**अन्य-मूर्तय:**—अनेकनामभि: प्रसिद्धानां शिव-विष्णु-प्रभृतीनां देवानां शतश: मूर्तीनां कविना वर्णनं विहितम् । अनेकासु विष्णु-प्रतिमासु विष्णो: विविधरूपाणि दृष्टि-पथमायान्ति । जयापीडस्य जयपत्तने विराजमानायां प्रतिमायां शेषनाग: तत्र शयानश्च भगवान् विष्णु: दृष्टिगोचरो जायते । दिग्विजयात् प्रतिनिवृत्तो ललितादित्य: अनेका: प्रतिमा: स्थापयित्वा, अद्भुतमेकं नगरं निर्माय, तत्र अखंडित-प्राकारं प्रासादञ्च विरचय्य, तत्र अत्यद्भुतां परमरमणीयां मार्तण्ड-प्रतिमां स्थापितवान् । लोकपुण्ये पुरमेकं कृत्वा नृपति: विष्णु-प्रतिमां प्रतिष्ठाप्य नैकविधं पूजाद्रव्यं ग्रामांश्च तत्पूजायां समर्पितवान् । वासवनगरीं, अमरावतीमपि हसन्तं परिहासपुरं निर्माय परिहासकेशवस्याद्भुतप्रतिमां स्थापितवान्, राजतमयी, कान्तिमयी सा मूर्ति: मुक्तामयभूषणानां ज्योतिर्दधौ । असौ पार्थिव: मुक्ताकेशवविष्णो: प्रतिमामपि स्थापितवान्, स्वर्णनिर्भिता, सा विष्णुनाभिजात-केसरवत् पीता वर्णिता । परिहासपुरे महावराहस्य चापि एका भव्या मूर्ति: अभूत् । कांचनमयो यत्कवचो रविप्रभां दधौ । अपि च तत्र रजतनिर्मितस्य श्रीगोवर्धनदेवस्य विम्बस्यापि नृप: प्रतिष्ठामकार्षीत् । तत् विम्वं गोदुग्धवत् धवलमभूत् । तत्रैव च चतुष्पंचाशतं हस्तोन्नतं पाषाणस्तम्भं, तच्छिरसि गरुडस्य भव्यां मूर्तिमकार्षीत् । अथ चासौ भूपति: स्वर्णस्य तोलानां चतुरशीतितहस्रमादाय, मुक्ताकेशव-प्रतिमामपि विरचितवान् । तावन्मात्रमेव च रजतं संगृह्य श्रीपरिहासकेशवं निर्माय स्थापितवात् ।[5]

**लिङ्गस्थापना**—सहस्रश: लिगानां वर्णनं, प्रतिष्ठापनायाश्चोल्लेख: अपि मूर्तिकलाया: चरमोत्कर्षम् दृढयति । द्वितीय-तरंगे वयं सहस्रशो लिंगानां स्थापनाया वर्णनं पठाम: । **शिवलिंग-सहस्रस्य प्रतिष्ठाकर्मणि प्रभो:** । 2–128 । पवित्रस्थानेषु, तीर्थेषु, पवित्रजलेषु चापि तेषां स्थापना व्यधीयत । कदाचित्तु वापीषु लिंगस्थापनमजायत "**तासु-तासु च वापीषु लिंगव्याजादरोपयत्**" न केवलं प्रस्तरैरेव अपितु हिमैरपि लिंगानि व्यधीयन्त । (हिमलिंगार्चनै) अमरेश्वरस्य शिवलिंगन्तु अद्यापि प्रसिद्ध, मयापि तत् विलोकितं अमरनाथ-यात्रा प्रसगे ।* शैवास्तावदासन् शिवलिगोपासका: प्राधान्येन । अन्ये जना अपि तत्पूजका अभूवन् अद्यापि च वर्तन्ते । राजतरंगिण्यां वर्णितेषु लिंगसहस्रेषु वाणलिंग-बटेश्वरप्रभृतीनि लिंगानि विशेषमुल्लेखनीयाया मूर्तिकलाया अद्भुतदृष्टान्ताश्च बभूवु: । अद्यापि भारतस्य संग्रहालयेषु बहूनि: प्राचीना: लिंगा:, विराजन्ते,

---

(4) 3–355, 6–172, 73, 3–464, 4–507, 259 से 264, 7–1097, 8–1184, 4–203 ।

(5) 4–508, 192 से 202 ।

* विलोक्यतां चित्रम् ।

श्रीनगर-संग्रहालये मयापि विशालमेकं लिंगं, बिजबिहारास्थाने चापि अतिपुरातनं लिंगं दृष्टम्* । 6

## चित्रकला

भारतीयचित्रकलायाः रम्यं रूपं, उल्लिखितेषु नैकविधचित्रेषु, प्रतिकृतिषु भित्तिचित्रेषु च दृश्यते । द्वितीयतरंगे कविः शिलायामुत्कीर्णाम् सहस्रलिंगीमुल्लिलेख । कल्हणेनापि सा दृष्टाभूदित्यनुमीयते ।

प्रमादात्तदनिष्पत्तौ शिलामुत्कीर्य कल्पिता ।
सहस्रलिंगी तद्भूर्यैः सर्वतोऽद्यापि दृश्यते ।।

अनेन तावन्निश्चीयते यत् भारते स्थाने-स्थाने शिला उत्कीर्य चित्राणि निर्मीयन्ते स्म । कांश्चित् श्लोकान् पठित्वा वयं स्पष्टमेव कविमनसि विद्यमानस्य चित्रस्य-कल्पनां कर्तुम् शक्नुमः । प्रथमतरंगस्य प्रथमे श्लोके कविः कल्पतरुं वर्णयति । यत्र एकतः सर्पमणिकान्तिचारुः शिवः विराजते मुक्ताश्च योगिनः तस्य ध्याने लीना दृश्यन्ते । द्वितीये श्लोके चापि शिवस्य चित्रस्य कल्पना कविमनस्यनुमीयते । भाले वह्नितेजो दधत् तृतीयनेत्रं विराजते, कर्णयोः कुण्डलौ वर्तेते वक्षः नग्नमस्ति, वामभागे वामा शोभते । एकस्मिन् अन्ये पद्ये च पार्वत्याः रमणीयं चित्रं चित्रितं, तस्मिन् गौरी विराजते, गणेशकार्तिकेयौ तस्या दुग्धपाननिरतौ स्तः । द्वितीयतरंगस्य प्रथम-पद्यस्य रचना-समये अपि कवेश्चेतसि शिव-चित्रस्य कल्पनासीत् । चित्रे अर्धनारीश्वरः शिवः शोभते, गोशृंगनिर्मित-धनुस्तस्य हस्ते विद्यते, गणेशः, शिवगणाश्च स्तुवन्तः तत्तसमीपे विराजन्ते, इत्यादिभिः श्लोकैः ज्ञायते यत् चित्र-कलायाः अप्रत्यक्षेण कविना संकेतः कृतः । एकस्मिन् पद्ये अश्वस्पर्शतः अंकितं हस्तचित्रं कविना वर्णितं तेनापि चित्र-कलायाः अस्पष्टकल्पना कर्तुम् पार्यते । एकं वस्त्रमपि पादचित्रांकितं वर्णितम् ।

इत्थञ्च सर्वासु कलासु भारतस्य चरमोन्नतिः कल्पयितुं शक्यते । दुर्दैवात् सर्वासां स्थापत्यमूर्तिचित्रकलानां शतशः संकेतान् दत्त्वापि तत्साधनभूतानां यन्त्र-तूलिकाप्रभृतीनां स्पष्टमुल्लेखं कविः नाकार्षीत् ।7

(6) 2–128 से 133, 138, 3–444 से 46, 7–185, 1–194 ।
(7) 2–129, 1–1, 2 29, 2–1, 1–249 । *विलोक्यतां चित्रम् ।

# भारतीय-संस्कृतौविद्या

**विद्या**—भारतीय-संस्कृतौ विद्यायाः सर्वाधिकं महत्त्वमस्ति । शिक्षा-सूचकः विद्या-शब्दः राजतरंगिण्यां बहुशः समागतः "**विद्या अवतारिताः**" पदेन प्रतीयते यत् तस्मिन् समये अपि सर्वाविद्यानामवतारः भारतवर्षे अभूत् । सर्वक्षेत्रेषु विद्यायाः महान् प्रचारः आसीत् । कश्मीरप्रदेशस्तु तदा प्रधानतमं शिक्षाकेन्द्रमासीत् । शिक्षा खलु मानवजीवनाय हितकारिणी अनिवार्या चेति मत्वा ऋषिभिः ब्रह्मचर्याश्रमे विद्योपार्जनस्योपदेशः कृतः तदनन्तरं चापि "**स्वाध्यान्मा प्रमदः**" इति तैरुपदिष्टम् । ऋषिमुनिभिः कोविदैश्च विद्यायाः मुक्तकंठं प्रशंसां विधाय तन्महत्त्वं प्रदर्शितम् । "**सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्**" । **विद्याधनं सर्वधनप्रधानम् । किं किं न साधयति कल्पलतेव विद्या** इत्यादि-वाक्यानि विद्यामहत्त्वं प्रदर्शयन्ति । विद्या-शून्यो नरः पशुतुल्यो निगदितः, शुनः पुच्छमिव, तज्जीवनं व्यर्थम् प्रतिपादितम् । (**विद्या-विहीनः पशुभिः समानः**), (शुनःपुच्छमिव व्यर्थम् जीवितं विद्यया विना) ।

विद्यायाः संख्याविषये न विद्यते कश्चिदुल्लेखः राजतरंगिण्याम्, किन्तु पौनपुन्येन प्रयुक्तः विद्याः शब्दस्तद्बहुत्वं साधयति । उपनिषत्सु चतुर्दशविद्यानां वर्णनं वरीवर्ति, विष्णुपुराणे शास्त्रं विद्या वा अष्टादशविधं प्रोक्तम् तद्यथा ।

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तारः ।**
**धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश ।**
**आयुर्वेदो धनुर्वेदः गान्धर्वश्चेति ते त्रयः ।**
**अर्थशास्त्रं चतुर्थम् च विद्या ह्यष्टादशैव ताः ।**[1]

**विद्यास्थानम्—आश्रमाः**-भारतीय-संस्कृतेः जन्मदात्रीणि प्रायेण वनान्युपवनानि वा स्वीक्रियन्ते न च नगराणि । महाकविः रवीन्द्रनाथो लिलेख 'भारतवर्षे सर्वाधिकमाश्चर्यमिदं खल्वस्ति यदत्र वनानि न च नगराणि, सर्वोत्कृष्टसंस्कृतेः स्रोतांस्यभवन् ।" वनेषु-चैतेषु निवसतां मुनिवराणामाश्रमा एव प्राधान्येन विद्याकेन्द्राण्यासन् प्राचीन-भारतवर्षे । राजतरंगिण्या भारते अपि आश्रमाणां परम्परा न लुप्तासीत् । यथा खलु राम-कृष्ण-सुदामा-भरत-प्रभृतयः वनेष्वेव विद्याभ्यासमकार्षुः तथैव कल्हणसमये अपि अनेकेषां राजकुमाराणां शिक्षा दीक्षा वनेष्वेवाभवत् ।

**विद्यलयाः**—विद्याप्रसाराय भारतवर्षस्य प्रायेण प्रत्येकं नगरे विद्यालया आसन् । "**विद्या-वेश्मानि तुंगानि**" (1–42) पदमत्र प्रमाणम् । ते वै ज्ञानदातारो विद्यालया आपातरमणीयाः विशालाश्चाभवन् । भारतवर्षे चापि कश्मीर-प्रदेशः सर्वोत्कृटं ज्ञानकेन्द्रमभवत् । त्रिविधं वस्तु तत्र सामान्यं निगदितं कल्हणेन ।

विद्यावेश्मानि तुंगानि कुंकुमं सहिमं पयः ।
द्राक्षेति यत्र सामान्यमस्ति त्रिदिवदुर्लभम् ।।1–42

---

(1) सुभाषितरत्नभांडागारः पृ० 30, 2, 13, 14, 8 श०क०द्रु०भा० 4 पृ० 383 ।

विजयेश्वरक्षेत्रे (सम्प्रति बिजबिहारा) तावदेकः विशालः विश्वविश्रुतश्च विश्वविद्यालय आसीत् । कश्मीरभ्रमणकाले विजविहारानिवासिना श्रीमता ज्योतिषाचार्येण पं० प्रेमनाथ महोदयेनास्य विश्वविद्यालयस्येतिहासः प्रदर्शितः आसीत् । विद्यादेवी, सरस्वती हंसरूपमाधाय, कश्मीराणामेव भेड़गिरेः शृंगे न्यवसत्, सा एव शारदाप्यकथ्यत, ताञ्च शारदादेवीं विलोक्य कविसेविता वाणी प्रवाहमाधुर्यादिगुणयुक्ताभूत् "**तंरगिणी मधुमती वाणी च कविसेविता ।**" 1–37 ।

**विहाराः**—बौद्धानां महान् प्रभावः दृश्यते राजतरंगिण्यां तेषां निवासभूतेषु विहारेष्वपि विविध-विद्या अदीयन्त । नालंदा-तक्षशिलेति प्रसिद्धौ प्राचीन-विश्वविद्यालयौ नैकविहारैः युक्तौ आस्तां तावपि प्रमाणयतः यत् प्राचीन-भारते विहाराः खलु महत्त्वपूर्णानि शिक्षा-केन्द्राण्यभवन् । राजतरंगिण्यां नैकेषां बौद्धगुरूणामप्युल्लेखः विद्यते । (3–12) विहारेष्वेव छात्रालया अप्यभूवन् । (8–2416) ।

**मठाः**—बौद्धानां जैनानां च मठा अपि बहव उल्लिखिताः सन्ति, यत्र गुरुशिष्याणां निवासस्य स्पष्टं सूचना प्राप्यते । तेषु चापि विविधप्रकारा शिक्षा प्रादीयत । कोषेषु मठाः छात्रालया निगदिताः सन्ति राजतरंगिण्यामपि तस्य पुष्टिर्भवति । स्थापत्यकला-प्रसंगे मया तेषां विहाराणां मठानाञ्च संकेतः कृतोऽस्ति, यत्र शिक्षाभवत् ।

**प्रासादाः**—राज्ञां प्रासादेष्वपि विद्या दीयते स्म । बहवस्तत्र वर्तन्ते उल्लेखाः यैः प्रतीयते यत् गुरवः प्रासादेष्वागत्य शिक्षां ददुः । राज्ञः जलौकस्य गुरुः अवधूतः अभवत् यो वै प्रासादे एव राज्ञे ज्ञानोपदेशं ददौ । प्रासादे निवसता एव राज्ञा नन्दिपुराणमाकर्णितम् । खिंखिलापरनामधेयस्य नृपतेः नरेन्द्रादित्यस्य गुरुः उग्रः अवर्तत । प्रासादे एव च निवसन् स नृपमपाठयत्, उग्रेशं मातृचक्रञ्च व्यदधात् । हर्षः प्रासादे एव स्वशिष्याय कनकाय संगीत-शिक्षां ददौ ।

**गृहम्**—धनिकानां बालकानां शिक्षा गृहे एवाभवत् । तत्रैवागत्य शिक्षकास्तान् शिक्षयन्ति स्म । मेरुवर्धन-मंत्रिणः बालस्य शिक्षा गृहे एवाभवत् (5–470 ।

**मंदिरम्**—मन्दिरेष्वपि शिक्षा दीयते स्म । (सरस्वती-कुल-मंदिरम्) 5–159 । इत्थञ्च राजतरंगिण्या भारते आश्रम-विद्यालय-विहार-मठ-प्रासाद-गृह-मंदिराणि शिक्षा-स्थानान्यासन्निति निश्चीयते ।[2]

**शिक्षकः** - विद्यादाता शिक्षकः कथ्यते स्म । स एव गुरु-उपाध्याय-आचार्य-ज्ञानोपदेशकृत्-प्रभृतिभिर्नामभिः उल्लिखितः राजतरंगिण्याम् । शिक्षकः गुरुर्वाकीदृशः स्यादिति कैश्चित् पदैः ज्ञायते. ज्ञानोपदेशकृत्, दिव्यानुग्रहभाक् प्रभावोदग्रविग्रहः इत्यादीनि कानिचिन् पदानि गुरवे प्रयुक्तानि कल्हणेन । गुरुः ज्ञानस्योपदेशस्य च कर्ता भवेत्। उभयञ्च तदैव संभवति यदा स दिव्यायाः वाग्देव्याः शारदायाः अनुग्रहभाक् भवेत् । सरस्वत्या अनुग्रहश्च तदुपासनया एव प्राप्तुं शक्यते । तञ्चानुग्रहं प्राप्यैव गुरुः उदग्रप्रभावो भवति । सर्वत्र च सम्मानं लभते । एतेन चेदं निर्णीतं यत् ज्ञानदाता पूर्वम् तावत् अधीतसर्वशास्त्रः स्यात्, तदनन्तरं संगृहीतं ज्ञानं सामान्यजनेषु

(2) कालिदास के ग्रन्थों पर आधारित भारतीय संस्कृति पृ० 379 । राज० 1–42, 35, 112, 123, 348, 5–470, 78, 5–28, 29, 4–80, 5–29 ।

प्रसारयेत् । स्वयं यदि स अज्ञानी अल्पज्ञो वा भवेत्तर्हि स क्षीणप्रभावः अल्पप्रभावः स्यात् । उपदेशपदेन चरित्रशिक्षापि संकेतिता विद्यते, दृढ़चरितो जन एव उपदेशदातृपदं प्राप्तुमर्हति । तत्पदं च प्राप्तुं, गुरुः वेद-उपनिषद्-रामायण-महाभारत-पुराण-स्मृति-गीतादिग्रन्थान् अधीयीत, चरित्रं च सुदृढ़ं कुर्यात् । इत्थञ्च गुरुः उदात्तगुणः, गम्भीरः शास्त्राचार-ज्ञानवान् प्रभावशाली शीलादियुक्तः च स्यादिति निश्चीयते । तदैव स वास्तविकः आचार्यः भवितुं शक्नोति । विद्याप्रदानं धर्मचरित्रोपदेशश्च गुरोः प्रधानं कर्त्तव्यमस्ति । अस्मिन् कर्तव्यपालने एव तज्जीवनादर्शो निहितः खलु । चन्द्राचार्य-अवधूत-उग्रप्रभृतयः शिक्षका एतादृशा एव आदर्श-शिक्षका अभवन् । विद्यायां कृतभूरिपरिश्रमा एव ते ज्ञानं प्रसारयामासुः ।[8]

**समाजे शिक्षस्य स्थानम्**—समाजे शिक्षस्य गौरवपूर्णम् निरतिशयसम्मानपूर्णम् च स्थानमासीत् । महाकविः कालिदासः सूर्येण समं गुरोः तुलनां विधाय सूर्यवत् तस्य पूज्यस्थानं प्रतिपादयति । यथा खलु सूर्यः तमो विनाश्य स्वालोकेन सुप्तं जगदुद्बोधयति, तथैव गुरुः अज्ञानतमो छित्वा मनुष्याय नवीनदृष्टिं ददाति । कल्हणस्तावत् कालिदासस्यानेन विचारेण सहमतः प्रतीयते । गुरवः अपि मन्त्रिपदे प्रतिष्ठाप्यन्ते स्म राजभिः, समानाधिकारस्तेभ्योऽदीयत । गुरोः उग्रस्य स एवाधिकार आसीत् राज्यशासने, यथा राज्ञः अत एव स अपि स्वनाम्ना उग्रेशमंदिरम् मातृचक्रं च चकार । चङ्कुणः अपि स्वनाम्ना चङ्कुणविहारमकारयत् । अतः गुरोः सम्मानः स्पष्ट एव । गुरूणां निवासस्य व्यवस्था राजभिरेव व्यधायि । नासीत् तत्कृते निश्चितं किंचित् वेतनं, स तु यद्धनं ययाचे तत् प्राप । स्वयमपि राजा गुरुभ्यः हेम-रत्नादिराशिं ददौ । वस्तुतः गुरुस्तु शिष्यस्य भक्त्या एव प्रमुदितः बभूव । भक्तिमेव च गुरुदक्षिणां मेने । राजसभायां विद्वान् गुरुः सम्मानं उच्चासनञ्च प्राप ।5–33

**छात्रः**—छात्रः एव विद्यार्थी निगद्यते स्म । तस्य गुणेषु विनम्रता सद्व्यवहारश्च आवश्यको मन्यते स्म । आश्रमे निवसन् ब्रह्मचारी छात्रः दंडं, दधौ । फलपुष्पैरेव स्वजीविकामचालयत् । छात्रा गृहस्थेभ्यः भिक्षामानीय गुरुभ्यः ददुः, पुनश्च तत एव भोक्तुं किंचित् प्रापुः । छात्राणां दिनचर्या सुनिश्चितासीत् । प्रातरुत्थाय गुरुवन्दनं विधाय शौचादिकार्याणि सम्पाद्य ते सन्ध्यावन्दनादिकमकार्षुः । ततश्चाध्ययनं चक्रुः गुरुमुखात् । सर्वस्मिन् दिवसे विविधं शिक्षणं प्राप्य सायंकाले भिक्षाटनं चक्रुः । सूर्यास्तमनवेलायां सन्ध्यादिकमकार्षुः विधाय च निद्रामवापुः । शिक्षारम्भः प्रायेण पंचवर्षाणामायुषा एव बभूव । पंचदश षोडश विंशतिः वा वर्षाणाभवत् विद्याकालः, यस्मिन् समये छात्रः पूर्णब्रह्मचर्यव्रतस्य पालनमकार्षीत् । छात्राणां वेषे, कौपीनं, वल्कलश्चासीत् । शिरसि जटाः ते धारितवन्तः, मुंडितमुंडा वा सन्तः केवलं शिखां दधुः । दंडस्तेषां पलाशस्याभूत् । गुरोः सेवा आज्ञापालनं छात्रस्य प्रधानं कर्त्तव्यमगण्यत ।

---

(3) 1–112, 348 176 ।

**शिक्षा-विषयाः**— कल्हणः अध्ययनस्य सर्वान् विषयान् विद्यापदेन एव संकेतितवान् । शास्त्रेषु विद्या क्वचित् त्रिविधा, क्वचित् चतुर्धा कुत्रचिच्चचतुर्दश-प्रकारका निगदिता । त्रयीविद्यायां वेद-वार्ता-दंडनीतिश्च गण्यते । वेदपदेनैव छन्दो-मन्त्र-निरुक्त-ज्योतिष-व्याकरण-शिक्षा-ब्राह्मण-उपनिषद्-आरण्यकप्रभृतयः गृह्यन्ते । उपवेदे धनुर्वेदः, आयुर्वेदः,स्मृतिशास्त्रं, इतिहासः, काव्यं, पुराणं च सर्वमपि संगृह्यते । वार्तायां कृषिव्यापारौ, दंडनीतौ च राजनीतिः समायाति । दंडनीतावपि संभवतः कौटिल्यार्थशास्त्रं, कामन्दकस्य नीतिशास्त्रं, उशनसः सूत्राणि च आसन् । चतुर्विधायां विद्यायान्तु आन्वीक्षिकी-वार्ता-त्रयी-दंडनीतिश्चायान्ति । यथा चाह मल्लिनाथः -

आन्वीक्षिकी त्रयी वार्ता दंडनीतिश्च शाश्वती ।
एता विद्याश्चतस्रस्तु लोकसंस्थिति-हेतवः ।।

आन्वीक्षिकी-विद्यायां दर्शनं तर्कश्च, त्रयीविद्यायां, वेदाः वेदांगाश्च, वार्तायां व्यापारः दंडनीतौ च राजनीतिरित्येवं परिगण्यन्ते । वार्ता-त्रयी-दंडनीतीनां नाम्नोल्लेखः कल्हणेन कृतः, कौटिल्यमतानुसारं. आन्वीक्षिक्यां सांख्य-योगौ-लोकायतदर्शनं चायाति ।

राजतरंगिण्यां प्रायेण सर्वेषामप्येतेषां विषयाणां संकेताः विद्यन्ते । इमे खल्वासन् अध्ययन-विषयाः राजतरंगिण्याः भारते ।

**वेदः** --वेदशब्दस्य नाम्नोल्लेखः वेद-श्रुति-आम्नाय-पदेन कविना कृतः । ऋग्वेदस्य उदात्तानुदात्तादिस्वराणां संकेतः कविना कृतः । वेदेभ्य आगमशब्दः प्रयुज्यते स्म । बौद्धाः वेदानां प्रबला विरोधिनः विखंडकाश्चासन्निति प्रसिद्धम्, वेदेभ्यस्तेषां विरोधस्योल्लेखः "आगमद्विषः" पदेन वर्तते । "**क्रियां नीलपुराणो-क्तामच्छिन्दन् आगमद्विषः**" किंच अनेकेषां यज्ञानामुल्लेखः संगीतविद्यायाश्च विविधगानानामुल्लेखः यजु-सामवेदयोरध्ययनं सूचयति । सामगानसमये मदिरापान-निषेधः आसीत् "**न विप्रगुरवः साम गायन्तो मदिरां पपुः**" ।।6–10।।

**स्मृतिः**–स्मृतीनामपि उल्लेखः कल्हणेन कृतः "**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः ।**" एददनुसारं स्मृतिः धर्मशास्त्रमेवास्ति । उभयमपि कविना स्पष्टशब्देषू-ल्लिखितम् । न्यायसमये धर्माधिकारिणः धर्मशास्त्रं व्यलोकयन् । (7–1582, 83) ।

**उपनिषद्** --उपनिषदः अपि नाम्नोल्लेखो वरीवर्ति । उपनिषदां परमतत्वस्य आत्मनः परमात्मनः जीवस्य च संकेतः बहुशः समायातः । तासां परमतत्वं ब्रह्म अपि नैकवारमुल्लिखितम् ।

**भगवद्गीता**– एकस्मिन्नेव पद्ये गीताया उल्लख आस्ते । भक्ति-कर्मयोग-ज्ञानयोग-अवतार-क्षेत्र-क्षेत्रज्ञ-ज्ञानप्रभृतयः गीताया विषयाः, सिद्धान्त-प्रतिपादकाः शब्दाश्च पौनः पुन्येन राजतरंगिण्यां विद्यन्ते । (5–175) ।

**ज्योतिषम्**— ज्योतिषशास्त्रं खलु महत्त्वपूर्णः अध्ययन-विषय आसीत् । कविना वाराहमिहिरस्य ज्योतिषसंहितायाः केषांचित् सिद्धान्तानामुल्लेखः कृतः अस्ति । प्रथमतरंगस्य श्लोकद्वयं स्पष्टतः ज्योतिषशास्त्रस्य सत्तां प्रतिपादयति । सप्तमाष्टतरंगयोः अपि अस्य शास्त्रस्य बहवः संकेता विद्यन्ते ।

**व्याकरणम्** – व्याक्रियन्ते शब्दा अनेनेति व्याकरणम् । व्याकरणस्य संस्कृत-भाषाया ज्ञाने सर्वाधिकमहत्त्वपूर्णम् स्थानमस्ति । पाणिनेः व्याकरणस्य, महाभाष्यस्य (4–635, 36) चन्द्राचार्यादिनिर्मितस्य व्याकरणस्य च स्पष्टमुल्लेखः, तत्प्रचारस्य

अध्ययनस्य च वर्णनं प्राप्यते राजतरंगिण्याम् । राजा अभिमन्युः चन्द्राचार्य-प्रभृतीनां विदुषां साहाय्येन स्वराज्ये महाभाष्यस्य प्रवर्तनं चकार । (1–176)

**पुराणम्** – पुराणं खलु पंचमो वेद इति विद्वांसो निगदन्ति । भारतीय-संस्कृतौ पुराणानां गौरवपूर्णाम् स्थानमस्ति । सर्वकालेषु येषामध्ययनमपि भारते अभूत् । राजतरंगिण्यां पुराणकथानां शतशः संकेताः, तीर्थानामुल्लेखाः तेभ्यः गृहीतानामनेकराज्ञाञ्च संकेताः पुराणानामध्ययनमेव सूचयन्ति । भूमिकायां कविराह यत् तेन नैकराज्ञां नामानि नीलपुराणात् लब्धानि । तस्य पुराणस्य क्रियाः समस्तभारते प्रचलिताः आसन् । एतेन तेषां प्रचारस्याध्ययनस्य च सूचना लभ्यते ।

**इतिहासः** -- भारतस्य इतिहासकारेषु कल्हणः सर्वप्रथमः इतिहासकारो वर्तते । स वै स्वग्रन्थलेखनात् पूर्वम् नैकानितिहासग्रन्थान्, प्रशस्तिपट्टानि ताम्रपत्राणि च अपश्यत् । कल्हणसमये सुव्रतस्येतिहासप्रबन्धः, क्षेमेन्द्रस्य नृपावलिः, अन्यैश्च बहुभिः कोविदैः विरचिताः राजकथाश्रया इतिहासग्रन्थाः पाठ्यन्ते स्म, कल्हणः अपि सर्वान् तानधीतवान् । नीलमुनेः नीलपुराणमपि महत्त्वपूर्णः इतिहास-ग्रन्थः आसीत् तस्य चाध्ययनं समस्तभारते बभूव ।

**रामायणम्-महाभारतञ्च** – रामायणं तत्कथा च समस्त-भारतवर्षे प्रथिता । पुराकालदद्यावधि सोत्साहं सोल्लासं च भारतदेशे रामायणमधीयते । तदध्ययनं पुण्योत्पादकं चामन्यत । राजतरंगिण्यां रामायणस्य शतशः संकेतास्तदध्ययनं सूचयन्ति । एकस्मिन्नेव दिवसे तस्य पाठेन पापशान्तिः संभवतीति पद्येनैकेन ज्ञायते । महाभारतस्यापि घटनानां शतशः संकेताः तत्प्रधान-पात्राणाञ्च पौनः पुन्येनोल्लेखाः तस्य प्रचारं साधयन्ति ।

**बौद्ध-साहित्यम्** शिक्षायां बौद्धसाहित्यस्याध्ययनमपि व्यधायि । राजतरंगिण्यां स्थाने-स्थाने बौद्धानां प्रभावः अपि दृष्टिपथमायाति । भगवतो बुद्धस्य, बोधिसत्वस्य निर्वाणकालः अप्युल्लिखितः । शतशः बौद्धविहाराणां वर्णनमपि तत्रास्ति । बहवः बौद्धमतावम्बिनः राजानः अपि संकेतिताः सन्तिः । हुष्क-जुष्क-कनिष्क-नागार्जुनप्रभृतिभिः नृपैः बौद्ध-शिक्षायाः प्रचारे प्रसारे च महान् प्रयासो विहितः । अनेकेषां बौद्ध-मठानामुल्लेखः अपि बौद्धसाहित्याध्ययनमनुमापयति । बोधिसत्वानां कार्यम् चरितञ्चापि कविना वर्णितम् । एकस्मिन् पद्ये च बौद्धभाषाया अपि संकेतः प्रदतः । कृत्यादेव्याः तस्याः विहारस्य कथापि च बौद्धसाहित्य-प्रचारमनुमापयति ।[4]

**साहित्य-शास्त्रम्**— साहित्यशास्त्रस्य अध्ययनं सर्वत्र प्रचलितमासीत् । राजतरंगिण्यां विद्यमानाः तस्य सिद्धान्ता एव तत्र प्रमाणं ते च मया काव्यकला-प्रसंगे सम्यक् वर्णिताः । वामन-शंकुक-आनन्दवर्धन-प्रभृतीनामाचार्याणामपि विद्यते उल्लेखस्तेषां ग्रन्थैः समम् ।

**कामशास्त्रम्**— कामसम्बन्धिनः अनेके विचारा विराजन्ते राजतरंगिण्याम् । कामशास्त्रकर्ता सुनन्दः अपि कल्हणेनोल्लिखितः । कुट्टिनीमतस्य तत्कर्तुश्चापि नाम कविना प्रदत्तम्

(4) रघुवंश टीका—18–50, अर्थशास्त्री शास्त्री–अनुवादः पृ० 6, राज. 1–178, 6–10, 1–56, 76, 16, 178, 183, 186, 9 से 20, 166, 112, 171 172, 177, 178, 181, 184, 168, 169, 170, 177, 134, 125 से 139, 131 से 147, 4–496, 8–228, 7–1529 ।

**दर्शनानि**—धर्म-दर्शन-तरंगे मया, सर्वेषामास्तिक-नास्तिक-दर्शनानां सिद्धान्ताः प्रतिपादिताः सन्ति तेषाञ्च राजतरंगिण्या भारते प्रचार आसीदिति लिखितम्। स प्रचारः दर्शनानामध्ययनं सूचयति।

**काव्यानि-नाटकानि च**— भास-कालिदास-बाण-बिल्हण-मंख-भवभूतिप्रभृतीनां महाकवीनां काव्यानां प्रचारः मया काव्य-नाट्य-कलाप्रसंगे, कल्हणस्य-अध्ययनं इति शीर्षके च प्रदर्शितः बहूनि तत्त्वानि, विशेषताः सिद्धान्ताश्चापि प्रदिपादिताः सन्तिः।

**कलाः** - विविधकलानां शिक्षा भारतवर्षे चरमोत्कर्षे आसीत् **'भारतीय-कलाः'** इत्याख्ये तरंगे मया काव्य-नाट्य--संगीत-नृत्य-चित्र-स्थापत्यकलानां विस्तरेण वर्णनं कृतं तच्चैव, तासां कलानां शिक्षायाः द्योतकं ननु **'लेखनकलायाः'** अपि विकासः अभवत्। आदेशाः विलिख्य प्रेष्यन्ते स्म।

**शस्त्रविद्या-राजनीतिश्च**—राजतरंगिण्यां युद्धस्य शतशः उल्लेखा समागताः बहूनि शस्त्राणि, अस्त्राणि चोल्लिखितानि नैके युद्धविधयः प्रदर्शिताः, युद्धप्रकाराश्च वर्णिताः। तन्न संभवति शस्त्रविद्याया प्रचारात् ऋते। सर्वेभ्यः राजसूनुभ्यः सा विद्या अनिवार्या बभूव। राजनीतेरपि महान् प्रचारः सम्भाव्यते। तामधीत्यैव राजानः राज्यसंचालने समर्था बभूवुः। **'राजनैतिक-जीवनं इति प्रसंगे** यत् लिखितं तत् राजनीतिविद्याप्रसारं सूचयति। राज्ञे राजतंत्रोपदेशः अदीयत। (4–720)।

एतदतिरिक्तं **खार्खोदविद्या, मंत्रविद्या वा, मणिविद्या, रसविद्या, पौंश्चलीय-विद्या, शकुनविद्या, स्तोत्रविद्या, आयुर्वेदः, हयविद्या, स्वरोदयशास्त्रं, योगविद्या, व्यायामविद्या, शब्दविद्या, अभिचारविद्या, विविधभाषाज्ञानं**, प्रभृतयः विद्या अपि भारते प्रचलिताः आसन्।

इत्थञ्च सिद्धं यत् भारतवर्षे विद्याया-अनेके विषया अधीयन्ते स्म। विद्वांसश्चाध्यापकास्तदासन्। प्रथने तरंगे मया **कल्हणस्याध्याध्यनम्** इति शीर्षके अपि अनेकेषां विद्याविषयाणामुल्लेखः विस्तरेण कृतस्तत्रैवावशिष्टा विषया दृष्टव्याः।[5] विद्यायां धर्मार्थकाममोक्षाणां चतुर्षु वर्गेषु ध्यानमदीयत।

**शिक्षा-साधनानि**—शिक्षायाः साधनानि पुस्तकानि, (3–261) लेखनी, पत्रं, मसिश्च प्रधानरूपेण वर्तन्ते। सर्वाण्यापि तदा सुलभान्यासन्, उपरि खलु ये विद्या-विषया वर्णिताः सन्तिः तेषां सर्वेषां ग्रन्थाः भारतवर्षे प्रचलिता आसन् काष्ठ-लेखनीनां, मसिपात्रस्य (7–40) पत्राणां भुर्जपत्राणां, खडिकानां (7–508) चापि बहव- संकेताः प्राप्यन्ते राजतरंगिण्याम्।

शिक्षा-क्षेत्रे भारतवर्षम् सर्वदेशानामग्रगण्यमासीत्। सहस्रशः विदेशिनो विद्यार्थिनः विद्यालाभायात्र समागच्छन्। विद्याया सर्वक्षेत्रेषु भारतवर्षम् संसारस्य गुरुरासीदिति सगर्वमुक्तुमनुमातुं च वयं शक्नुमः।

□□□

1–337, 3–190, 206, 208, 367, 4–94, 8–1595 4–599, 4–103, 3–465, 249 से 251, 246 36 3, 663, 3–222, 4–101, 106, 7–1146, 4–2645, 7–796, 8–74, 2322, 1071, 4–488, 89, 5–239, 4–88, 7–1670, 5–206, 8–3485, 3201, 3–320।

